**चारुदत्तः**—वयस्य,

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥

**विदूषकः**—भो वअस्स, अलं संतप्पिदेण । पणइजणसंकामिदविहवस्स सुरजणपीदसेसस्स पडिवच्चन्दसस्स विअ परिक्खओ वि दे अहिअदरं रमणीओ । (क)

**चारुदत्तः**—वयस्य, न ममार्थान्प्रति दैन्यम् । पश्य ।

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥ १२ ॥

**विदूषकः**—भो वअस्स, एदे क्खु दासीए पुत्ता अत्थकल्लवत्ता वरडाभीदा विअ गोवालदारआ अरण्णे जहिं जहिं ण खज्जन्ति तहिं तहिं गच्छन्ति । (ख)

**चारुदत्तः**—वयस्य,

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।

---

(क) भो वयस्य, अलं संतप्तेन । प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतरं रमणीयः ।

(ख) भो वयस्य, एते खलु दास्याः पुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति ।

---

कतरत् । रोचते प्रीतम् ॥ **दारिद्र्यादिति** । अल्पसमयदुःखदत्वान्मरणमल्पक्लेशम् । बहुसमयव्यापित्वादाकाङ्क्षितापगमाद्दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥ संतप्पिदेण संतप्तेन । प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतरं रमणीयः । यद्यसद्व्ययेनार्थाः स्वदोषेण नाश्यन्ते तदा संतापः क्रियते । तव तु न तथेति भावः । प्रणयी जनः स्निग्धबान्धवोऽर्थी च ॥ **एतदिति** । क्षीणार्थमितिकृत्वास्मद्गृहमतिथयः संत्यजन्ति । एतन्मां दहति । कालात्यये मदसमयापगमे धनलाभसमयापगमे च ॥ १२ ॥ एदे क्खु एते खलु । दासीपुत्रा अर्थरूपप्रातराशाः । वरटा 'वीरणी' इति ख्याता । तत्त्रस्ताः । अरण्ये गोपालपुत्रका इव यत्र यत्र न खाद्यन्त उपभुज्यन्ते तत्र तत्र यान्ति ॥ **सत्यमिति** । विभवनाशकृता मम चिन्ता नास्ति । कथमित्यत आह—

एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १३ ॥

अपि च ।

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ १४ ॥

विदूषकः—भो वअस्स, तं ज्जेव अत्थकल्लवत्तअं सुमरिअ अलं संतप्पिदेण । (क)

चारुदत्तः—वयस्य, दारिद्र्यं हि पुरुषस्य
निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ १५ ॥

तद्वयस्य, कृतो मया गृहदेवताभ्यो बलिः । गच्छ । त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर ।

---

(क) भो वयस्य, तमेवार्थकल्यवर्तं स्मृत्वालं संतापितेन ।

---

भाग्यक्रमेण लब्धव्यक्रमेण धनानि भवन्ति । तर्हि चिन्ता कुत इत्यत आह—एतत्तु मां दहति यन्नष्टधनाश्रयस्य मम सौहृदादपि मैत्रीतोऽपि जनाः शिथिलीभवन्ति । अर्थशून्येन समं प्रयोजनाभावान्मैत्रीमपि न केऽपि कुर्वते ॥ १३ ॥ **दारिद्र्यादिति** । लज्जा गच्छति, आकाङ्क्षितासामर्थ्यात् । यदा लज्जा गता तदा तेजसः प्रभ्रष्टो भवति, यावत्तावत्कारणात् । तेजःशून्यः परिभूयते, भयाभावात् । परिभवान्निर्वेदं गच्छति, मानम्लानेः । ततः शुचमेति, वृथा जीवनमिति । ततस्त्यज्यते बुद्ध्या । निर्बुद्धिः क्षयं गच्छति । तदुक्तम्—'बुद्धिनाशात्प्रणश्यति' इति । अत एव सर्वासामापदां स्थानमित्युपसंहरति ॥ १४ ॥ कल्लवत्तअं प्रातराशः । एतद्रूपत्वे चार्थस्य तावद्रूपद्रव्यत्वाज्जनान्तरानवगाहितत्वाच्च तद्विस्मृत्य धर्मचित्ताः साधवो भवन्तीत्याशयः ॥ **निवास इति** । चिन्ताया निवासः । कथं मम निर्वाहः स्यादित्येवंरूपायाः । परस्य परिभव इति षष्ठीसमासः, कर्मधारयो वा । एतच्चाविश्वसनीयतया निर्धनानां ज्ञेयम् । जुगुप्सा मित्राणामिति, प्रत्युपकारासमर्थत्वात् । स्वजनानां बन्धूनाम्, जनानामन्येषामुदासीनानाम् । करणं कृतिः । कर्तरि करणे वा ल्युट् । भवति चेति चकारो हेतौ ।

**विदूषकः**—ण गमिस्सम् । (क)

**चारुदत्तः**—किमर्थम् ।

**विदूषकः**—जदो एव्वं पूइज्जन्ता वि देवदा ण दे पसीदन्ति । ता को गुणो देवेसुं अच्चिदेसुं । (ख)

**चारुदत्तः**—वयस्य, मा मैवम् । गृहस्थस्य नित्योऽयं विधिः ।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः, किं विचारितैः ॥ १६ ॥

तद्गच्छ । मातृभ्यो बलिमुपहर ।

**विदूषकः**—भो, ण गमिस्सम् । अण्णो को वि पउञ्जीअदु । मम उण बम्हणस्स सव्वं ज्जेव विपरीदं परिणमदि । आदंसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा । अण्णं अ एदाए पदोसवेलाए इध राअमग्गे गणिआ विडा चेडा राअवल्लहा अ पुरिसा संचरन्ति । ता मण्डूअलुद्धस्स कालसप्पस्स मूसिओ विअ अहिमुहावदिदो वज्झो दाणिं भविस्सम् । तुमं इध उवविट्ठो किं करिस्ससि । (ग)

---

(क) न गमिष्यामि ।

(ख) यत एवं पूज्यमाना अपि देवता न ते प्रसीदन्ति । तत्को गुणो देवेष्वर्चितेषु ।

(ग) भोः, न गमिष्यामि । अन्यः कोऽपि प्रयुज्यताम् । मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति । आदर्शगतेव छाया वामतो दक्षिणा दक्षिणतो वामा । अन्यच्चैतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः संचरन्ति । तस्मान्मण्डूकलुब्धस्य कालसर्पस्य मूषिक इवाभिमुखापतितो वध्य इदानीं भविष्यामि । त्वमिह उपविष्टः किं करिष्यसि ।

---

वनगमने कलत्रपरिभवो हेतुः ॥ १५ ॥ न गमिष्यामि ॥ एवं पूज्यमाना अपि देवा न फलं दर्शयन्ति । तत्को गुणोऽर्चितेषु देवेषु ॥ नित्योऽयं विधिः । अकरणे प्रत्यवायात् । **तपसेति** । तुष्यन्ति परलोकमुत्कृष्टं प्रयच्छन्ति । यतः श्राद्धकृदतिथिप्रियो गृहस्थोऽपि मुच्यत इति भावः ॥ १६ ॥ अन्यः कोऽपि प्रयुज्यताम् । मम सर्वमेव विपरीतमुपनमति । आदर्शगता छायेव । आदर्शस्थप्रतिबिम्बे वामो भागो दक्षिणे दृश्यते, दक्षिणश्च वाम इति वस्… अन्यच्चैतस्यां प्रदोषवेलायामत्र राजमार्गे गणिका विटाश्चेटा राज… हि—

**चारुदत्तः**—भवतु । तिष्ठ तावत् । अहं समाधिं निर्वर्तयामि ।

(नेपथ्ये ।)

तिष्ठ वसन्तसेने, तिष्ठ ।

(ततः प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना ।)

**विटः**—वसन्तसेने, तिष्ठ तिष्ठ ।

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि ॥ १७ ॥

**शकारः**—च्यिष्ठ वशन्तशेणिए, च्यिष्ठ ।

किं याशि धावशि पलाअशि पक्खलन्ती
वाशू पशीद ण मलिस्सशि चिट्ठ दाव ।
कामेण दज्झदि हु मे हडके तवश्शी
अङ्गाललाशिपडिदे विअ मंशखण्डे ॥ १८ ॥ (क)

**चेटः**—अज्जुके, चिट्ठ चिट्ठ ।

उत्ताशिता गच्छशि अन्तिका मे शंपुण्णपच्छा विअ गिम्हमोरी ।

---

(क) तिष्ठ वसन्तसेनिके, तिष्ठ ।
किं यासि धावसि पलायसे प्रस्खलन्ती
वासु प्रसीद न मरिष्यसि तिष्ठ तावत् ।
कामेन दह्यते खलु मे हृदयं तपस्वि
अङ्गारराशिपतितमिव मांसखण्डम् ॥

---

सन्ति । एतेन विटादीनां प्रवेशं सूचयति । 'नासूचितस्य प्रवेशः' इति । मण्डूकलुब्धस्येव कालसर्पस्य मुखापतितो मूषिक इव वध्यो भविष्यामि ॥ **किं त्वमिति** । विशदौ संचरणलाघवगुणान्वितौ । पटू इति यावत् । उद्विग्नचञ्चलकटाक्षरूपेण विसृष्टा दृष्टिर्यया सा तथा । अनुसारोऽनुगमनम् । व्याधेन यदनुगमनं तेन त्रस्ता मृगीव ॥ १७ ॥ शकारभाषायां चवर्गशिरस्थितोऽन्तस्थो यकारो लेख्यः । 'पूस्पृष्टा तालव्य' इति वचनात् । स च संयोगः प्रयत्नलाघवात्पूर्वस्य गुरुत्वं न करोति । च्यिष्ठ तिष्ठ । **किं याशीत्यादि** । वसन्ततिलकच्छन्दसा श्लोकः । प्रस्खलन्ती । प्रस्खलनं निम्नोन्नतादौ गतिविघटनम् । 'बाला स्याद्वासूः' इत्यमरः । मित्राणि... । तिष्ठ तावत् । हडके हृदयम् । तवश्शी वराकः । अङ्गारराशिपतितं सीनानाम् ।...व कामेन दह्यते ॥ १८ ॥ अज्जुके गणिके । **उत्ताशितेत्यादि** ।

ओवग्गदी शामिअभश्टके मे वण्णे गडे कुक्कुडशावके व्व॥१९॥(क)

**विटः**—वसन्तसेने, तिष्ठ तिष्ठ ।

किं यासि बालकदलीव विकम्पमाना
रक्तांशुकं पवनलोलदशं वहन्ती ।
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती
टङ्कैर्मनःशिलगुहेव विदार्यमाणा ॥ २० ॥

**शकारः**—चिट्ठ वशन्तशेणिए, चिट्ठ ।

मम मअणमणङ्गं मम्मथं वड्ढअन्ती
णिशि अ शअणके मे णिद्दअं आक्खिवन्ती ।
पशलशि भअभीदा पक्खलन्ती खलन्ती
मम वशमणुजादा लावणश्शेव कुन्ती ॥ २१ ॥ (ख)

---

(क) आर्ये, तिष्ठ तिष्ठ ।

उत्त्रासिता गच्छस्यन्तिकान्मम संपूर्णपक्षेव ग्रीष्ममयूरी ।
अववल्गति स्वामिभट्टारको मम, वने गतः कुक्कुटशावक इव ॥

(ख) तिष्ठ वसन्तसेने, तिष्ठ ।

मम मदनमनङ्गं मन्मथं वर्धयन्ती
निशि च शयनके मम निद्रामाक्षिपन्ती ।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
मम वशमनुयाता रावणस्येव कुन्ती ॥

---

उपजातिच्छन्दसा श्लोकः । उत्त्रासिता गच्छस्यन्तिकान्मम । यद्वा । अत्तिका ज्येष्ठा मे भगिनी । 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः । संपूर्णपक्षेव ग्रीष्ममयूरी । ओवग्गदी अववल्गति । ससंभ्रममागच्छतीत्यर्थः । शामिअभश्टके स्वामिभट्टारकः । वने गतः कुक्कुटशावक इव । गडे इति प्रथमान्तस्यैकारान्तत्वम् । 'गतभृतकृतानां डः' इति डः ॥ १९ ॥ **किं यासीति** । 'टङ्कः पाषाणदारणः' इत्यमरः । विदारणक्षणे हि निर्मला दीप्तिः प्रसरतीति । कुड्मलं कलिका । मनःशिलगुहेति । महाभारते मनःशिलशब्दोऽपि दृश्यत इति तथा प्रयुक्तः । 'मनःशिला तु कुनदी' इत्यमरः ॥ २० ॥ **मम मअणेत्यादि** । मालिनीच्छन्दसा श्लोकः । मम मदनमनङ्गं मन्मथं वर्धयन्ती निशि च शयनके मम निद्रामाक्षिपन्ती । प्रसरसि प्रगच्छसि । 'प्रसरसि दात्यूहवद्विरौषि' इति केचित् । भयभीता प्रस्खलन्ती स्खलन्ती मम वशमनुयाता रावणस्येव कुन्ती । भयभीतेति । भयशब्दोऽयमपार्थकः । मदनमनङ्गमित्यादि पुनरुक्तम् । रावणस्येव कुन्तीति हतोपमम् । तथा चोक्तम्—'आगमलिङ्गविहीनं देशकलान्यायविपरीतम् ।

**विटः**—वसन्तसेने,

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं प्रविसृतः पवनं न रुन्ध्यां
त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः ॥ २२ ॥

**शकारः**—भावे भावे,

एशा णाणकमूशिकामकशिका मच्छाशिका लाशिका
णिण्णाशा कुलणाशिका अवशिका कामस्स मञ्जूशिका ।
एशा वेशवहू शुवेशणिलआ वेशङ्गणा वेशिआ
एशे शे दश णामके मइ कले अज्जावि मं णेच्छदि ॥२३॥(क)

---

(क) भाव भाव,

एषा नाणकमोषिकामकशिका मत्स्याशिका लासिका
निर्नासा कुलनाशिका अवशिका कामस्य मञ्जूषिका ।
एषा वेशवधूः सुवेशनिलया वेशाङ्गना वेशिका
एतान्यस्या दश नामकानि मया कृतान्यद्यापि मां नेच्छति ॥

---

व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥' इति ॥ २१ ॥ विशेषयन्ती अतिशयाना । व्याली सर्पी । प्रविसृतः प्रचलितः । वातं न निरुणध्मि । अपि तु रुणध्म्येव । नकारः काकौ ॥ २२ ॥ 'भावो विद्वान्' इत्यमरः ॥ **एशा णाणकेत्यादि** । शार्दूलविक्रीडितच्छन्दसा श्लोकः । एषा । नाणं शिवाङ्कं टङ्कादिवित्तं तस्य मोषणशीलः कामो यस्य तस्य कशिका चर्मकाष्ठिका । चौराणां किंचित्तया चोपकरणं भवति । तदत्र कशोक्ता । कशा चाश्वताडनी । चर्मसडिकोच्यते । मच्छाशिका मत्स्यभक्षिका । 'मच्छं शुष्कमांसम्' इत्येके । लाशिका नर्तकी । णिण्णाशा निम्ननासा । कुलणाशिका कुलं वंशस्तन्नाशयति पातित्यजननात् । 'णीशाशा' इति पाठे निःश्वानामाशा (?) । कुलनाशिकेत्यर्थः । अवशिकानायत्ता । दानेनापि कस्याप्यायत्ता न भवति । कामस्य मञ्जूषिका पात्रविशेषः । कन्दर्पभाजनमिव । वर्तुलीभूतः काम इवेत्यर्थः । एषा वेशवधूः । 'वेशो वेश्याजनाश्रयः' इत्यमरः । सुवेशनिलया शोभनानां वेशानामलंकाराणां निलय आश्रयो यस्यां सा । वेशाङ्गना । वेशिका । वेशोऽस्यास्तीति वेशिका । एतान्यस्या दश नामकानि मया कृतानि । अद्यापि मां नेच्छति । यदि देवताया अष्टौ दश द्वादश नामानि पठ्यन्ते तदा सा प्रसन्ना भवति । इयं त्वेतावतापि न प्रसन्नेति भावः । अत्र पूर्वार्धोत्तरार्धयोः एषैषेति पुनरुक्तम्, न्यूनमधिकं वा

**विटः**—

प्रसरसि भयविक्लवा किमर्थं प्रचलितकुण्डलघृष्टगण्डपार्श्वा ।
विटजननखघट्टितेव वीणा जलधरगर्जितभीतसारसीव ॥ २४ ॥

**शकारः**—

झाणज्झणन्तबहुभूशणशद्दमिश्शं
किं दोवदी विअ पलाअशि लामभीदा ।
एशे हलामि शहशत्ति जधा हणूमे
विश्शावशुश्श बहिणिं विअ तं शुभद्दम् ॥ २५ ॥ (क)

**चेटः**—

लामेहि अ लाअवल्लहं तो क्खाहिशि मच्छमंशकम् ।
एदेहिं मच्छमंशकेहिं शुणआ मलअं ण शेवन्ति ॥ २६ ॥(ख)

---

(क) झणज्झणमितिबहुभूषणशब्दमिश्रं किं द्रौपदीव पलायसे रामभीता !
एष हरामि सहसेति यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम्॥
(ख) रमय च राजवल्लभं ततः खादिष्यसि मत्स्यमांसकम् ।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥

---

कृतम् । दशेति व्यर्थम् ॥ २३ ॥ **प्रसरसीत्यादि** । प्रचलिताभ्यां कुण्डलाभ्यां गण्डयोर्घृष्टं पार्श्वं यस्याः सा । अत एव विटनखपरिमृष्टवीणातुल्या । मनोहरत्वाच्छब्दवत्त्वाद्वा वीणातुल्यत्वम् । विटसदृशौ कुण्डलौ ॥ २४ ॥ **झाणज्झणन्तेति** । वसन्ततिलकं छन्दः । झाणज्झणन्तेत्यव्यक्तानुकरणम् । अव्यक्तशब्दविशेषयुक्तबहुभूषणशब्देन मिश्रं यथा स्यादेवम् । किं द्रौपदीव पलायसे रामभीता । एष हरामि झटिति यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् । विश्वावसोः सिद्धराजविशेषस्य न भगिनी सुभद्रा, किं तर्हि कृष्णस्य । यथा इवेति पुनरुक्तम् ॥ २५ ॥ **लामेहीत्यादि** । प्रतिपादं चतुर्दशमात्रत्वान्मात्रासमकं छन्दः । लामेहि अ रमय च । चकारो भिन्नक्रमः । राजवल्लभं चेत्यर्थः । तो षा(क्खा)हिशि ततः खादिष्यसि । मत्स्यमांसकम् । 'तो इत्योकारो लघुश्छन्दोनुरोधात्' इत्याहुः । 'एओकारौ हलन्तस्थौ शुद्धौ वाप्यपदान्वितौ । दीर्घातपरौ लघू स्यातां छन्दोविचितिभाषया ॥' इत्युक्तम् । एदेहिं मच्छमंशकेहिं एताभ्यां मत्स्यमांसाभ्यां हेतुभ्याम् । 'मश्कलेहिं' इति पाठे मत्स्यशुष्कमांसाभ्यामित्यर्थः । ककारः स्वार्थे । शुणआ श्वानः । मृतकं न सेवन्ते । नकारः शिरश्चालने । न सेवन्ते इति न, अपि तु सेवन्त एवेत्यर्थः ॥ २६ ॥

**विटः**—भवति वसन्तसेने,

किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम् ।
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ताद्भुतं नगरदैवतवत्प्रयासि ॥ २७ ॥

**शकारः**—

अम्हेहि चण्डं अहिशालिअन्ती वणे शिआली विअ कुक्कुलेहिं ।
पलाशि शिग्घं तुलिदं शवेग्गं शवेण्टणं मे हलअं हलन्ती॥२८॥(क)

**वसन्तसेना**—पल्लवआ पल्लवआ, परहुदिए परहुदिए । (ख)

**शकारः**—(सभयम् ।) भावे भावे, मणुश्शे मणुश्शे । (ग)

**विटः**—न भेतव्यं न भेतव्यम् ।

**वसन्तसेना**—माहविए माहविए । (घ)

**विटः**—(सहासम् ।) मूर्ख, परिजनोऽन्विष्यते ।

**शकारः**—भावे भावे, इत्थिआं अण्णेशदि । (ङ)

**विटः**—अथ किम् ।

**शकारः**—इत्थिआणं शदं मालेमि । शूले हगे (च)

---

(क) अस्माभिश्चण्डमभिसार्यमाणा वने शृगालीव कुक्कुरैः ।
पलायसे शीघ्रं त्वरितं सवेगं सवृन्तं मम हृदयं हरन्ती ॥

(ख) पल्लवक पल्लवक, परभृतिके परभृतिके ।

(ग) भाव भाव, मनुष्या मनुष्याः । (घ) माधविके माधविके ।

(ङ) भाव भाव, स्त्रियमन्वेषयति ।

(च) स्त्रीणां शतं मारयामि । शूरोऽहम् ।

---

**किं त्वमिति** । वक्त्रेण लक्षिता नगरदेवतावत्प्रयासि । कीदृशेन वक्त्रेण । निर्मथितचूर्णमनःशिलातुल्येन ॥ २७॥ **अम्हेहि चण्डमिति** । उपेन्द्रवज्रा छन्दः । अस्माभिश्चण्डं शीघ्रमभिसार्यमाणा वने शृगालीव कुक्कुरैः । पलायसे शीघ्रं त्वरितं सवेगं शवेण्टणं सवृन्तं समूलबन्धम् । मे हलअं मम हृदयम् । हरन्ती । 'सवेष्टणं सवेष्टनमित्यर्थः' इत्येके ॥ २८ ॥ पल्लवकः परभृतिका च वसन्तसेनायाः परिचारकः परिचारिका च । माधविका अपरा परिचारिका ॥ भावे भावे इति संबोधनम् । मणुश्शे मनुष्यः ॥ स्त्रीनामश्रवणेन सगर्वमाह—भाव, स्त्रियमन्वेषयति ॥ स्त्रीणां शतं मारयामि । शूले शूरः । हगे अहम् ॥ हद्धी हद्धी हा धिक्

**वसन्तसेना**—(शून्यमवलोक्य ।) हद्धी हद्धी, कधं परिअणो वि परिब्भट्टो । एत्थ मए अप्पा शअं ज्जेव रक्खिदव्वो । (क)

**विटः**—अन्विष्यतामन्विष्यताम् ।

**शकारः**—वशन्तशेणिए, विलव विलव परहुदिअं वा पल्लवअं वा शव्वं एव्व वशन्तमाशम् । मए अहिशालिअन्तीं तुमं को पलित्ताइश्शदि ।

किं भीमशेणे जमदग्गिपुत्ते कुन्तीशुदे वा दशकन्धले वा ।
एशे हगे गेण्हिय केशहत्थे दुश्शाशणश्शाणुकिदिं कलेमि॥२९॥

णं पेक्ख णं पेक्ख ।

अशी शुतिक्खे वलिदे अ मत्थके
कप्पेम शीशं उद मालएम वा ।
अलं तवेदेण पलाइदेण
मुमुक्खु जे होदि ण शे क्खु जीअदि ॥३०॥ (ख)

---

(क) हा धिक् हा धिक् । कथं परिजनोऽपि परिभ्रष्टः । अत्र मयात्मा स्वयमेव रक्षितव्यः ।

(ख) वसन्तसेनिके, विलप विलप परभृतिकां वा पल्लवकं वा सर्वं वा वसन्तमासम् । मयाभिसार्यमाणां त्वां कः परित्रास्यते ।

किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा ।
एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥

ननु प्रेक्षस्व ननु प्रेक्षस्व ।

असिः सुतीक्ष्णो, वलितं च मस्तकं, कल्पये शीर्षमुत मारयामि वा ।
अलं तवैतेन पलायितेन, मुमूर्षुर्यो भवति न स खलु जीवति ॥

---

हा धिक् । विलप । किमेकदेशविलापेन सकलं वसन्तमासं वा । अत्र पक्षे एको वाशब्दः शकारवचनतया व्यर्थ एव प्रयुक्तः । अनेकार्थत्वान्निपातानामवधारणे वा । सर्वमेव वसन्तमासमित्यर्थः । को तुमं त्वां परित्रायते ॥ **किं भीमशेणे इत्यादि** । इन्द्रवज्राश्लोकः । किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा । एते चत्वारः । एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥ २९ ॥ णं ननु । पेक्ख प्रेक्षस्व । **अशी शुतिक्खे इति** । वंशस्थेन्द्रवज्रोपेन्द्रवज्रादिभिर्द्वादशैकादशवर्णैर्विजात्युपजातिः । असिः सुतीक्ष्णो वलितो ललितः । मस्तकम् । कल्पये छिनद्मि । तव शीघ्रं मारयामि वा ॥ अलं तवैतेन पलायितेन । मुमूर्षुर्यो भवति न स खलु जीवति

**वसन्तसेना**—अज्ज, अबला क्खु अहम् । (क)

**विटः**—अत एव म्रियसे ।

**शकारः**—अदो ज्जेव ण मालीअशि । (ख)

**वसन्तसेना**—(स्वगतम् ।) कधं अणुणओ वि से भअं उप्पादेदि । भोदु । एव्वं दाव । (प्रकाशम् ।) अज्ज, इमादो किंपि अलंकरणं तक्कीअदि । (ग)

**विटः**—शान्तम् । भवति वसन्तसेने, न पुष्पमोषमर्हत्युद्यान-लता । तत्कृतमलंकरणैः ।

**वसन्तसेना**—ता किं क्खु दाणिम् । (घ)

**शकारः**—हगे वरपुलिशमणुश्शे वाशुदेवके कामइदव्वे । (ङ)

**वसन्तसेना**—(सक्रोधम् ।) शन्तं शन्तम् । अवेहि । अणज्जं मन्तेशि । (च)

**शकारः**—(सतालिकं विहस्य ।) भावे भावे, पेक्ख दाव । मं अन्त-लेण शुशिणिद्धा एशा गणिआदालिआ णम् । जेण मं भणादि—'एहि । शन्तेशि । किलिन्तेशि' त्ति । हगे ण गामन्तलं ण णग-लन्तलं वा गडे । अज्जुके, शवामि भावश्श शीशं अत्तणकेहिं पा-

---

(क) आर्य, अबला खल्वहम् । (ख) अत एव न मार्यसे ।

(ग) कथमनुनयोऽप्यस्य भयमुत्पादयति । भवतु । एवं तावत् । आर्य, अस्मात्किमप्यलंकरणं तर्क्यते । (घ) तत्किं खल्विदानीम् ।

(ङ) अहं वरपुरुषमनुष्यो वासुदेवः कामयितव्यः ।

(च) शान्तं शान्तम् । अपेहि । अनार्यं मन्त्रयसि ।

---

॥ ३० ॥ अबला खल्वहम् ॥ अत एव म्रियसे जीवसि । बलवान्वारयितुं न शक्यत एवेति तात्पर्यम् ॥ अत एव न मार्यसे ॥ तक्कीअदि अन्विष्यते ॥ कृतं निःफलमलंकरणैः । यत उद्यानलता पुष्पमोषं नार्हति ॥ अहं वरपुरुषमनुष्यो वासुदेवः कामयितव्य इति तर्क्यत इत्याशयः ॥ सन्तं शान्तम् । अनार्यमनर्हम् ॥ सतालिकम् । विटस्य हस्ते तालदानं कृत्वेत्यर्थः । भाव, प्रेक्षस्व तावत् । मं अन्तरेण । 'मयीत्यर्थः' इत्येके । अन्तरेण चित्तेन अन्योन्यं सुस्निग्धैषा गणिकादारिका ननु । येन मां भणति—'एहि । श्रान्तोऽसि । क्लान्तोऽसि ।' हगे अहं न ग्रामान्तरगतो न नगरान्तरागतः । ग्रामान्तरागतो नगरान्तरगतश्च श्रान्तः क्लान्तश्च भवति । न त्वहमीदृश इत्याशयः । अज्जुके भट्टालिके । भावस्य

देहिं। तव ज्जेव पश्चाणुपश्चिआए आहिण्डन्ते शन्ते किलिन्ते म्हि शंवुत्ते। (क)

**विटः**—(स्वगतम्।) अये, कथं शान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः। (प्रकाशम्।) वसन्तसेने, वेशवासविरुद्धमभिहितं भवत्या। पश्य।

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे सुप्रियं चाप्रियं च॥ २१॥

अपि च।

वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः
फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा।
ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे
त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज॥ ३२॥

**वसन्तसेना**—गुणो क्खु अणुराअस्स कारणम्, ण उण बलक्कारो। (ख)

---

**(क)** भाव भाव, प्रेक्षस्व तावत्। मामन्तरेण सुस्निग्धैषा गणिकादारिका ननु। येन मां भणति—'एहि। श्रान्तोऽसि। क्लान्तोऽसि' इति। अहं न ग्रामान्तरं न नगरान्तरं वा गतः। भट्टालिके, शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम्। तवैव पृष्ठानुपृष्ठिकयाहिण्डमानः श्रान्तः क्लान्तोऽस्मि संवृत्तः।

**(ख)** गुणः खल्वनुरागस्य कारणम्, न पुनर्बलात्कारः।

---

विटस्य। शीर्षेणात्मीयाभ्यां पादाभ्यां शपे। यदग्रे वक्ष्यमाणं तत्सत्यमित्यर्थः। तवैव पृष्ठानुपृष्ठिकया। आहिण्डन्ते उद्भ्राम्यन्। श्रान्तः क्लान्तोऽस्मि संवृत्तः॥ **तरुणेत्यादि।** वेशो वेश्याजनवासस्थानम्॥ ३१॥ **वाप्यामित्यादि।** नाम्यति नमयति। नाम्यतीति कण्वादिपाठात् 'नामं करोति' इत्यर्थे यक्यकारलोपे च रूपम्। यथा मगधशब्दे मागध्यतीति भवति। 'नामं करोतीत्यर्थे णिचि संज्ञापूर्वको विधिरनित्य इति गुणमकृत्वा यणादेशे नाम्यतीति रूपम्' इत्येके। 'ण्यन्तात्संपदादिपाठमभ्युपेत्य क्विपि क्यचि रूपम्' इत्यपरे॥ ३२॥ गुणः खल्वनुरागस्य

**शकारः**—भावे भावे, एशा गब्भदाशी कामदेवाअदणुज्जाणादो पहुदि ताह दलिद्दचालुदत्ताह अणुलत्ता ण मं कामेदि। वामदो तश्श घलम्। जधा तव मम अ हत्थादो ण एशा पलिब्भंशदि तधा कलेदु भावे। (क)

**विटः**—(स्वगतम्।) यदेव परिहर्तव्यं तदेवोदाहरति मूर्खः। कथं वसन्तसेनार्यचारुदत्तमनुरक्ता। सुष्ठु खल्विदमुच्यते—'रत्नं रत्नेन संगच्छते' इति। तद्गच्छतु। किमनेन मूर्खेण। (प्रकाशम्।) काणेलीमातः, वामतस्तस्य सार्थवाहस्य गृहम्।

**शकारः**—अध इं। वामदो तश्श घलम्। (ख)

**वसन्तसेना**—(स्वगतम्।) अम्महे। वामदो तश्श गेहं त्ति जं शच्चम्, अवरज्झन्तेण वि दुज्जणेण उवकिदम्, जेण पिअशङ्गमं पाविदम्। (ग)

**शकारः**—भावे भावे, बलिए क्खु अन्धआले माशलाशिपविट्ठा विअ मशिगुडिआ दीशन्दी ज्जेव पणट्ठा वशन्तशेणिआ। (घ)

**विटः**—अहो, बलवानन्धकारः। तथाहि।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना।

---

(क) भाव भाव, एषा गर्भदासी कामदेवायतनोद्यानात्प्रभृति तस्य दरिद्रचारुदत्तस्यानुरक्ता न मां कामयते। वामतस्तस्य गृहम्। यथा तव मम च हस्तान्नैषा परिभ्रश्यति तथा करोतु भावः।

(ख) अथ किम्। वामतस्तस्य गृहम्।

(ग) आश्चर्यम्। वामतस्तस्य गृहमिति यत्सत्यम्, अपराध्यतापि दुर्जनेनोपकृतम्, येन प्रियसंगमः प्रापितः।

(घ) भाव भाव, बलीयसि खल्वन्धकारे माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना।

---

कारणम्, न पुनर्बलात्कारः॥ गर्भदासी जन्मप्रभृतिचेटी। ताह तस्य। वामतः पार्श्वे ...स्य चारुदत्तस्य गृहम्। ततो यथा तव मम च हस्तान्नैषा प्रभ्रश्यति तथा करोतु भावः॥ परिहर्तव्यम्। चारुदत्तवासोऽतिनिकट इति वसन्तसेनायाः कथयितुं नार्हतीति तदेव च तेनोक्तम्। तद्वचनं परिहारविषयः। काणेलीमातः। 'काणेली कन्यकामाता' इति देशीप्रकाशः। 'असती काणेली' इत्येके॥ भाव, बलीयानन्धकारः। माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना॥

उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥ ३३ ॥

अपि च ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ३४ ॥

**शकारः**—भावे भावे, अण्णेशामि वशन्तशेणिअम् । (क)

**विटः**—काणेलीमातः, अस्ति किंचिच्चिह्नं यदुपलक्षयसि ।

**शकारः**—भावे भावे, किं विअ । (ख)

**विटः**—भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा ।

**शकारः**—शुणामि मल्लगन्धम्, अन्धआलपूलिदाए उण णाशिआए ण शुव्वत्तं पेक्खामि भूशणशद्दम् । (ग)

**विटः**—(जनान्तिकम् ।) वसन्तसेने,

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसंधिलीना ।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च भीरु मुखराणि च नूपुराणि ॥ ३५ ॥

श्रुतं वसन्तसेने ।

**वसन्तसेना**—(स्वगतम् ।) सुदं गहिदं अ । (नाट्येन नूपुराण्युत्सार्य माल्यानि चापनीय किंचित्परिक्रम्य हस्तेन परामृश्य ।) अम्भो, भित्ति-

---

(क) भाव भाव, अन्विष्यामि वसन्तसेनिकाम् ।

(ख) भाव भाव, किमिव ।

(ग) शृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया न सुव्यक्तं पश्यामि भूषणशब्दम् ।

---

**आलोकेति** । आलोके दर्शने । विशाला महती ॥ ३३ ॥ **लिम्पतीत्यादि** ॥ ३४ ॥ भाव, अन्विष्यामि वसन्तसेनाम् ॥ चिह्नं भूषणशब्दादि । उपलक्षणं माल्यगन्धादि । 'अस्ति किंचिच्चिह्नमुपलक्षयसि' इति पाठान्तरार्थौ व्यक्त एव ॥ किं विअ । कीदृशमिवेत्यर्थः ॥ शृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया न सुव्यक्तं पश्यामि भूषणशब्दम् । 'शुणामि मल्लगन्धम्' इत्यादिना लोकविरुद्धोक्तिः ॥ **काममित्यादि** ॥ ३५ ॥ श्रुतमवधारितम् । गृहीतमस्य तात्पर्यमप्याकलितम् । अये मातः, भित्तिपरामर्शसूचितं पक्षद्वारं

परामरिससूइदं पक्खदुआरअं क्खु एदम् । जाणामि अ संजोएण गेहस्स संवुदं पक्खदुआरअम् । (क)

चारुदत्तः—वयस्य, समाप्तजपोऽस्मि । तत्सांप्रतं गच्छ । मातृभ्यो बलिमुपहर ।

विदूषकः—भो, ण गमिस्सम् । (ख)

चारुदत्तः—धिक्कष्टम् ।

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥ ३६ ॥

अपि च ।

सङ्गं नैव हि कश्चिदस्य कुरुते संभाषते नादरा-
त्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ३७ ॥

अपि च ।

दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ३८ ॥

---

(क) श्रुतं गृहीतं च । अहो, भित्तिपरामर्शसूचितं पक्षद्वारकं खल्वेतत् । जानामि च संयोगेन गेहस्य संवृतं पक्षद्वारकम् ।

(ख) भोः, न गमिष्यामि ।

---

खल्वेतत् । जानामि संयोगेन स्पर्शनेन्द्रियानुभवेन गृहस्य संवृतं पक्षद्वारकम् ॥ **दारिद्र्यादित्यादि** । बान्धवजनो वाक्ये न संतिष्ठते । वचनं न करोतीत्यर्थः । प्रतापाभावात् । स्फारीभवन्त्येकीभवन्ति । तत्तस्य संभाव्यते । चौर्यादिकमिदमस्य नासीदिदानीं कथमित्यादि ॥ ३६ ॥ **सङ्गमित्यादि** । अल्पच्छदो वस्त्रविहीनः ॥ ३७ ॥ **दारिद्र्येति** । भवन्तमेवं शोचामि । विनष्टदेहे मयि क्व यास्यसि । अस्मत्सदृक्सार्वदिकः सुहृत्कोऽपि नास्तीत्यर्थः । अर्थपरत्वात्पुंलिङ्गत्वम् । यद्वा 'त्वमेवं भवमुत्पत्तिं स्मरामि' इति कुव्याख्या । सुहृन्मित्रम् । अतो हेतोः मयि विनष्टदेहे क्व यास्यसि त्वमिति मे चारुदत्तस्य चिन्ता ॥ ३८ ॥

**विदूषकः**—(सवैलक्ष्यम् ।) भो वअस्स, जइ मए गन्तव्वम्, ता एसा वि मे सहाइणी रदणिआ भोदु । (क)

**चारुदत्तः**—रदनिके, मैत्रेयमनुगच्छ ।

**चेटी**—जं अज्जो आणवेदि । (ख)

**विदूषकः**—भोदि रदणिए, गेण्ह बलिं पदीवं अ । अहं अपावुदं पक्खदुआरअं करेमि । (ग) (तथा करोति ।)

**वसन्तसेना**—मम अब्भुववत्तिणिमित्तं विअ अवावुदं पक्खदुआरअम् । ता जाव पविसामि । (दृष्ट्वा ।) हद्धी हद्धी । कधं पदीवो । (घ) (पटान्तेन निर्वाप्य प्रविष्टा ।)

**चारुदत्तः**—मैत्रेय, किमेतत् ।

**विदूषकः**—अवावुदपक्खदुआरेण पिण्डीभूदेण वादेण णिव्वाविदो पदीवो । भोदि रदणिए, णिक्कम तुमं पक्खदुआरएण । अहंपि अब्भन्तरचदुस्सालादो पदीवं पज्जालिअ आअच्छामि । (ङ) (इति निष्क्रान्तः ।)

**शकारः**—भावे भावे, अण्णेशामि वशन्तशेणिअम् । (च)

**विटः**—अन्विष्यतामन्विष्यताम् ।

**शकारः**—(तथा कृत्वा ।) भावे भावे, गहिदा गहिदा । (छ)

---

(क) भो वयस्य, यदि मया गन्तव्यम्, तदेषापि मम सहायिनी रदनिका भवतु । (ख) यदार्य आज्ञापयति ।

(ग) भवति रदनिके, गृहाण बलिं प्रदीपं च । अहमपावृतं पक्षद्वारकं करोमि ।

(घ) ममाभ्युपपत्तिनिमित्तमिवापावृतं पक्षद्वारकम् । तद्यावत्प्रविशामि । हा धिक् हा धिक् । कथं प्रदीपः ।

(ङ) अपावृतपक्षद्वारेण पिण्डीभूतेन वातेन निर्वापितः प्रदीपः । भवति रदनिके, निष्काम त्वं पक्षद्वारकेण । अहमप्यभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्यागच्छामि ।

(च) भाव भाव, अन्वेषयामि वसन्तसेनिकाम् ।

(छ) भाव भाव, गृहीता गृहीता ।

---

सहाइणी द्वितीया ॥ अपावुदं अपावृतम् ॥ अभ्युपपत्तिरनुग्रहः । स्थगितद्वारेणापसरणाभावात्पिण्डीभूतेनैकीभूतेन प्रतिबन्धकत्वात् । अपावृते पक्षद्वारे सति

**विटः**—मूर्ख, नन्वहम् ।

**शकारः**—इदो दाव भविअ एअन्ते भावे चिट्ठदु । (पुनरन्विष्य चेटं गृहीत्वा ।) भावे भावे, गहिदा गहिदा । (क)

**चेटः**—भट्टके, चेडे हगे । (ख)

**शकारः**—इदो भावे, इदो चेडे । भावे चेडे, चेडे भावे । तुम्हे दाव एअन्ते चिट्ठ । (पुनरन्विष्य रदनिकां केशेषु गृहीत्वा ।) भावे भावे, शंपदं गहिदा गहिदा वशन्तशेणिआ ।

अन्धआले पलाअन्ती मल्लगन्धेण शूइदा ।
केशविन्दे पलामिट्ठा चाणक्केणेव्व दोवदी ॥ ३९ ॥ (ग)

**विटः**—

एषासि वयसो दर्पात्कुलपुत्रानुसारिणी ।
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ॥ ४० ॥

**शकारः**—

एशाशि वाशू शिलशि ग्गहीदा केशेशु बालेशु शिलोलुहेशु ।
अक्कोश विक्कोश लबाहिचण्डं शंभुं शिवं शंकलमीशलं वा ॥ ४१ ॥ (घ)

---

(क) इतस्तावद्भूत्वा एकान्ते भावस्तिष्ठतु । भाव भाव, गृहीता गृहीता ।

(ख) भट्टारक, चेटोऽहम् ।

(ग) इतो भावः, इतश्चेटः । भावश्चेटः, चेटो भावः । युवां तावदेकान्ते तिष्ठतम् । भाव भाव, सांप्रतं गृहीता गृहीता वसन्तसेनिका ।

अन्धकारे पलायमाना माल्यगन्धेन सूचिता ।
केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी ॥

(घ) एषासि वासु शिरसि गृहीता केशेषु बालेषु शिरोरुहेषु ।
आक्रोश विक्रोश लपाधिचण्डं शंभुं शिवं शंकरमीश्वरं वा ॥

---

निर्वापितो दीपः ॥ भाव, गृहीता प्राप्ता ॥ तत इत एकप्रदेशे भूत्वैकान्ते हे भाव, तिष्ठ ॥ भट्टारक, चेटोऽहम् ॥ इदो भाव इत्यादि भ्रमव्युदासाय सुनिश्चयं करोति। युवां द्वावपि तावदेकान्ते तिष्ठतः( तम् ) । संपदं सांप्रतम्। **अन्धआले इत्यादि**। अर [illegible] । अन्धकारे पलायमाना माल्यगन्धेन सूचिता । केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी ॥ ३९ ॥ **एषेति** । कुलपुत्रानुसारिणी चारुदत्तानुरक्ता । सेवितव्येष्वलंकार्येषु ॥ ४० ॥ **एशाशि वाशू इति** । इन्द्रवज्रायाः श्लोकः । एषासि बाला शिरसि केशेषु बालेषु शिरोरुहेषु गृहीता । आक्रोश विक्रोश लप । अधिचण्डमत्युच्चैः । हिशब्द एव वा । चण्डं महादेवं च । शंभुं शिवं शंकर-

**रदनिका**—(सभयम् ।) किं अज्जमिस्सेहिं ववसिदम् । (क)

**विटः**—काणेलीमातः, अन्य एवैष स्वरसंयोगः ।

**शकारः**—भावे भावे, जधा दहिशरपलिलुद्धाए मज्जालीए शलपलिवत्ते होदि, तधा दाशीए धीए शलपलिवत्ते कडे । (ख)

**विटः**—कथं स्वरपरिवर्तः कृतः । अहो चित्रम् । अथवा किमत्र चित्रम् ।

इयं रङ्गप्रवेशेन कलानां चोपशिक्षया ।
वञ्चनापण्डितत्वेन स्वरनैपुण्यमाश्रिता ॥ ४२ ॥

(प्रविश्य ।)

**विदूषकः**—ही ही भोः, पदोसमन्दमारुदेण पसुबन्धोवणीदस्स विअ छागलस्स हिअअम्, फुरफुराअदि पदीवो । (उपसृत्य रदनिकां दृष्ट्वा ।) भो रदणिए । (ग)

**शकारः**—भावे भावे, मणुश्शे मणुश्शे । (घ)

**विदूषकः**—जुत्तं णेदम्, सरिसं णेदम्, जं अज्जचारुदत्तस्स दलिद्ददाए संपदं परपुरिसा गेहं पविशन्ति । (ङ)

**रदनिका**—अज्ज मित्तेअ, पेक्ख मे परिहवम् । (च)

---

(क) किमार्यमिश्रैर्व्यवसितम् ।

(ख) भाव भाव, यथा दधिसरपरिलुब्धाया मार्जारिकायाः स्वरपरिवृत्तिर्भवति, तथा दास्याः पुत्र्या स्वरपरिवृत्तिः कृता ।

(ग) आश्चर्यं भोः, प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदयम्, फुरफुरायते प्रदीपः । भो रदनिके ।

(घ) भाव भाव, मनुष्यो मनुष्यः ।

(ङ) युक्तं नेदम्, सदृशं नेदम्, यदार्यचारुदत्तस्य दरिद्रतया सांप्रतं परपुरुषा गेहं प्रविशन्ति । (च) आर्य मैत्रेय, प्रेक्षस्व मे परिभवम् ।

---

मीश्वरं वा ॥ ४१ ॥ आर्यमिश्रैर्मान्यैः । व्यवसितमारब्धम् । भाव, यथा दधिभक्तलुब्धायां मार्जारिकायां स्वरपरिवृत्तिर्भवति तथैतया स्वरपरिवृत्तिः कृता । 'दहिशर' इति पाठे 'छल्लि' इति पाठेऽपि शरो दध्न उपरिभागः ॥ **इयमिति** ॥४२॥ ही ही भो इति परितोषे । पशुबन्धोपनीतस्येव छागलस्य हृदयं फुरफुरायति अत्यर्थं प्रकम्पते प्रदीपः ॥ जुत्तं णेदम् । नः काकौ । सदृशं नेदम् । संपदं सांप्रतम् ॥

विदूषकः—किं तव परिहवो । आदु अम्हाणम् । (क)

रदनिका—णं तुम्हाणं ज्जेव । (ख)

विदूषकः—किं एसो वलक्कारो । (ग)

रदनिका—अध इं । (घ)

विदूषकः—सच्चम् । (ङ)

रदनिका—सच्चम् । (च)

विदूषकः—(सक्रोधं दण्डकाष्ठमुद्यम्य ।) मा दाव । भो, सके गेहे कुक्कुरो वि दाव चण्डो भोदि, किं उण अहं बम्हणो । ता एदिणा अम्हारिसजणभाअधेअकुडिलेण दण्डकट्ठेण दुट्टस्स विअ सुक्खाणवेणुअस्स मत्थअं दे पहारेहिं कुट्टइस्सम् । (छ)

विटः—महाब्राह्मण, मर्षय मर्षय ।

विदूषकः—(विटं दृष्ट्वा ।) ण एत्थ एसो अवरज्झदि । (शकारं दृष्ट्वा ।) एसो क्खु एत्थ अवरज्झदि । अरे रे राअसालअ संठाणअ दुज्जण दुम्मणुस्स, जुत्तं णेदम् । जइ वि णाम तत्तभवं अज्जचारुदत्तो दलिद्दो संवुत्तो, ता किं तस्स गुणेहिं ण अलंकिदा उज्जइणी । जेण तस्स गेहं पविसिअ परिअणस्स ईरिसो उवमद्दो करीअदि ।

---

(क) किं तव परिभवः । अथवास्माकम् । (ख) ननु युष्माकमेव ।

(ग) किमेष बलात्कारः । (घ) अथ किम् ।

(ङ) सत्यम् । (च) सत्यम् ।

(छ) मा तावत् । भोः, स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति, किं पुनरहं ब्राह्मणः । तदेतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि ।

---

किं एसो । किं प्रश्ने । किमेष बलात्कारः ॥ मा तावत् । स्वकीयगृहसमीपे कुक्कुरोऽपि बलीयान्भवति । ता ततः । एतेनास्मादृशजनभागधेयवक्रेण दण्डकाष्ठेन दुष्टस्येव । कृतद्वेषस्य वैरिणो महादुष्टस्यानिग्रहेऽपि ममापराधो भवत्वेवेत्यर्थः । पाठान्तरे चोडे कर्णनासिकाशून्यः । दुट्टस्स विअ दुष्टस्येव । आचरितद्वेषस्य वैरिणः । यद्वा । दुष्टश्वानपराधोऽपि निग्रहं प्राप्नोत्येवेत्यर्थः । शुष्कवंशप्रहारेण । शुष्कोऽतिदीर्घत्वप्रतिपादनाय । एवंभूतस्य शिरः कुट्यते । तथा तव शिरः कुट्टिष्यामि ॥ राजश्यालकेत्यादि । संस्थानक

मा दुग्गदोत्ति परिहवो णत्थि कअन्तस्स दुग्गदो णाम ।
चारित्तेण विहीणो अड्ढो वि अ दुग्गदो होइ ॥ ४३ ॥ (क)

**विटः**—(सवैलक्ष्यम् ।) महाब्राह्मण, मर्षय मर्षय । अन्यजनशङ्कया खल्विदमनुष्ठितम्, न दर्पात् । पश्य ।

सकामान्विष्यतेऽस्माभिः

**विदूषकः**—किं इअम् । (ख)

**विटः**—शान्तं पापम् ।

काचित्स्वाधीनयौवना ।
सा नष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ ४४ ॥

सर्वथा इदमनुनयसर्वस्वं गृह्यताम् । (इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ।)

**विदूषकः**—सप्पुरिस, उट्ठेहि उट्ठेहि । अआणन्तेण मए तुमं उवालद्धे । संपदं उण जाणन्तो अणुणेमि । (ग)

**विटः**—ननु भवानेवात्रानुनेयः । तदुत्तिष्ठामि समयतः ।

---

(क) नात्र एषोऽपराध्यति । एष खल्वत्रापराध्यति । अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य, युक्तं नेदम् । यद्यपि नाम तत्रभवानार्यचारुदत्तो दरिद्रः संवृत्तः, तत्किं तस्य गुणैर्नालंकृतोज्जयिनी । येन तस्य गृहं प्रविश्य परिजनस्येदृश उपमर्दः क्रियते ।

मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम ।
चारित्र्येण विहीन आढ्योऽपि च दुर्गतो भवति ॥

(ख) किमियम् ।

(ग) सत्पुरुष, उत्तिष्ठोत्तिष्ठ । अजानता मया त्वमुपालब्धः । सांप्रतं पुनर्जानन्ननुनयामि ।

---

इति तस्य नाम । उपमर्दो निग्रहः । **मा दुग्गदो इति** । गाथा । मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दे(दै)वस्य दुर्गतो नाम । नाम संभावनायाम् । चारित्र्येण विहीन आढ्योऽपि दुर्गतो दरिद्रो भवति ॥ ४३ ॥ महाब्राह्मणश्चाण्डालः । **सकामेति** । सकामा स्वाधीनयौवनेतिपदाभ्यामस्या धारणं नापराधाय । सा वेश्या तिष्ठति न त्वियमित्याशयः । शीलवञ्चना दुश्चरितसंभावना ॥ ४४ ॥ सत्पुरुष, उत्तिष्ठोत्तिष्ठ । अजानता मया त्वमुपालब्धः । सांप्रतं पुनर्जानन्ननुनयामि । आदरविषयतानुनयः ॥ समयः क्रियाबन्धः ॥ समयमेवाह—

विदूषकः—भणादु भवम् । (क)

विटः—यदीमं वृत्तान्तमार्यचारुदत्तस्य नाख्यास्यसि ।

विदूषकः—न कधइस्सम् । (ख)

विटः—

एष ते प्रणयो विप्र शिरसा धार्यते मया ।
गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्जिताः ॥ ४५ ॥

शकारः—(सासूयम् ।) किं णिमित्तं उण भावे, एदश्श दुट्टबडु-अश्श किविणअञ्जलिं कदुअ पाएशु णिवडिदे । (ग)

विटः—भीतोऽस्मि ।

शकारः—कश्श तुमं भीदे । (घ)

विटः—तस्य चारुदत्तस्य गुणेभ्यः ।

शकारः—के तश्श गुणा जश्श गेहं पविशिअ अशिदव्वं पि णत्थि । (ङ)

विटः—मा मैवम् ।

सोऽस्मद्विधानां प्रणयैः कृशीकृतो
न तेन कश्चिद्विभवैर्विमानितः ।
निदाघकालेष्विव सोदको ह्रदो
नृणां स तृष्णामपनीय शुष्कवान् ॥ ४६ ॥

---

(क) भणतु भवान् । (ख) न कथयिष्यामि ।

(ग) किंनिमित्तं पुनर्भाव, एतस्य दुष्टबटुकस्य कृपणाञ्जलिं कृत्वा पादयोर्निपतितः । (घ) कस्मात्त्वं भीतः ।

(ङ) के तस्य गुणा यस्य गृहं प्रविश्याशितव्यमपि नास्ति ।

---

यदीममिति ॥ एष इति । गुणशस्त्रैः गुणा एव शस्त्राणि तैः ॥ ४५ ॥ किंनिमित्तं पुनर्भाव, एतस्य दुष्टबटुकस्य पादयोर्निपतितः । किविणं कृपणम् ॥ के तस्य गुणा यस्य गृहं प्रविश्याशितव्यं भोक्तव्यमपि नास्ति । यद्वा । अन्हिअदव्वं पि आह्निकद्रव्यमद्य भोक्तव्यमपीत्यर्थः ॥ स इति । प्रणयैः प्रार्थनाभिः । 'स्नेहप्रकारैः

**शकारः**—(सामर्षम् ।) के शे गब्भदासीए पुत्ते ।

शूले विक्कन्ते पण्डवे शेदकेदू
पुत्ते लाधाए लावणे इन्ददत्ते ।
आहो कुन्तीए तेण लामेण जादे
अश्शत्थामे धम्मपुत्ते जडाऊ ॥ ४७ ॥ (क)

**विटः**—मूर्ख, आर्यचारुदत्तः खल्वसौ ।

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी
आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥ ४८ ॥

तदितो गच्छामः ।

**शकारः**—अगेण्हिअ वशन्तशेणिअम् । (ख)

**विटः**—नष्टा वसन्तसेना ।

**शकारः**—कथं विअ । (ग)

**विटः**—

अन्धस्य दृष्टिरिव पुष्टिरिवातुरस्य
मूर्खस्य बुद्धिरिव सिद्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा ॥ ४९ ॥

---

(क) कः स गर्भदास्याः पुत्रः ।
शूरो विक्रान्तः, पाण्डवः श्वेतकेतुः पुत्रो राधाया, रावण, इन्द्रदत्तः ।
आहो कुन्त्या तेन रामेण जातः, अश्वत्थामा धर्मपुत्रो, जटायुः ॥
(ख) अगृहीत्वा वसन्तसेनाम् । (ग) कथमिव ।

---

समयोचितदानैरित्यर्थः' इत्येके ॥४६॥ **केशे गब्भदासीए पुत्ते शूले इत्यादि** ॥ श्लोको वैश्वदेव्या वृत्तेन । कः स गर्भदास्या जन्मदास्याः पुत्रः शूरो विक्रान्तः पाण्डवः श्वेतकेतुः पुत्रो राधाया रावण इन्द्रदत्तः । आहो उपायास्तेन रामेण जातोऽश्वत्थामा धर्मपुत्रो जटायुः ॥ व्यर्थं विरुद्धार्थम् । श्वेतकेतुरौद्दालकिर्दुर्वाससो मातुलः ऋषिविशेषः । इन्द्रदत्तो बृहत्कथाप्रलम्भके ह्यंशे संस्थितः ॥ ४७ ॥ **दीनानामिति** । सज्जनानां कुटुम्ब्युपजीव्यः ॥ ४८ ॥ अगृहीत्वा वसन्त-

**शकारः**—अगेण्हिअ वशन्तशेणिअं ण गमिश्शम् । (क)

**विटः**—एतदपि न श्रुतं त्वया ।

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते ।
हृदये गृह्यते नारी यदिदं नास्ति गम्यताम् ॥ ५० ॥

**शकारः**—यदि गच्छशि, गच्छ तुमम् । हगे ण गमिश्शम् । (ख)

**विटः**—एवम् । गच्छामि । (इति निष्क्रान्तः ।)

**शकारः**—गडे क्खु भावे अभावम् । (विदूषकमुद्दिश्य ।) अले काकपदशीशमश्तका दुट्टबडुका, उवविश उवविश । (ग)

**विदूषकः**—उववेसिदा ज्जेव अम्हे । (घ)

**शकारः**—केण । (ङ)

**विदूषकः**—कअन्तेण । (च)

**शकारः**—उट्ठेहि उट्ठेहि । (छ)

**विदूषकः**—उट्ठिस्सामो । (ज)

**शकारः**—कदा । (झ)

**विदूषकः**—जदा पुणो वि देव्वं अणुऊलं भविस्सदि । (ञ)

**शकारः**—अले, लोद लोद । (ट)

**विदूषकः**—रोदाविदा ज्जेव अम्हे । (ठ)

---

(क) अगृहीत्वा वसन्तसेनां न गमिष्यामि ।

(ख) यदि गच्छसि, गच्छ त्वम् । अहं न गमिष्यामि ।

(ग) गतः खलु भावोऽभावम् । अरे काकपदशीर्षमस्तक दुष्टबटुक, उपविशोपविश । (घ) उपवेशिता एव वयम् । (ङ) केन ।

(च) कृतान्तेन । (छ) उत्तिष्ठोत्तिष्ठ । (ज) उत्थास्यामः ।

(झ) कदा । (ञ) यदा पुनरपि दैवमनुकूलं भविष्यति ।

(ट) अरे, रुदिहि रुदिहि । (ठ) रोदिता एव वयम् ।

---

सेनाम् ॥ नष्टादर्शनं गता ॥ **अन्धस्येति** ॥ ४९ ॥ **आलान इति** । यदि चेदर्थे । चेन्नास्ति तदा गम्यताम् ॥ ५० ॥ गतः खलु भावोऽभावमदर्शनम् । काकपदशीशमश्तका इति । द्यूताद्यकार्यप्रवृत्तौ काकपदाकारा ये धूर्तास्तेषां शीर्षप्राया ग्रामण्यस्तेषां मस्तकभूत धूर्तचक्रवर्तिनामपि प्रधानभूत । एतेनाचारकुलयोराक्षेपः कृतः । केचित्तु—'काकपदशीर्ष काकपदवत्पञ्चधा शीर्षे मस्तकं यस्य । पञ्चेत्युपलक्षणम् । अष्टकपालः । तेनालक्षणयुक्तमस्तक इत्यर्थः' इत्याहुः । अत्र च मते शीशमश्तका इति शकारवाणीत्वेन पुनरुक्तत्वं न दोषः ।

**शकारः**—केण । (क)

**विदूषकः**—दुग्गदीए । (ख)

**शकारः**—अले, हश हश । (ग)

**विदूषकः**—हसिस्सामो । (घ)

**शकारः**—कदा । (ङ)

**विदूषकः**—पुणो वि ऋद्धीए अज्जचारुदत्तस्स । (च)

**शकारः**—अले दुट्टबड्डका, भणेशि मम वअणेण तं दलिद्दचालुदत्तकम्—'एशा शशुवण्णा शहिलण्णा णवणाडअदंशणुट्ठिदा शुत्तदालि व्व वशन्तशेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा । ता जइ मम हत्थे शअं ज्जेव पट्ठाविअ एणं शमप्पेशि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविश्शदि । आदु अणिज्जादमाणाह मलणन्तिके वेले हुविश्शदि । अवि अ पेक्ख ।

कश्चालुका गोच्छडडित्तवेण्टा शाके अ शुक्खे तलिदे हु मंशे ।
भत्ते अ हेमन्तिअलत्तिशिद्धे लीणे अ वेले ण हु होदि पूदी ॥५१॥

---

(क) केन । (ख) दुर्गत्या । (ग) अरे, हस हस ।
(घ) हसिष्यामः । (ङ) कदा ।
(च) पुनरपि ऋद्ध्यार्यचारुदत्तस्य ।

---

दुष्टवटो । अरे रो(रु)दिहि ॥ अरे दुष्टवटुक, भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्—'एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । ततोऽधिकरणे व्यवहारं विना इत्यनेन व्यवहारनाम्नो नवमाङ्कस्य सूचनम् । लघु शीघ्रम् । णिज्जादमाणाह निर्यातयतः । तव मयानुबद्धा प्रीतिर्भविष्यति । अणिज्जादमाणाह अनिर्यातयतः । मरणान्तिकं वैरं भविष्यति । अपि च प्रेक्षस्व । **कश्चालुका इत्यादि** । उपजातिच्छन्दसा । कूष्माण्डी गोमयलिप्तवृन्ता शाकं च शुष्कं पलिरं प्रचुरप्रलेहं मांसम् । 'तलिदं स्नेहपक्के देशी' इत्येके । 'भडिदे' इति पाठे भटित्रमित्यर्थः । 'शूलाकृतं भटित्रं च' इत्यमरः । भक्तं च हैमन्तिकरात्रिसिद्धं लीणे अ ऋणं च वैरं च न भवति ।

शोश्तकं भणेशि, लश्तकं भणेशि । त॰ ॰ ज॰ अत्तणकेलिकाए पाशादबालग्गकवोदवालिआए ॰िविट्ठे शुणामि अण्णधा जदि भणेशि, ता कवालपविट्ठकवित्थगुडिअं विअ मश्तअं दे मडमडाइश्शम् (क)

विदूषकः—भणिस्सम् । (ख)

शकारः—(अपवार्य ।) चेडे, गडे शच्चकं जेव भावे । (ग)

चेटः—अध इं । (घ)

शकारः—ता शिग्घं अवक्कमम्ह । (ङ)

---

(क) अरे दुष्टबटुक, भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्—'एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना लघु निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति । अथवानिर्यातयतो मरणान्तिकं वैरं भविष्यति । अपि च प्रेक्षस्व ।

कूष्माण्डी गोमयलिप्तवृन्ता, शाकं च शुष्कं, तलितं खलु मांसम् ।
भक्तं च हैमन्तिकरात्रिसिद्धं लीनायां च वेलायां न खलु भवति पूतिः ॥

शोभनं भणिष्यसि, कपटं भणिष्यसि । तथा भणिष्यसि यथाहमात्मकीयायां प्रासादबालाग्रकपोतपालिकायामुपविष्टः शृणोमि । अन्यथा यदि भणसि, तदा कपाटप्रविष्टकपित्थगुलिकमिव मस्तकं ते मडमडायिष्यामि ।

(ख) भणिष्यामि । (ग) चेटः गतः सत्यमेव भावः ।
(घ) अथ किम् । (ङ) तच्छीघ्रमपक्रमावः ।

---

पूदी पूतिः ॥ चिरंतनत्वेन प्रशिथिलं स्वकार्यम् ॥ ५१ ॥ शोस्तकं शोभनम् । लस्तकं सकपटम् । भणिष्यसि । तथा भणिष्यसि । भण(णे)शीति भविष्यद्वर्तमानयोस्तुल्यं रूपम् । यथाहमात्मकीयायां प्रासादस्य बालाग्रलक्षितायां कपोतपालिकायां विटङ्के । 'बालाग्रं मत्तवारणम् । कपोतपालिका उपरिगृहश्रेणी' इति दक्षिणापथे लोकोक्तिरियम्' इति प्राचीनटीका । तस्यामुपविष्टः शृणोमि । अन्यथा यदि भणसि तदा कपाटप्रविष्टं कपित्थगुलिकमिव मस्तकं तव शब्दविशेषयुक्तं तथा भक्षयिष्यामि लोकोक्त्या मडमडायिश्शमिति व्याख्यायते । कपित्थं फलविशेषः । 'लस्तकं शोस्तकं द्वयमपि शोभनार्थम्' इति प्राचीनटीका ॥ हे चेट, गतो भावो विटः सत्यम् ॥ ततः शीघ्रमपक्रमावः ॥

—·—·—केण भट्टके अशिम् । (क)

**शकारः**—तव ज्जेव हत्थे चिट्ठदु । (ख)

**चेटः**—एशे भट्टालके । गेण्हदु णं भट्टके अशिम् । (ग)

**शकारः**—(विपरीतं गृहीत्वा ।)

णिव्वक्कलं मूलकपेशिवण्णं खन्धेण घेत्तूण अ कोशशुत्तम् ।
कुक्केहि कुक्कीहि अ बुक्कअन्ते जधा शिआले शलणं पलामि॥५२॥(घ)

(परिक्रम्य निष्क्रान्तौ ।)

**विदूषकः**—भोदि रदणिए, ण क्खु दे अअं अवमाणो तत्तभवदो चारुदत्तस्स णिवेदइदव्वो । दोग्गच्चपीडिअस्स मण्णे दिउणदरा पीडा हुविस्सदि । (ङ)

**रदनिका**—अज्ज मित्तेअ, रदणिआ क्खु अहं संजदमुही । (च)

**विदूषकः**—एवं ण्णेदम् । (छ)

**चारुदत्तः**—(वसन्तसेनामुद्दिश्य ।) रदनिके, मारुताभिलाषी प्रदोषसमयशीतार्तो रोहसेनः । ततः प्रवेश्यतामभ्यन्तरमयम् । अनेन प्रावारकेण छादयैनम् । (इति प्रावारकं प्रयच्छति ।)

---

(क) तद्गृण्हातु भट्टारकोऽसिम् । (ख) तवैव हस्ते तिष्ठतु ।

(ग) एष भट्टारकः । गृण्हात्वेनं भट्टारकोऽसिम् ।

(घ) निर्वल्ककं मूलकपेशिवर्णं स्कन्धेन गृहीत्वा च कोशसुप्तम् ।
कुक्कुरैः कुक्कुरीभिश्च बुक्कयमानो यथा शृगालः शरणं प्रयामि ॥

(ङ) भवति रदनिके, न खलु तेऽयमपमानस्तत्रभवतश्चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति ।

(च) आर्य मैत्रेय, रदनिका खल्वहं संयतमुखी । (छ) एवमिदम् ।

---

गृह्णातु भट्टारकोऽसिम् ॥ तवैव हस्ते तिष्ठतु ॥ एषोऽसिः । भट्टारकः स्वामिकः । गृह्णात्वेनं भट्टारकोऽसिम् ॥ **णिव्वक्कलमित्यादि** । उपजातिच्छन्दसा । निर्वल्कलं मूलकपेशिवण्णम् । पेशी त्वक् । मूलकत्वग्वर्णम् । आलोहितमित्यर्थः । स्कन्धेन गृहीत्वा च कोशीषु सुप्तम् । अल्पार्थे स्त्रीत्वम् । कोशावस्थितमित्यर्थः । कुक्कुरैः कुक्कुरीभिश्च शब्दायमानो यथा शृगालस्तथा स्वगृहं प्रयामि । विदूषकरदनिके कुक्कुरकुक्कुरीस्थाने ॥ ५२ ॥ न खलु ते परिभवश्चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य द्विगुणतरा पीडा भविष्यति ॥ एवं ण्णेदमिति

(उभौ नाट्येन प्रविश्योपविशतः ।)

**विदूषकः**—वड्ढमाणअ, रअणिअं सद्दावेहि पादाइं धोइदुम् । (क)

**चारुदत्तः**—(सानुकम्पम् ।) अलं सुप्तजनं प्रबोधयितुम् ।

**चेटः**—अज्जमित्तेअ, अहं पाणिअं गेण्हे । तुमं पादाइं धोवेहि । (ख)

**विदूषकः**—(सक्रोधम् ।) भो वअस्स, एसो दाणिं दासीए पुत्तो भविअ पाणिअं गेण्हेदि । मं उण बम्हणं पादाइं धोवावेदि । (ग)

**चारुदत्तः**—वयस्य मैत्रेय, त्वमुदकं गृहाण । वर्धमानकः पादौ प्रक्षालयतु ।

**चेटः**—अज्जमित्तेअ, देहि उदअम् । (घ)

(विदूषकस्तथा करोति । चेटश्चारुदत्तस्य पादौ प्रक्षाल्यापसरति ।)

**चारुदत्तः**—दीयतां ब्राह्मणस्य पादोदकम् ।

**विदूषकः**—किं मम पादोदएहिं । भूमीए ज्जेव मए ताडिदगद्दहेण विअ पुणोवि लोट्टिदव्वम् । (ङ)

**चेटः**—अज्जमित्तेअ, बम्हणे क्खु तुमम् । (च)

**विदूषकः**—जधा सव्वणागाणं मज्झे डुण्डुहो, तधा सव्वबम्हणाणं मज्झे अहं बम्हणो । (छ)

**चेटः**—अज्जमित्तेअ, तधा वि धोइश्शम् । (तथा कृत्वा ।) अज्ज-

---

(क) वर्धमानक, रदनिकामाकारय पादौ धावितुम् ।

(ख) आर्यमैत्रेय, अहं पानीयं गृह्णामि । त्वं पादौ धाव ।

(ग) भो वयस्य, एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति । मां पुनर्ब्राह्मणं पादौ धावयति ।

(घ) आर्यमैत्रेय, देह्युदकम् ।

(ङ) किं मम पादोदकैः । भूम्यामेव मया ताडितगर्दभेनेव लोठितव्यम् । (च) आर्यमैत्रेय, ब्राह्मणः खलु त्वम् ।

(छ) यथा सर्वनागानां मध्ये डुण्डुभः; तथा सर्वब्राह्मणानां ब्राह्मणः ।

मित्तेअ, एदं तं शुवण्णगण्डअं मम दिवा, तुह लत्तिं च । ता गेण्ह । (क) (इति दत्त्वा निष्क्रान्तः ।)

**विदूषकः**—(गृहीत्वा ।) अज्ज वि एदं चिट्ठदि । किं एत्थ उज्जइणीए चोरो वि णत्थि, जो एदं दासीए पुत्तं णिद्दाचोरं ण अवहरदि । भो वअस्स, अब्भन्तरचतुस्सालअं पवेसआमि णम् । (ख)

**चारुदत्तः**—

अलं चतुःशालमिमं प्रवेश्य प्रकाशनारीधृत एष यस्मात् ।
तस्मात्स्वयं धारय विप्र तावद्यावन्न तस्याः खलु भोः समर्प्यते॥७॥

(निद्रां नाटयन्, 'तं तस्य स्वरसंक्रमम्–' (३।५) इति पुनः पठति ।)

**विदूषकः**—अवि णिद्दाअदि भवम् । (ग)

**चारुदत्तः**—अथ किम् ।

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम् ।
अदृश्यरूपा चपला जरेव या मनुष्यसत्त्वं परिभूय वर्धते ॥ ८ ॥

**विदूषकः**—ता सुवेम्ह । (घ) (नाट्येन स्वपिति ।)

(ततः प्रविशति शर्विलकः ।)

**शर्विलकः**—

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ ९ ॥

(ङ)

वेदयित॰ आर्यमैत्रेय, तथापि धाविष्यामि । आर्यमैत्रेय, एतत्तत्सुवर्णभाण्डं
(च॰ दिवा, तव रात्रौ च । तद्गृहाण ।

अद्याप्येतत्तिष्ठति । किमत्रोज्जयिन्यां चौरोऽपि नास्ति, य एतं
गृह्णातु म॰
गृह्णात्वेन॰ दास्याः पुत्रं निद्राचौरं नापहरति । भो वयस्य, अभ्यन्तरचतुःशालकं प्रवे-
निर्व॰ शयामि एनम् ।

त्यर्थः ।) अपि निद्राति भवान् । (घ) तत्स्वपिवः ।

मित्यर्थ॰ गमि (?) । कवाटमुद्धाट्यावकाशं बिभरामीत्यर्थः (?) ॥ **अलमिति** ।
विदूषकरी वेश्या ॥ ७ ॥ **इयमिति** । मनुष्यसत्त्वं नृसत्ताम् । मनुष्यमिति
निवेदयित ॥ **कृत्वेति** । कर्ममार्गं संधिम् । यथा जीर्णतनुः सर्पः मुच्यमान-

प्रविश गृहमिति प्रतोद्यमाना
न चलति भाग्यकृतां दशामवेक्ष्य।
पुरुषपरिचयेन च प्रगल्भं
न वदति यद्यपि भाषते बहूनि ॥ ५६ ॥

(प्रकाशम्।) भवति वसन्तसेने, अनेनाविज्ञानादपरिज्ञातपरिजनोपचारेणापराद्धोऽस्मि। शिरसा भवतीमनुनयामि।

**वसन्तसेना**—एदिणा अणुचिदभूमिआरोहणेण अवरज्झा अज्जं सीसेण पणमिअ पसादेमि। (क)

**विदूषकः**—भो, दुवेवि तुम्हे सुखं पणमिअ कलमकेदारा अण्णोण्णं सीसेण सीसं समाअदा। अहं पि इमिणा करहजाणुसरिसेण सीसेण दुवेवि तुम्हे पसादेमि। (ख) (इत्युत्तिष्ठति।)

**चारुदत्तः**—भवतु। तिष्ठतु प्रणयः।

**वसन्तसेना**—(स्वगतम्।) चदुरो मधुरो अ अअं उवण्णासो। ण जुत्तं अज्ज एरिसेण इध आअदाए मए पडिवसिदुम्। भोदु। एव्वं दाव भणिस्सम्। (प्रकाशम्।) अज्ज, जइ एव्वं अहं अज्जस्स अणुग्गेज्झा ता इच्छे अहं इमं अलंकारअं अज्जस्स गेहे णिक्खिविदुम्। अलंकारस्स णिमित्तं एदे पावा अणुसरन्ति। (ग)

**चारुदत्तः**—अयोग्यमिदं न्यासस्य गृहम्।

---

(क) एतेनानुचितभूमिकारोहणेनापराद्धार्यं शीर्षेण प्रणम्य प्रसादयामि।
(ख) भोः, द्वावपि युवां सुखं प्रणम्य कलमकेदारावन्योन्यं शीर्षेण शीर्षं समागतौ। अहमप्यमुना करभजानुसदृशेन शीर्षेण द्वावपि युवां प्रसादयामि।
(ग) चतुरो मधुरश्चायमुपन्यासः। न युक्तमद्येदृशेनेहागतया मया प्रतिवस्तुम्। भवतु। एवं तावद्भणिष्यामि। आर्य, यद्येवमहमार्यस्यानुग्राह्या तदिच्छाम्यहमिममलंकारकमार्यस्य गेहे निक्षेप्तुम्। अलंकारस्य निमित्तमेते पापा अनुसरन्ति।

---

भिलाषो नास्तीत्यर्थः ॥ देवतेवोपस्थानं यस्याः सा। **प्रविश गृहमिति।** पुष्पिताग्रा वृत्तम् ॥ ५६ ॥ अनुचितभूमिसमारोहणं पक्षद्वारेणावासप्रवेशादिकम् ॥ करभ उष्ट्रशिशुः ॥ प्रणय इत्यनेन संभोगप्रार्थना कटाक्षिता ॥ ईदृशेना-

**वसन्तसेना**—अज्ज, अलीअम् । पुरुसेसु णासा णिक्खिविअन्ति, ण उण गेहेसु । (क)

**चारुदत्तः**—मैत्रेय, गृह्यतामयमलंकारः ।

**वसन्तसेना**—अणुग्गहिदम्हि । (ख) (इत्यलंकारमर्पयति ।)

**विदूषकः**—(गृहीत्वा ।) सोत्थि भोदिए । (ग)

**चारुदत्तः**—धिङ् मूर्ख, न्यासः खल्वयम् ।

**विदूषकः**—(अपवार्य ।) जइ एव्वं ता चोरेहिं हरिज्जउ । (घ)

**चारुदत्तः**—अचिरेणैव कालेन ।

**विदूषकः**—एसो से अम्हाणं विण्णासो । (ङ)

**चारुदत्तः**—निर्यातयिष्ये ।

**वसन्तसेना**—अज्ज, इच्छे अहम्, इमिणा अज्जेण अणुगच्छिज्जन्ती सकं गेहं गन्तुम् । (च)

**चारुदत्तः**—मैत्रेय, अनुगच्छ तत्रभवतीम् ।

**विदूषकः**—तुमं ज्जेव एदं कलहंसगामिणीं अणुगच्छन्तो राअहंसो विअ सोहसि । अहं उण वह्मणो जहिं जहिं जणेहिं चउप्पहोवणीदो उवहारो कुक्कुरेहिं विअ खज्जमाणो विवज्जिस्सम् । (छ)

**चारुदत्तः**—एवं भवतु । स्वयमेवानुगच्छामि तत्रभवतीम् । तद्राजमार्गविश्वासयोग्याः प्रज्वाल्यन्तां प्रदीपिकाः ।

**विदूषकः**—वड्ढमाणअ, पज्जालेहि पदीविआओ । (ज)

---

(क) आर्य, अलीकम् । पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु ।

(ख) अनुगृहीतास्मि । (ग) स्वस्ति भवत्यै ।

(घ) यद्येवं तदा चोरैर्ह्रियताम् । (ङ) एषोऽस्या अस्माकं विन्यासः ।

(च) आर्य, इच्छाम्यहम्, अनेनार्येणानुगम्यमाना स्वकं गेहं गन्तुम् ।

(छ) त्वमेवैतां कलहंसगामिनीमनुगच्छन्राजहंस इव शोभसे । अहं पुनर्ब्राह्मणो यत्र तत्र जनैश्चतुष्पथोपनीत उपहारः कुक्कुरैरिव खाद्यमानो विपत्स्ये । (ज) वर्धमानक, प्रज्वालय प्रदीपिकाः ।

---

गृहीतसंभोगोपकरणादिना । पापा अकार्यकारिणः ॥ भग्नत्वाद्रक्षकाभावाच्चायोग्यता ॥ आर्य, पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु ॥ अत्यन्तप्रश्रयवत्त्वादनुग्रहः ॥ चोरेहिं हरिज्जउ इति संधिच्छेदनाम्नस्तृतीयाङ्कस्य सूचनम् ॥ सकं स्वकम् ॥ चतुष्पथोपनीत इवोपहारो देवताबलिरूपः खाद्यमानो विपत्स्ये ॥

**चेटः**—(जनान्तिकम् ।) अले, तेल्लेण विणा पदीविआओ पज्जालीअन्ति । (क)

**विदूषकः**—(जनान्तिकम् ।) ही, ताओ क्खु अम्हाणं पदीविआओ अवमाणिदनिद्धणकामुआ विअ गणिआ णिस्सिणेहाओ दाणिं संवुत्ता । (ख)

**चारुदत्तः**—मैत्रेय, भवतु । कृतं प्रदीपिकाभिः । पश्य ।

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
ग्रहगणपरिवारो राजमार्गप्रदीपः ।
तिमिरनिकरमध्ये रश्मयो यस्य गौराः
स्रुतजल इव पङ्के क्षीरधाराः पतन्ति ॥ ५७ ॥

(सानुरागम् ।) भवति वसन्तसेने, इदं भवत्या गृहम् । प्रविशतु भवती ।

(वसन्तसेना सानुरागमवलोकयन्ती निष्क्रान्ता ।)

**चारुदत्तः**—वयस्य, गता वसन्तसेना । तदेहि । गृहमेव गच्छावः ।

राजमार्गो हि शून्योऽयं रक्षिणः संचरन्ति च ।
वञ्चना परिहर्तव्या बहुदोषा हि शर्वरी ॥ ५८ ॥

(परिक्रम्य ।) इदं च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ, वर्धमानकेनापि दिवा ।

**विदूषकः**—जधा भवं आणवेदि । (ग)

(इति निष्क्रान्तौ ।)

**इति मृच्छकटिकेऽलंकारन्यासो नाम प्रथमोऽङ्कः ।**

---

(क) अरे, तैलेन विना प्रदीपिकाः प्रज्वाल्यन्ते ।

(ख) आश्चर्यम्, ताः खल्वस्माकं प्रदीपिका अपमानितनिर्धनकामुका इव गणिका निःस्नेहा इदानीं संवृत्ताः । (ग) यथा भवानाज्ञापयति ।

---

ही आश्चर्ये । यत एव निर्धनोऽत एवापमानितः । निःस्नेहा निस्तैलाश्च । स्नेहोऽनुरागस्तैलं च । संवुत्ता संवृत्ताः ॥ भवत्वित्युपसंहारोक्तिः । **उदयतीति** । यस्य हिमांशोस्तमोवृन्दमध्ये शुभ्रा रश्मयः पतन्ति । यथा प्रभूतजले कर्दमे दुग्धधाराः ॥ ५७ ॥ **राजमार्ग इति** ॥ ५८ ॥

इति महोपाध्यायश्रीपृथ्वीधरकृतौ मृच्छकटिकाविवृतौ न्यासार्पणो नाम प्रथमोऽङ्कः ।

द्वितीयोऽङ्कः ।

(प्रविश्य)

**चेटी**—अत्ताए अज्जआसआसं संदेसेण पेसिदम्हि । ता जाव पविसिअ अज्जआसआसं गच्छामि । (परिक्रम्यावलोक्य च ।) एसा अज्जआ हिअएण किंपि आलिहन्ती चिट्ठदि । ता जाव उपसप्पामि । (क)

(ततः प्रविशत्यासनस्था सोत्कण्ठा वसन्तसेना मदनिका च ।)

**वसन्तसेना**—हञ्जे, तदो तदो । (ख)

**चेटी**—अज्जए, ण किंपि मन्तेसि । किं तदो तदो । (ग)

**वसन्तसेना**—किं मए भणिदम् । (घ)

**चेटी**—तदो तदो त्ति । (ङ)

**वसन्तसेना**—(सभ्रूक्षेपम् ।) आं, एव्वम् । (च)

(उपसृत्य)

**प्रथमा चेटी**—अज्जए, अत्ता, आदिसदि—'ण्हादा भविअ देवदाणं पूअं णिव्वत्तेहि' त्ति । (छ)

**वसन्तसेना**—हञ्जे, विण्णवेहि अत्तम्—'अज्ज ण ण्हाइस्सम् । ता बम्हणो ज्जेव पूअं णिव्वत्तेदु' त्ति । (ज)

**चेटी**—जं अज्जआ आणवेदि । (झ) (इति निष्क्रान्ता ।)

---

(क) मात्रार्यासकाशं संदेशेन प्रेषितास्मि । तद्यावत्प्रविश्यार्यासकाशं गच्छामि । एषार्या हृदयेन किमप्यालिखन्ती तिष्ठति । तद्यावदुपसर्पामि ।

(ख) चेटि, ततस्ततः ।

(ग) आर्ये, न किमपि मन्त्रयसि । किं ततस्ततः ।

(घ) किं मया भणितम् । (ङ) ततस्तत इति । (च) आं एवम् ।

(छ) आर्ये, मातादिशति—'स्नाता भूत्वा देवतानां पूजां निर्वर्तय' इति ।

(ज) चेटि, विज्ञापय मातरम्—'अद्य न स्नास्यामि । तद्ब्राह्मण एव पूजां निर्वर्तयतु' इति । (झ) यदार्याज्ञापयति ।

---

अत्ताए वसन्तसेनामात्रा । अज्जआसआसं वसन्तसेनासकाशम् । संदेशेन प्रयोजनार्थम् ॥ हञ्जे नीचे । 'हञ्जे, तदो तदो' इत्युन्माददशारीत्युपन्यासः ॥

fault finding

मदनिका—अज्जए, सिणेहो पुच्छदि, ण पुरोभाइदा, ता किं णेदम्। (क)

वसन्तसेना—मदणिए, केरिसिं मं पेक्खसि। (ख)

मदनिका—अज्जआए सुण्णहिअअत्तणेण जाणामि, हिअअगदं कंपि अज्जआ अहिलसदि त्ति। (ग)

वसन्तसेना—सुट्ठु तुए जाणिदम्। परहिअअग्गहणपण्डिआ मदणिआ क्खु तुमम्। (घ)

मदनिका—पिअं मे पिअम्। कामो क्खु णाम एसो भअवं। अणुगहिदो महूसवो तरुणजणस्स। ता कधेदु अज्जआ, किं राआ, राअवल्लहो वा सेवीअदि। (ङ)

वसन्तसेना—हञ्जे, रमिदुमिच्छामि, ण सेविदुम्। (च)

मदनिका—विज्जाविसेसालंकिदो किं कोवि बम्हणजुआ कामीअदि। (छ)

वसन्तसेना—पूअणीओ मे बम्हणो जणो। (ज)

मदनिका—किं अणेअणअराहिगमणजणिदविहववित्थारो वाणिअजुआ वा कामीअदि। (झ)

(क) आर्ये, स्नेहः पृच्छति, न पुरोभागिता, तत्किं न्विदम्।

(ख) मदनिके, कीदृशीं मां प्रेक्षसे।

(ग) आर्यायाः शून्यहृदयत्वेन जानामि, हृदयगतं कमप्यार्याभिलषतीति।

(घ) सुष्ठु त्वया ज्ञातम्। परहृदयग्रहणपण्डिता मदनिका खलु त्वम्।

(ङ) प्रियं मे प्रियम्। कामः खलु नामैष भगवान्। अनुगृहीतो महोत्सवस्तरुणजनस्य। तत्कथयत्वार्या, किं राजा, राजवल्लभो वा सेव्यते।

(च) चेटि, रन्तुमिच्छामि, न सेवितुम्।

(छ) विद्याविशेषालंकृतः किं कोऽपि ब्राह्मणयुवा काम्यते।

(ज) पूजनीयो मे ब्राह्मणजनः।

(झ) किमनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते।

अज्जआ वसन्तसेनैव। ण्हादा स्नाता। पूअं पूजाम्॥ पुरोभाइदा पुरोभागिता दोषदर्शिता। 'दोषैकदृक्पुरोभागी' इत्यमरः। दोषशून्यत्वेनेति भावः॥ भअवं भगवान्। 'भअवदा' इत्यपि पाठः। भगवता हरेण। स्वीकृतोऽनुगृहीतो

**वसन्तसेना**—हञ्जे, उवारूढसिणेहं पि पणइजणं परिच्चइअ देसन्तरगमणेण वाणिअजणो महन्तं विओअजं दुक्खं उप्पादेदि। (क)

**मदनिका**—अज्जए, ण राआ, ण राअवल्लहो, ण बम्हणो, ण वाणिअजणो। ता को दाणिं सो भट्टिदारिआए कामीअदि। (ख)

**वसन्तसेना**—हञ्जे, तुमं मए सह कामदेवाअदणुज्जाणं गदा आसि। (ग)

**मदनिका**—अज्जए, गदम्हि। (घ)

**वसन्तसेना**—तह वि मं उदासीणा विअ पुच्छसि। (ङ)

**मदनिका**—जाणिदम्। किं सो ज्जेव जेण अज्जआ सरणाअदा अब्भुववण्णा। (च)

**वसन्तसेना**—किंणामहेओ क्खु सो। (छ)

**मदनिका**—सो क्खु सेट्ठिचत्तरे पडिवसदि। (ज)

**वसन्तसेना**—अइ, णामं से पुच्छिदासि। (झ)

**मदनिका**—सो क्खु अज्जए, सुगहीदणामहेओ अज्जचारुदत्तो णाम। (ञ)

---

(क) चेटि, उपारूढस्नेहमपि प्रणयिजनं परित्यज्य देशान्तरगमनेन वाणिजजनो महद्वियोगजं दुःखमुत्पादयति।

(ख) आर्ये, न राजा, न राजवल्लभः, न ब्राह्मणः, न वाणिजजनः। तत्क इदानीं स भर्तृदारिकया काम्यते।

(ग) चेटि, त्वं मया सह कामदेवायतनोद्यानं गतासीः।

(घ) आर्ये, गतास्मि। (ङ) तथापि मामुदासीनेव पृच्छसि।

(च) ज्ञातम्। किं स एव येनार्या शरणागताभ्युपपन्ना।

(छ) किंनामधेयः खलु सः।

(ज) स खलु श्रेष्ठिचत्वरे प्रतिवसति। (झ) अयि, नामास्य पृष्टासि।

(ञ) स खलु आर्ये, सुगृहीतनामधेय आर्यचारुदत्तो नाम।

---

वा॥ ण सेविदुम्। कामोपभोगरसिकास्मि। न द्रव्यार्थिनीत्यर्थः॥ पूजनीयाश्च ये भवन्ति तेषां विलासवैमुख्यं सदेति भावः॥ उवारूढसिणेहं विवृद्धस्नेहम्॥ भट्टिदारिआए ईश्वरसुतया॥ सुहिदा सुखयुक्ता(?)॥ अभ्युपपन्ना स्वीकृता॥ सु-

**वसन्तसेना**—(सहर्षम् ।) साहु मदणिए, साहु । सुट्ठु तुए जाणिदम् । (क)

**मदनिका**—(स्वगतम् ।) एव्वं दाव । (प्रकाशम् ।) अज्जए, दलिद्दो क्खु सो सुणीअदि । (ख)

**वसन्तसेना**—अदो ज्जेव कामीअदि । दलिद्दपुरिससंकन्तमणा क्खु गणिआ लोए अवअणीआ भोदि । (ग)

**मदनिका**—अज्जए, किं हीणकुसुमं सहआरपादवं महुअरीओ उण सेवन्ति । (घ)

**वसन्तसेना**—अदो ज्जेव ताओ महुअरीओ वुच्चन्ति । (ङ)

**मदनिका**—अज्जए, जइ सो मणीसिदो ता कीस दाणिं सहसा ण अहिसारीअदि । (च)

**वसन्तसेना**—हञ्जे, सहसा अहिसारिअन्तो पच्चुअआरदुब्बलदाए, मा दाव, जणो दुल्लहदंसणो पुणो भविस्सदि । (छ)

**मदनिका**—किं अदो ज्जेव सो अलंकारओ तस्स हत्थे णिक्खत्तो । (ज)

---

(क) साधु मदनिके, साधु । सुष्ठु त्वया ज्ञातम् ।

(ख) एवं तावत् । आर्ये, दरिद्रः खलु स श्रूयते ।

(ग) अत एव काम्यते । दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेऽवचनीया भवति ।

Honey-makers

(घ) आर्ये, किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ।

(ङ) अत एव ता मधुकर्य उच्यन्ते ।

(च) आर्ये, यदि स मनीषितस्तत्किमर्थमिदानीं सहसा नाभिसार्यते ।

(छ) चेटि, सहसाभिसार्यमाणः प्रत्युपकारदुर्बलतया, मा तावत्, जनो दुर्लभदर्शनः पुनर्भविष्यति ।

(ज) किमत एव सोऽलंकारस्तस्य हस्ते निक्षिप्तः ।

---

गृहीतनामधेयो दातृत्वेन ॥ दरिद्रपुरुषदत्तमना अवचनीया भवति अर्थानभिलाषित्वात् । अतिख(?)श्चारुदत्तो ब्राह्मणः, अनध्यापकत्वेन विलासी, अन्यश्च श्रोत्रियः, तर्कतन्त्रप्रवीणः, पूजनीयः, न काम्यो विलासवैमुख्यादित्याशयः ॥ महुअरीओ इति । मधु कुर्वन्ति सेवन्ते । मत्ता इत्यर्थः ॥ भट्टेति द्यूतकरस्य सं-

**वसन्तसेना**—हञ्जे सुट्ठु दे जाणिदम् । (क)

(नेपथ्ये ।)

अले भट्टा, दशसुवण्णाह लुद्ध जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ । दूलात्पदिट्ठो सि । (ख)

(प्रविश्यापटीक्षेपेण संभ्रान्तः)

**संवाहकः**—हीमाणहे । कट्टे एशे जुदिअलभावे ।

णवबन्धणमुक्काए विअ
गद्दहीए हा ताडिदो म्हि गद्दहीए ।
अङ्गलाअमुक्काए विअ शत्तीए
घडुक्को विअ घादिदो म्हि शत्तीए ॥ १ ॥

लेखअवावडहिअअं शहिअं दट्ठूण झत्ति पब्भट्टे ।
एण्हिं मग्गणिवडिदे कं णु क्खु शलणं पपज्जे ॥ २ ॥

ता जाव एदे शहिअजूदिअला अण्णदो मं अण्णेशन्ति, ताव हं

---

(क) चेटि, सुष्ठु त्वया ज्ञातम् ।

(ख) अरे भट्टारक, दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । दूरात्प्रदृष्टोऽसि ।

---

बोधनम् । दशसुवर्णकृते लुद्धु रुद्धः । पपलीणु प्रपलायितः । दश सुवर्णा लभ्या 'यस्य पार्श्वे स द्यूतकरः प्रपलायितः । अतो गृहाण धारय । तिष्ठ तिष्ठ । दूरादेव दृष्टोऽसि । सभ्यानुद्दिश्य ब्रूते । 'लब्धः' इति पाठे दशसुवर्णानां द्यूतकरो लब्धः। प्रपलायित इत्यर्थः ॥ हीमाणहे इति विस्मये । कष्ट एष द्यूतकरभावः । **णवबन्धणेत्यादि** । चित्रजातिः । गद्दहीति गर्दभीनामधेय्या । हा कष्टम् । ताडितोऽस्मि । गद्दहीति वराटिकानाम । गर्दभीशक्तिके आर्थी इति प्रसिद्धद्यूतके कपर्दकनामधेये । नवबन्धनान्मुक्तयेव गर्दभ्या पशुविशेषेण ताडितोऽस्मि गर्दभ्या ताडनस्वभावा सा यतः । अङ्गराजेन कर्णेन मुक्तयेव शक्त्या अस्त्रविशेषेण घटोत्कचो भीमसेनसुत इव ताडितोऽस्मि शक्त्या ॥ १ ॥ **लेखएत्यादि** । गाथा । लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः । इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये । कं नु खल्विति विमर्षे ॥ २ ॥ तद्यावदेतौ सभिकद्यू-

विप्पडीवेहिं पादेहिं एदं शुण्णदेउलं पविशिअ देवीभविश्शम् ।(क)
(बहुविधं नाट्यं कृत्वा तथा स्थितः ।)

(ततः प्रविशति माथुरो द्यूतकरश्च ।)

**माथुरः**—अले भट्टा, दशसुवण्णाह लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ । दूरात्पदिट्ठोऽसि । (ख)

**द्यूतकरः**—

जइ वज्जसि पादालं इन्दं शलणं च संपदं जासि ।
सहिअं वज्जिअ एक्कं रुद्दो वि ण रक्खिदुं तरइ ॥ ३ ॥ (ग)

**माथुरः**—

कहिं कहिं सुसहिअविप्पलम्भआ
पलासि ले भअपलिवेविदङ्गआ ।
पदे पदे समविसमं खलन्तआ
कुलं जसं अदिकसणं कलेन्तआ ॥ ४ ॥ (घ)

---

(क) आश्चर्यम् । कष्ट एष द्यूतकरभावः ।
नवबन्धनमुक्तयेव गर्दभ्या हा ताडितोऽस्मि गर्दभ्या ।
अङ्गराजमुक्तयेव शक्त्या घटोत्कच इव घातितोऽस्मि शक्त्या ॥
लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः ।
इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये ॥
तद्यावदेतौ सभिकद्यूतकरावन्यतो मामन्विष्यतः, तावदहं विपरीताभ्यां पादाभ्यामेतच्छून्यदेवकुलं प्रविश्य देवीभविष्यामि ।

(ख) अरे भट्टारक, दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । दूरात्प्रदृष्टोऽसि ।

(ग) यदि व्रजसि पातालमिन्द्रं शरणं च सांप्रतं यासि ।
सभिकं वर्जयित्वैकं रुद्रोऽपि न रक्षितुं तरति ॥

(घ) कुत्र कुत्र सुसभिकविप्रलम्भक पलायसे रे भयपरिवेपिताङ्गक ।
पदे पदे समविषमं स्खलन्कुलं यशोऽतिकृष्णं कुर्वन् ॥

---

तकरौ मामन्यतोऽन्विष्यतस्तावत् । हके अहम् । विपरीतपादाभ्यामेतच्छून्यं देवकुलं प्रविश्य देवीभविष्यामि । देवीति च्व्यन्तम् ॥ **जइ वज्जसीत्यादि** । आर्या । यदि गच्छसि पातालमिन्द्रं शरणं च सांप्रतं यासि । सभिकं वर्जयित्वैकं रुद्रोऽपि न रक्षितुं शक्नोति ॥ ३ ॥ **कहिं कहिमित्यादि** । रुचिरा वृत्तम् । कुत्र कुत्र सुसभिकविप्रलम्भक पलायसे रे भयपरिवेपमानाङ्गक । पदे पदे सम-

**द्यूतकरः**—(पदं वीक्ष्य।) एसो वज्जदि। इअं पणट्ठा पदवी। (क)

**माथुरः**—(आलोक्य सवितर्कम्।) अले, विप्पदीवु पादु। पडिमाशुण्णु देउलु। (विचिन्त्य।) धुत्तु जूदकरु विप्पदीवेहिं पादेहिं देउलं पविट्ठो। (ख)

**द्यूतकरः**—ता अणुसरेम्ह। (ग)

**माथुरः**—एव्वं भोदु। (घ)

(उभौ देवकुलप्रवेशं निरूपयतः। दृष्ट्वान्योन्यं संज्ञाप्य।)

**द्यूतकरः**—कधं कट्ठमयी पडिमा। (ङ)

**माथुरः**—अले, णहु णहु। शैलपडिमा। (इति बहुविधं चालयति। संज्ञाप्य च।) एव्वं भोदु। एहि। जूदं किलेम्ह। (च) (इति बहुविधं द्यूतं क्रीडति।)

**संवाहकः**—(द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा स्वगतम्।) अले,

कत्ताशद्दे णिण्णाणअश्श हलइ हडकं मनुश्शश्श।
ढक्काशद्दे व्व णडाधिवश्श पब्भट्टलज्जश्श॥ ५॥

---

(क) एष व्रजति। इयं प्रनष्टा पदवी।

(ख) अरे, विप्रतीपौ पादौ। प्रतिमाशून्यं देवकुलम्। धूर्तो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः।

(ग) ततोऽनुसरावः। (घ) एवं भवतु।

(ङ) कथं काष्ठमयी प्रतिमा।

(च) अरे, न खलु न खलु। शैलप्रतिमा। एवं भवतु। एहि। द्यूतेन क्रीडावः।

---

विषमं यथा स्यादेवं स्खलन्कुलं यशश्चातिकृष्णं कुर्वन्॥ ४॥ भट्टा भट्टेत्यन्योन्यसंबोधनम् (?)। अरे, विप्रतीपपादशून्यं देवकुलम्। प्रयोजनाभावेन नात्र मानुष इति भावः। 'धूर्तो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः इत्येके। धूर्तो द्यूतकरो विप्रतीपपादाभ्यां देवकुलं प्रविष्टः॥ ततोऽनुसरावः॥ संज्ञापनं प्रतिमायाम्॥ [**कत्तेति।**] द्यूतकरणं यया सा कत्ता। काड इति प्रसिद्धः। नान्दीपूर इति प्रसिद्धे। द्यूत इत्यन्ये (?)। कत्ताशब्दो निर्नाणकस्य निर्धनस्य हरति पातयति हृदयं मनुष्यस्य। ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य। असात्विका

जाणामि ण कीलिश्शं शुमेलुशिहलपडणशण्णिहं जूअम् ।
तह वि हु कोइलमहुले कत्ताशद्दे मणं हलदि ॥ ६ ॥ (क)

द्यूतकरः—मम पाठे, मम पाठे । (ख)

माथुरः—ण हु । मम पाठे, मम पाठे । (ग)

संवाहकः—(अन्यतः सहसोपसृत्य ।) णं मम पाठे । (घ)

द्यूतकरः—लद्धे गोहे । (ङ)

माथुरः—(गृहीत्वा ।) अले पेदण्डा, गहीदो, सि । पअच्छ तं दशसुवण्णम् । (च)

संवाहकः—अज्ज दइश्शम् । (छ)

माथुरः—अहुणा पअच्छ । (ज)

संवाहकः—दइश्शम् पशादं कलेहि । (झ)

माथुरः—अले, णं संपदं पअच्छ । (ञ)

संवाहकः—शिलु पडदि । (ट) (इति भूमौ पतति ।)

(उभौ बहुविधं ताडयतः ।)

माथुरः—एसु तुमं हु जूदिअरमण्डलीए बद्धोऽसि । (ठ)

---

(क) अरे, कत्ताशब्दो निर्नाणकस्य हरति हृदयं मनुष्यस्य ।
ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य ॥
जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसंनिभं द्यूतम् ।
तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति ॥

(ख) मम पाठे, मम पाठे । (ग) न खलु । मम पाठे मम पाठे ।
(घ) ननु मम पाठे । (ङ) लब्धः पुरुषः ।
(च) अरे लुप्तदण्डक, गृहीतोऽसि । प्रयच्छ तद्दशसुवर्णम् ।
(छ) अद्य दास्यामि । (ज) अधुना प्रयच्छ ।
(झ) दास्यामि । प्रसादं कुरु । (ञ) अरे, ननु सांप्रतं प्रयच्छ ।
(ट) शिरः पतति । (ठ) एष त्वं खलु द्यूतकरमण्डल्या बद्धोऽसि ।

---

इत्यर्थः ॥ ५ ॥ जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसंनिभं द्यूतम् । सुखविनाशकमित्यर्थः । तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति ॥ ६ ॥ मम पाठ इत्यार्थी द्यूतकरोक्तिविशेषः ॥ गोहे पुरुषः मनुष्यः ॥ प्रेदण्डा लुप्तदण्डक । उभे अपि देशी ॥ अधुना प्रयच्छ ॥ दास्यामि ॥ शिलु पडदि शिरः पतति । भ्रमतीत्यर्थः । इति भूमौ निपत्य स्थितः ॥ एष त्वं खलु द्यूतकरमण्डल्या

संवाहकः—(उत्थाय सविषादम् ।) कधं जूदिअलमण्डलीए व-द्धो म्हि । ही, एशे अम्हाणं जूदिअलाणं अलङ्घणीए शमए । ता कुदो दइश्शम् । (क)

माथुरः—अले, गण्डे कुलु कुलु । (ख)

संवाहकः—एव्वं कलेमि । (द्यूतकरमुपस्पृश्य ।) अद्धं ते देमि, अद्धं मे मुञ्चदु । (ग)

द्यूतकरः—एव्वं भोदु । (घ)

संवाहकः—(सभिकमुपगम्य ।) अद्धश्श गण्डे कलेमि । अद्धं पि मे अज्जो मुञ्चदु । (ङ)

माथुरः—को दोसु । एव्वं भोदु । (च)

संवाहकः—(प्रकाशम् ।) अज्ज, अद्धे तुए मुक्के । (छ)

माथुरः—मुक्के । (ज)

संवाहकः—(द्यूतकरं प्रति ।) अद्धे तुए वि मुक्के । (झ)

द्यूतकरः—मुक्के । (ञ)

संवाहकः—संपदं गमिश्शम् । (ट)

माथुरः—पअच्छ तं दशसुवण्णम्, कहिं गच्छसि । (ठ)

---

(क) कथं द्यूतकरमण्डल्या बद्धोऽस्मि । कष्टम्, एषोऽस्माकं द्यूतकराणामलङ्घनीयः समयः । तस्मात्कुतो दास्यामि ।

(ख) अरे, गण्डः क्रियतां क्रियताम् ।

(ग) एवं करोमि । अर्धं तुभ्यं ददामि, अर्धं मे मुञ्चतु ।

(घ) एवं भवतु ।

(ङ) अर्धस्य गण्डं करोमि । अर्धमपि म आर्यो मुञ्चतु ।

(च) को दोषः । एवं भवतु । (छ) आर्य, अर्धं त्वया मुक्तम् ।

(ज) मुक्तम् । (झ) अर्धं त्वयापि मुक्तम् । (ञ) मुक्तम् ।

(ट) सांप्रतं गमिष्यामि ।

(ठ) प्रयच्छ तं दशसुवर्णम् । कुत्र गच्छसि ।

---

बद्धः ॥ ही कष्टम् । अस्माभिः सर्वः समय उल्लङ्घ्यते । एषोऽस्माकं द्यूतकराणामलङ्घ्यः समयः ॥ 'गण्डं गण्डो लग्नकः' इति पूर्वटीका ॥ एवं करोमि । मुञ्च ॥ अर्धं सभिकेन मुक्तम् । अर्धं द्यूतकरेण ।'उभाभ्यां राशिरेव मुक्तः । इति मु-

Noble Lords.

संवाहकः—पेक्खध पेक्खध भट्टालआ । हा, संपदं ज्जेव एक्काह अद्धे गण्डे कडे, अवलाह अद्धे मुक्के । तहवि मं अबलं शंपदं ज्जेव मग्गदि । (क)

माथुरः—(गृहीत्वा ।) धुत्त, माथुरु अहं णिउणु । एत्थ तुए ण अहं धुत्तिज्जामि । ता पअच्छ तं पेदण्डआ, सव्वं सुवण्णं संपदम् । (ख)

संवाहकः—कुदो दइश्शम् । (ग)

माथुरः—पिदरु विक्किणिज्ज पअच्छ । (घ)

संवाहकः—कुदो मे पिदा । (ङ)

माथुरः—मातरु विक्किणिज्ज पअच्छ । (च)

संवाहकः—कुदो मे मादा । (छ)

माथुरः—अप्पाणं विक्किणिअ पअच्छ । (ज)

संवाहकः—कलेध पशादम् । णेध मं लाजमग्गम् । (झ)

माथुरः—पसरु । (ञ)

संवाहकः—एव्वं भोदु । (परिक्रामति ।) अज्जा, क्किणिध मं [ए]शश शहिअश्श हत्थादो दशेहिं शुवण्णकेहिं । (दृष्ट्वा आकाशे ।)

---

(क) प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः । हा, सांप्रतमेव एकस्यार्धे गण्डः कृतः, अपरस्यार्धे मुक्तम् । तथापि मामबलं सांप्रतमेव याचते ।

(ख) धूर्त, माथुरोऽहं निपुणः । अत्र नाहं धूर्तयामि । तत्प्रयच्छ तं लुसदण्डक, सर्वं सुवर्णं सांप्रतम् । (ग) कुतो दास्यामि ।

(घ) पितरं विक्रीय प्रयच्छ । (ङ) कुतो मे पिता ।

(च) मातरं विक्रीय प्रयच्छ ।

(छ) कुतो मे माता । (ज) आत्मानं विक्रीय प्रयच्छ ।

(झ) कुरुत प्रसादम् । नयत मां राजमार्गम् । (ञ) प्रसर ।

---

क्तदेयत्वाद्यामीति ब्रूते ॥ भट्टारका इति मध्यस्थान्संबोधयति । सांप्रतमेव एक्काह एकस्य । अद्धे अर्धेन । गण्डे कडे । एकस्य सभिकस्यार्धे गण्डः कृतः । द्यूतकरापेक्षितार्धेन द्यूतकरे व(च?) लग्नकः । अपराह अद्धेण मुक्के इत्यपरस्य द्यूतकरस्यार्धेन मुक्तोऽस्मि । तच्च सभिकेनैवोपेक्षितम् ॥ अत्र माथुरोऽहं निपुणः । एत्थ तुए अत्र त्वया । धुत्तिज्जामि धूर्ते(र्ये) प्रतार्ये । पेदण्डा लुसदण्डक ॥ कुत इति लाभोपायप्रश्ने । पिदरु विक्कीणिज्ज पयच्छ पितरं विक्रीय प्रयच्छ ॥ मातरु विक्कीणिज्ज मातरं विक्रीय ॥ कलेध कुरुत । णेध नयत । [मं] माम् । राजमार्गम् ॥ पसरु प्रसर्प ।

किं भणाध—'किं कलइश्शशि' त्ति । गेहे दे कम्मकले हुविश्शम् । कधम् । अदइअ पडिवअणं गदे । भोदु एव्वम् । इमं अण्णं भणइस्सम् । (पुनस्तदेव पठति ।) कधम् । एशे वि मं अवधीलिअ गदे । हा, अज्जचालुदत्तस्स विहवे विहडिदे एशे वट्टामि मन्दभाए । (क)

**माथुरः**—णं देहि । (ख)

**संवाहकः**—कुदो दइश्शम् । (ग) (इति पतति ।)

(माथुरः कर्षति ।)

**संवाहकः**—अज्जा, पलित्ताअध पलित्ताअध । (घ)

(ततः प्रविशति दर्दुरकः ।)

**दर्दुरकः**—भोः, द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।

न गणयति पराभवं कुतश्चिद्धरति ददाति च नित्यमर्थजातम् ।
नृपतिरिव निकाममायदर्शी विभववता समुपास्यते जनेन ॥ ७ ॥

अपि च ।

द्रव्यं लब्धं द्यूतेनैव दारामित्रं द्यूतेनैव ।
दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥ ८ ॥

अपि च ।

त्रेताहृतसर्वस्वः पावरपतनाच्च शोषितशरीरः ।
नर्दितदर्शितमार्गः कटेन विनिपातितो यामि ॥ ९ ॥

---

(क) एवं भवतु । आर्याः, क्रीणीध्वं मामस्य सभिकस्य हस्ताद्दशभिः सुवर्णकैः । किं भणत—'किं करिष्यसि' इति । गेहे ते कर्मकरो भविष्यामि । कथम् । अदत्त्वा प्रतिवचनं गतः । भवत्वेवम् । इममन्यं भणिष्यामि । कथम् । एषोऽपि मामवधीर्य गतः । हा, आर्यचारुदत्तस्य विभवे विघटिते एष वर्ते मन्दभाग्यः । (ख) ननु देहि ।
(ग) कुतो दास्यामि । (घ) आर्याः परित्रायध्वं परित्रायध्वम् ।

---

किणिध क्रीणीध्वम् । सहिअस्स हत्थादो सभिकस्य पार्श्वादित्यर्थः । असौ तव कर्मकरो भविष्यामि । हा आर्यचारुदत्तस्य विभवे विघटिते तस्मिन्निर्धने एष एतादृशावस्थो वर्ते मन्दभाग्यः ॥ **नेति** । अतिशयमायस्य दर्शको राजेवेश्वरेणापि पुरुषेण सेव्यते ॥७॥ **द्रव्यं लब्धमित्यादि** । विद्युन्माला ॥ ८ ॥ **त्रेतेति** । त्रेता 'तीया' इति प्रसिद्धः । पावरो 'दूआ' इति ख्यातः । नर्दितो 'नान्दी' इति प्रसिद्धः । कटेन

दर्दुरकः—अरे, कः खण्डितवृत्तः ।

माथुरः—तुमं हु खण्डिअवुत्तो । (क)

दर्दुरकः—पिता ते खण्डितवृत्तः । (संवाहकस्यापक्रमितुं संज्ञां ददाति ।)

माथुरः—गोसाविआपुत्ता, एव्वं ज्जेव जूदं तुए सेविदम् । (ख)

दर्दुरकः—मयैवं द्यूतमासेवितम् ।

माथुरः—अले संवाहआ, पअच्छ तं दशसुवण्णम् । (ग)

संवाहकः—अज्ज दइश्शम् । दाव दइश्शम् । (घ)

(माथुरः कर्षति ।)

दर्दुरकः—मूर्ख, परोक्षे खलीकर्तुं शक्यते, न ममाग्रतः खलीकर्तुम् ।

(माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति । संवाहकः सशोणितं 'अथ नाटयन्भूमौ पतति । दर्दुरक उपसृत्यान्तरयति । माथुरो दर्दुरं ताडयति ।' नन्वयं प्रतीपं ताडयति ।)

कथं माथुरः—अले अले दुट्ट छिण्णालिआपुत्तअ, फलंपि पावियः (ङ)

यस्—अरे मूर्ख, अहं त्वया मार्गगत एव ताडितः । श्वो तस्यैतच्च ...यिष्यसि, तदा द्रक्ष्यसि ।

तस्यात्यायत...खस्सम् । (च)

भवतु । माथुरं तावत्सान्त्व...

(माथुरः प्रत्याभवा...

दर्दुरकः—किमेतत् ।

यस्मादप्यहं न बिभेमि ।

माथुरः—अअं दशसुवण्णं धालेदि । (छ)

(क) दापय दापय । (ख) कुतो दास्यामि ।
(ग) अयं दशसुवर्णं धारयति ।

'पुरा' इति प्रसिद्धेन । 'पावरः पूरा, कटो दूआ' इति केचित् ॥९॥ ... तपस्वी वराकः ॥ पादेनेति ॥ ११ ॥ खलीक्रियते भर्त्स्यते । ...मिति जनसंमर्दे प्रवेशायावकाशप्रार्थना । य इति । उद्धर्षण...ष प्रेक्षिष्ये । ...किणः 'घाटिः' इति प्रसिद्धः । यच्छरैर्लगुणैण्यत्ते (?) । 'कुक्कुरैश्वर्य्यैः...' व्यक्त एव । न ध्यायतो न निःशेषयतः (?) । अत्यायतो विपुलशरीरः । निर्भयः ...लस्य । 'व्यायतो कृतश्रमः' इति पूर्वटीका ॥ १२ ॥ कल्यवर्त्तं प्रातर्भोजनम् । विआ

किं भणाध—'किं कलइश्शशि' त्ति । गेहे दे कम्मकले हुवि-इश्शम् । कधम् । अदइअ पडिवअणं गदे । भोदु एव्वम् । इमं अण्णं भणइस्सम् । (पुनस्तदेव पठति ।) कधम् । एशे वि मं अवधीलिअ गदे । हा, अज्जचालुदत्तस्स विहवे विहडिदे एशे वट्टामि मन्द-भाए । (क)

माथुरः—णं देहि । (ख)

संवाहकः—कुदो दइश्शम् । (ग) (इति पतति ।)

(माथुरः कर्षति ।)

संवाहकः—अज्जा, पलित्ताअध पलित्ताअध । (घ)

(ततः प्रविशति दर्दुरकः ।)

दर्दुरकः—भोः, द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।

न गणयति पराभवं कुतश्चिद्धरति ददाति च नित्यमर्थजातम् ।
नृपतिरिव निकाममायदर्शी विभववता समुपास्यते जनेन ॥ ७

अपि च ।

द्रव्यं लब्धं द्यूतेनैव दारामित्रं द्यूतेनैव ।
दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥ ८ ॥

अपि च । । तुमं प-

स्था आदंस-

त्रेताहृतसर्वस्वः पावरपतनाच्च शोषितशरीरः खण्डिअवुत्तो सि

नर्दितदर्शितमार्गः कटेन विनिपातितो

(क) एवं भवतु । आर्याः, क्री... । जर्जरपटप्रावृतोऽयं पुरुषो दशसुवर्ण

सुवर्णकैः । किं भणत—'किं

ष्यामि । कथम् । अदत्त्वा ... सुवर्णः कल्यवर्तः । ममैष विभवः ।

णिष्यामि । कथम् । ए

विभवे विघटिते एष ... (घ) अथ न जयति ।

(ग) कुतो दास्य ... कं जल्पितुम् । एवमाचक्षाण त्वं प्रयच्छ धूर्तक । अहमपि

किणिध कीणीध्वम् ... नत्यर्थः । जीर्णपटसंवृतः (?) ॥ कटकरणेन प्रयच्छामि तत्रार्थः—

भविष्यामि । हा ... प्रातः वत्त वर्तय (?) । कटत्वेन देहीत्यर्थः । अत एव

स्थो वर्ते मन्दभ ... तत्किमिति गृहादानयनादिनापि विनयः संभाव्यत इत्याशयः ।

सेव्यते ॥७॥ द्यू ... १२ ॥ भट्टा इति संबोधनोक्तिः । ममैष विभवः ॥ तदेवं सति किम् ॥

इति प्रसिद्ध ... धति । अथायं न दृढं भद्रं जयतु । पाठान्तरे तु—अह अथ । भद्रकं

(?) ॥ एवमहं पत्तुआ धुत्तिज्जामि प्रतार्ये । अहमपि नाम मथुराभवो द्यूत-

Loose character

दर्दुरकः—अरे, कः खण्डितवृत्तः।

माथुरः—तुमं हु खण्डिअवुत्तो। (क)

दर्दुरकः—पिता ते खण्डितवृत्तः। (संवाहकस्यापक्रमितुं संज्ञां ददाति।)

माथुरः—गोसाविआपुत्ता, एव्वं ज्जेव जूदं तुए सेविदम्। (ख)

दर्दुरकः—मयैवं द्यूतमासेवितम्।

माथुरः—अले संवाहआ, पअच्छ तं दशसुवण्णम्। (ग)

संवाहकः—अज्ज दइश्शम्। दाव दइश्शम्। (घ)

(माथुरः कर्षति।)

दर्दुरकः—मूर्ख, परोक्षे खलीकर्तुं शक्यते, न ममाग्रतः खलीकर्तुम्।

(माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति। संवाहकः सशोणितं मूर्च्छां नाटयन्भूमौ पतति। दर्दुरक उपसृत्यान्तरयति। माथुरो दर्दुरं ताडयति। दर्दुरो विप्रतीपं ताडयति।)

माथुरः—अले अले दुट्ठ छिण्णालिआपुत्तअ, फलंपि पाविहिसि। (ङ)

दर्दुरकः—अरे मूर्ख, अहं त्वया मार्गगत एव ताडितः। श्वो यदि राजकुले ताडयिष्यसि, तदा द्रक्ष्यसि।

माथुरः—एशु पेक्खिस्सम्। (च)

दर्दुरकः—कथं द्रक्ष्यसि।

---

नाम माथुरो धूर्तो द्यूतं मिथ्या दर्शयामि। अन्यस्मादप्यहं न बिभेमि। धूर्त, खण्डितवृत्तोऽसि त्वम्।

(क) त्वं खलु खण्डितवृत्तः।

(ख) वेश्यापुत्र, एवमेव द्यूतं त्वया सेवितम्।

(ग) अरे संवाहक, प्रयच्छ तद्दशसुवर्णम्।

(घ) अद्य दास्यामि। तावद्दास्यामि।

(ङ) अरे अरे दुष्ट पुंश्चलीपुत्रक, फलमपि प्राप्स्यसि। (च) एष प्रेक्षिष्ये।

---

करो द्यूतं मिथ्या दर्शयामि। अन्यस्मै च नाहं बिभेमि। अहमेवान्यं निर्भयः प्रतारयामि। न तु मामन्य इत्यर्थः। तेन त्वमपि धूर्तोऽसीति भावः॥ गोसाविआ

**माथुरः**—(प्रसार्य चक्षुषी ।) एव्वं पेक्खिस्सम् । (क)

(दर्दुरो माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्यापक्रमितुं संज्ञां ददाति । माथुरोऽक्षिणी निगृह्य भूमौ पतति । संवाहकोऽपक्रामति ।)

**दर्दुरकः**—(स्वगतम् ।) प्रधानसभिको माथुरो मया विरोधितः । तन्नात्र युज्यते स्थातुम् । कथितं च मम प्रियवयस्येन शर्विलकेन, यथा किल—'आर्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यति ।' इति । सर्वश्चास्मद्विधो जनस्तमनुसरति । तदहमपि तत्समीपमेव गच्छामि । (इति निष्क्रान्तः ।)

**संवाहकः**—(सत्रासं परिक्रम्य दृष्ट्वा ।) एशे कश्शवि अणपावुदपक्खदुयालके गुहे । ता एत्थ पविशिश्शम् । (प्रवेशं रूपयित्वा वसन्तसेनामालोक्य ।) अज्जे, शलणागदे म्हि । (ख)

**वसन्तसेना**—अभअं सरणागदस्स । हञ्जे, ढक्केहि पक्खदुआरअम् । (ग)

(चेटी तथा करोति ।)

**वसन्तसेना**—कुदो दे भअम् । (घ)

**संवाहकः**—अज्जे, धणिकादो । (ङ)

**वसन्तसेना**—हञ्जे, संपदं अवावुणु पक्खदुआरअम् । (च)

**संवाहकः**—(आत्मगतम् ।) कधं धणिकादो तुलिदं शे भअकालणम् । शुट्ठु क्खु एवं वुच्चदि ।

जे अत्तबलं जाणिअ भालं तुलिदं वहेइ माणुस्से ।
ताह खलणं ण जायदि ण अ कन्तालगदो विवज्जदि ॥ १४ ॥

---

(क) एवं प्रेक्षिष्ये ।

(ख) एतत्कस्याप्यनपावृतपक्षद्वारकं गेहम् । तदत्र प्रविशामि । आर्ये, शरणागतोऽस्मि ।

(ग) अभयं शरणागतस्य । चेटि, पिधेहि पक्षद्वारकम् ।

(घ) कुतस्ते भयम् । (ङ) आर्ये, धनिकात् ।

(च) चेटि, सांप्रतमपावृणु पक्षद्वारकम् ।

---

वेश्या ॥ एतत्कस्याप्यपावृतपक्षद्वारं गेहम् ॥ ढक्केहि पिधेहि ॥ तुलिदमाकलितम् । **जे अत्तबलमित्यादि** । वैतालीयं छन्दः । यो(य) आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः तस्य स्खलनं न जायते न च कान्तारगतो विप-

एत्थ लक्खिदम्हि । (क)

**माथुरः**—(अक्षिणी प्रमृज्य द्यूतकरं प्रति ।) अले, देहि देहि । (ख)

**द्यूतकरः**—भट्टा, जावदेव अम्हे दद्दुरेण कलहायिदा तावदेव सो गोहो अवक्कन्तो । (ग)

**माथुरः**—तस्स जूदकलस्स मुट्ठिप्पहालेण णासिका भग्गा आसि । ता एहि । रुहिरपहं अणुसरेम्ह । (घ)

(अनुसृत्य)

**द्यूतकरः**—भट्टा, वसन्तसेणागेहं पविट्ठो सो । (ङ)

**माथुरः**—भूदाइं सुवण्णाइं । (च)

**द्यूतकरः**—लाअउलं गदुअ णिवेदेम्ह । (छ)

**माथुरः**—एसो धुत्तो अदो णिक्कमिअ अण्णत्त गमिस्सदि । ता उअरोधेणेव्व गेण्हेम्ह । (ज)

(वसन्तसेना मदनिकायाः संज्ञां ददाति ।)

**मदनिका**—कुदो अज्जो । को वा अज्जो । कस्स वा अज्जो । किं वा वित्तिं अज्जो उवजीअदि । कुदो वा भअम् । (झ)

(क) कथं धनिकात्तुलितमस्या भयकारणम् । सुष्ठु खल्वेवमुच्यते ।

य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः ।
तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥

अत्र लक्षितोऽस्मि । (ख) अरे, देहि देहि ।

(ग) भर्तः, यावदेव वयं दर्दुरेण कलहायितास्तावदेव स पुरुषोऽपक्रान्तः ।

(घ) तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्नासीत् । तदेहि । रुधिरपथमनुसरावः । (ङ) भर्तः, वसन्तसेनागृहं प्रविष्टः सः ।

(च) भूतानि सुवर्णानि । (छ) राजकुलं गत्वा निवेदयावः ।

(ज) एष धूर्तोऽतो निष्क्रम्यान्यत्र गमिष्यति । तदुपरोधेनैव गृह्णीवः ।

(झ) कुत आर्यः । को वार्यः । कस्य वार्यः । कां वा वृत्तिमार्य उपजीवति । कुतो वा भयम् ।

द्यते ॥ १४ ॥ तुलितं कलितमिति 'वा पदान्त–' इति बिन्दोर्लघुत्वम् । वसन्तसेनाया अशक्यविषये व्यापार उक्तः ॥ गोहे मनुष्यः ॥ तस्य दुरात्मनो मया मुष्टिप्रहारेण नासा भग्ना । तदागच्छतु । चिरमेतदनुसरावः । एहि तावत् ॥ अदो अतः । निष्क्रम्यान्यत्र गमिष्यति । तदुपरोधेनैव गृह्णीमः ॥ गृहपतेर्दारको-

**संवाहकः**—शुणादु अज्जआ । अज्जए, पाडलिउत्ते मे जम्मभूमी । गहवइदालके हगे । संवाहअश्श वित्तिं उवजीआमि । (क)

**वसन्तसेना**—सुउमारा क्खु कला सिक्खिदा अज्जेण । (ख)

**संवाहकः**—अज्जए, कलेत्ति शिक्खिदा । आजीविआ दाणिं संवुत्ता । (ग)

**चेटी**—अदिणिव्विण्णं अज्जेण पडिवअणं दिण्णम् । तदो तदो । (घ)

**संवाहकः**—तदो अज्जए, एशे णिजगेहे आहिण्डकाणं मुहादो शुणिअ अपुव्वदेशदंशणकुदूहलेण इह आगदे । इहवि मए पविशिअ उज्जइणिं एक्के अज्जे शुश्शुशिदे । जे तालिशे पिअदंशणे पिअवादी, दइअ ण कित्तेदि, अवकिदं विशुमलेदि । किं बहुणा पलन्तेण । दक्खिणदाए पलकेलअं विअ अत्ताणअं अवगच्छदि, शलणागअवच्छले अ । (ङ)

**चेटी**—को दाणिं अज्जआए मणोरहन्तरस्स गुणाइं चोरिअ उज्जइणिं अलंकरेदि । (च)

---

(क) श्रृणोत्वार्या । आर्ये, पाटलिपुत्रं मे जन्मभूमिः । गृहपतिदारकोऽहम् । संवाहकस्य वृत्तिमुपजीवामि ।

(ख) सुकुमारा खलु कला शिक्षितार्येण ।

(ग) आर्ये, कलेति शिक्षिता । आजीविकेदानीं संवृत्ता ।

(घ) अतिनिर्विण्णमार्येण प्रतिवचनं दत्तम् । ततस्ततः ।

(ङ) तत आर्ये, एष निजगृह आहिण्डकानां मुखाच्छ्रुत्वापूर्वदेशदर्शनकुतूहलेनेहागतः । इहापि मया प्रविश्योज्जयिनीमेक आर्यः शुश्रूषितः । यस्तादृशः प्रियदर्शनः प्रियवादी, दत्त्वा न कीर्तयति, अपकृतं विस्मरति । किं बहुना प्रलपितेन । दक्षिणतया परकीयमिवात्मानमवगच्छति, शरणागतवत्सलश्च ।

(च) क इदानीमार्याया मनोरथान्तरस्य गुणांश्चोरयित्वोज्जयिनीमलंकरोति ।

---

ऽहम् । संवाहकस्य शरीरयन्त्र(मर्द)कस्य व्यापारमुपजीवामि ॥ स्वगृहपर्यटकानां भिक्षुकादीनां वचनं श्रुत्वा । [अ]वकिदं उ(अ)पकृतं विस्मरति । किं बहुना पलन्तेन प्रलपितेन ॥ मणोरहाहुत्तस्स मनोरथाभिमुखस्य ॥ अनुक्रोशः

**वसन्तसेना**—साहु हञ्जे, साहु । मए वि एव्वं जेव हिअएण मन्तिदम् । (क)

**चेटी**—अज्ज, तदो तदो । (ख)

**संवाहकः**—अज्जए, शे दाणिं अणुक्कोशकिदेहिं पदाणेहिं । (ग)

**वसन्तसेना**—किं उवरदविहवो संवुत्तो । (घ)

**संवाहकः**—अणाचक्खिदे जेव कधं अज्जआए विण्णादम् । (ङ)

**वसन्तसेना**—किं एत्थ जाणीअदि । दुल्लहा गुणा विहवा अ । अपेएसु तडाएसु बहुदरं उदअं भोदि । (च)

**चेटी**—अज्ज, किंणामधेओ क्खु सो । (छ)

**संवाहकः**—अज्जे, के दाणिं तश्श भूदलमिअङ्कस्स णामं ण जाणादि । शो क्खु शेट्ठिचत्तले पडिवशदि । शलाहणिज्जणामधेए अज्जचालुदत्ते णाम । (ज)

**वसन्तसेना**—(सहर्षमासनादवतीर्य ।) अज्जस्स अत्तणकेरकं एदं गेहम् । हञ्जे, देहि से आसणम् । तालवेण्टअं गेण्ह । परिस्समो अज्जस्स बाधेदि । (झ)

(चेटी तथा करोति ।)

**संवाहकः**—(स्वगतम् ।) कधं अज्जचालुदत्तस्स णामशंकीत्तणेण

---

(क) साधु चेटि, साधु । मयाप्येवमेव हृदयेन मन्त्रितम् ।

(ख) आर्य, ततस्ततः । (ग) आर्ये, स इदानीमनुक्रोशकृतैः प्रदानैः ।

(घ) किमुपरतविभवः संवृत्तः ।

(ङ) अनाख्यातमेव कथमार्यया विज्ञातम् ।

(च) किमत्र ज्ञातव्यम् । दुर्लभा गुणा विभवाश्च । अपेयेषु तडागेषु बहुतरमुदकं भवति ।

(छ) आर्य, किंनामधेयः खलु सः ।

(ज) आर्ये, क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति । स खलु श्रेष्ठिचत्वरे प्रतिवसति । श्लाघनीयनामधेय आर्यचारुदत्तो नाम ।

(झ) आर्यस्यात्मीयमेतद्गेहम् । चेटि, देह्यस्यासनम् । तालवृन्तकं गृहाण । परिश्रम आर्यस्य बाधते ।

---

करुणा ॥ अणाचक्खिदे अनाख्यातम् । अपेयेषु तडागेषु बहुतरमुदकं भवति ।

ईदिशे मे आदले । शाहु अज्जचालुदत्तो, शाहु । पुहवीए तुमं एक्के जीवशि । शेषे उण जणे शशदि । (इति पादयोर्निपत्य ।) भोदु अज्जए, भोदु । आशणे णिशीददु अज्जआ । (क)

**वसन्तसेना**—(आसने समुपविश्य ।)अज्ज,कुदो सो धणिओ। (ख)

**संवाहकः**—

शक्कालधणे क्खु शज्जणे काह ण होइ चलाचले धणे।
जे पूइदुं पि ण जाणादि शे पूआविशेशंपि जाणादि ॥१५॥(ग)

**वसन्तसेना**—तदो तदो । (घ)

**संवाहकः**—तदो तेण अज्जेण शवित्ती पलिचालके किदो म्हि । चालित्तावशेशे अ तस्सिं जूदोवजीवि म्हि शंवुत्ते । तदो भाअधेअविशमदाए दशशुवण्णअं जूदे हालिदम् । (ङ)

**माथुरः**—उच्छादिदो म्हि । मुसिदो म्हि । (च)

**संवाहकः**—एदे दे शहिअजूदिअला मं अणुशंधअन्ति । शंपदं शुणिअ अज्जआ पमाणम् । (छ)

---

(क) कथमार्यचारुदत्तस्य नामसंकीर्तनेनेदृशो म आदरः । साधु आर्यचारुदत्त, साधु । पृथिव्यां त्वमेको जीवसि । शेषः पुनर्जनः श्वसिति । भवत्वार्ये, भवतु । आसने निषीदत्वार्या ।

(ख) आर्य, कुतः स धनिकः ।

(ग) सत्कारधनः खलु सज्जनः कस्य न भवति चलाचलं धनम् ।
यः पूजयितुमपि न जानाति स पूजाविशेषमपि जानाति ॥

(घ) ततस्ततः ।

(ङ) ततस्तेनार्येण सद्वृत्तिः परिचारकः कृतोऽस्मि । चारित्र्यावशेषे च तस्मिन्द्यूतोपजीव्यस्मि संवृत्तः । ततो भागधेयविषमतया दशसुवर्णं द्यूते हारितम्।

(च) उत्सादितोऽस्मि । मुषितोऽस्मि ।

(छ) एतौ तौ सभिकद्यूतकरौ मामनुसंधत्तः । सांप्रतं श्रुत्वार्या प्रमाणम्।

---

काक्वा । अपि तु नैवेत्यर्थः ॥ **शक्कालधणे इत्यादि** । मात्रासमकम् । प्रतिपादं चलाचले, धणे, से इत्येकारत्रयं लघु । छन्दोनुरोधात् । सत्कारधनः खलु सज्जनः कस्य च न भवति चलाचलं धनम् । यः पूजितुमपि न जानाति स पूजाविशेषं जानाति । अपि तु न जानात्येव ॥ १५ ॥ ततस्तेनार्येण सद्वृत्तिः कृतवर्तनः परिचारकः कृतः । चारित्रमात्रावशेषे धनशून्ये तस्मिन् ॥ वासपाद-

**वसन्तसेना**—मदणिए, वासपादवविसंठुलदाए पक्खिणो इदो तदो वि आहिण्डन्ति । हञ्जे, ता गच्छ । एदाणं सहिअजूदिअराणम्, अअं अज्जो ज्जेव पडिवादेदि त्ति, इमं हत्थाभरणअं तुमं देहि । (क) (इति हस्तात्कटकमाकृष्य चेट्याः प्रयच्छति ।)

**चेटी**—(गृहीत्वा ।) जं अज्जआ आणवेदि । (ख)(इति निष्क्रान्ता ।)

**माथुरः**—उच्छादिदो म्हि । मुसिदो म्हि । (ग)

**चेटी**—जधा एदे उद्धं पेक्खन्ति, दीहं णीससन्ति, अहिलहन्ति अ दुआरणिहिदलोअणा, तधा तक्केमि, एदे दे सहिअजूदिअरा हुविस्सन्ति । (उपगम्य ।) अज्ज, वन्दामि । (घ)

**माथुरः**—सुहं तुए होदु । (ङ)

**चेटी**—अज्ज, कदमो तुम्हाणं सहिओ । (च)

**माथुरः**—

कस्स तुहुं तणुमज्झे अहरेण रददट्ठदुव्विणीदेण ।
जम्पसि मणोहलवअणं आलोअन्ती कडक्खेण ॥ १६ ॥

णत्थि मम विहवो । अण्णत्त व्वज । (छ)

---

(क) मदनिके, वासपादपविसंष्ठुलतया पक्षिण इतस्ततोऽप्याहिण्डन्ते । चेटि, तद्गच्छ । एतयोः सभिकद्यूतकरयोः, अयमार्य एव प्रतिपादयतीति, इदं हस्ताभरणं त्वं देहि ।

(ख) यदार्याज्ञापयति । (ग) उत्सादितोऽस्मि । मुषितोऽस्मि ।

(घ) यथैतावूर्ध्वं प्रेक्षेते, दीर्घं निश्वसतः, अभिलपतश्च द्वारनिहितलोचनौ, तथा तर्कयामि, एतौ तौ सभिकद्यूतकरौ भविष्यतः । आर्य, वन्दे ।

(ङ) सुखं तव भवतु । (च) आर्य, कतरो युवयोः सभिकः ।

(छ) कस्य त्वं तनुमध्ये अधरेण रतदष्टदुर्विनीतेन ।
जल्पसि मनोहरवचनमालोकयन्ती कटाक्षेण ॥

नास्ति मम विभवः । अन्यत्र व्रज ।

---

पविसंष्ठुलतया पक्षिणो भ्राम्यन्ति । दिनान्ते भूतप्राय इत्यर्थः (?) । आर्यः संवाहकः ॥ आहिणेन्ति अभिनीयन्ते । दुवारमूले द्वारमूले ॥ सुहवा सुभगा ॥ **कस्स तुहुमित्यादि** । गाथा । मनोहरमव्यक्तं यद्वचनं तन्मनवचनम् । हे तनुमध्ये कस्य त्वं मन्मनवचनम् (?) । दुर्विनीतेन रतौ दष्टेनाधरेण जल्पसि ।

**चेटी**—जइ ईदिसाइं णं मन्तेसि, ता ण होसि जूदिअरो। अत्थि कोवि तुम्हाणं धारओ। (क)

**माथुरः**—अत्थि। दशसुवण्णं धालेदि। किं तस्स। (ख)

**चेटी**—तस्स कारणादो अज्जआ इमं हत्थाभरणं पडिवादेदि। णहि णहि। सो ज्जेव पडिवादेदि। (ग)

**माथुरः**—(सहर्षं गृहीत्वा।) अले, भणेशि तं कुलपुत्तम्—'भूदं तुए गण्डे। आअच्छ। पुणो जूदं रमअ'। (घ)

(इति निष्क्रान्तौ।)

**चेटी**—(वसन्तसेनामुपसृत्य।) अज्जए, पडितुट्टा गदा सहिअ-जूदिअरा। (ङ)

**वसन्तसेना**—ता गच्छदु। अज्ज बन्धुअणो समस्ससदु। (च)

**संवाहकः**—अज्जए, जइ एव्वं ता इअं कला पलिअणहत्थ-गदा कलीअदु। (छ)

**वसन्तसेना**—अज्ज, जस्स कारणादो इअं कला सिक्खीअदि, सो ज्जेव अज्जेण सुस्सूसिदपुरुव्वो सुस्सूसिदव्वो। (ज)

**संवाहकः**—(स्वगतम्।) अज्जआए णिउअं पच्चादिट्टो म्हि।

---

(क) यदीदृशानि ननु मन्त्रयसि, तदा न भवसि द्यूतकरः। अस्ति कोऽपि युष्माकं धारकः।

(ख) अस्ति। दशसुवर्णं धारयति। किं तस्य।

(ग) तस्य कारणादार्येदं हस्ताभरणं प्रतिपादयति। नहि नहि। स एव प्रतिपादयति।

(घ) अरे, भणसि तं कुलपुत्रम्—'भूतस्तव गण्डः। आगच्छ। पुनर्द्यूतं रमस्व'। (ङ) आर्ये, परितुष्टौ गतौ सभिकद्यूतकरौ।

(च) तद्गच्छतु। अद्य बन्धुजनः समाश्वसितु।

(छ) आर्ये, यद्येवं तदियं कला परिजनहस्तगता क्रियताम्।

(ज) आर्य, यस्य कारणादियं कला शिक्ष्यते, स एवार्येण शुश्रूषितपूर्वः शुश्रूषितव्यः।

---

आलोकयन्ती कटाक्षेण ॥१६॥ मम विभवो नास्ति। अन्यत्र गच्छ ॥ धारयति॥ यस्य पार्श्वलभ्यमीदृशं तं संवाहकं कुलपुत्रम्। भूतो गण्डः। सुविधानमित्यर्थः। 'खण्ड' इति मरहट्टप्रसिद्धः। तत्पुनरपि द्यूतं रमामहे ॥ इयं कला संवाहक(न)-

**वसन्तसेना**—(स्वगतम्।) कधं परिअणोत्ति मं अवगच्छदि। (प्रावारकं गृहीत्वा समाघ्राय च स्वगतं सस्पृहम्।) अम्हहे, जादीकुसुमवासिदो पावारओ। अणुदासीणं से ज्जोव्वणं पडिभासेदि। (क) (अपवारितकेन प्रावृणोति।)

**चारुदत्तः**—ननु रदनिके, रोहसेनं गृहीत्वाभ्यन्तरं प्रविश।

**वसन्तसेना**—(स्वगतम्।) मन्दभाइणी क्खु अहं तुम्हे अब्भन्तरस्स। (ख)

**चारुदत्तः**—ननु रदनिके, प्रतिवचनमपि नास्ति। कष्टम्।

यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते।
तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥५३॥

(रदनिकामुपसृत्य।)

**विदूषकः**—भो, इअं सा रदणिआ। (ग)

**चारुदत्तः**—इयं सा रदनिका। इयमपरा का।

अविज्ञातावसक्तेन दूषिता मम वाससा।

**वसन्तसेना**—(स्वगतम्।) णं भूसिदा। (घ)

**च[illegible]**—
[illegible]न द्यूतकरापम[illegible] छादिता शरदभ्रेण
[illegible]क्यश्रमणकः संवृत्त इति[illegible] चन्द्रलेखेव दृश्यते ॥ ५४ ॥
अथवा न मुक्तं चन्द्रलेखा दर्शनम्।

(ख) आर्य, अलं साहसेन। (ग[illegible]

द्यूतेन तत्कृतं मम यद्विहस्तं जनस्य सर्वस्व। एसा वसन्तसेणा इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्य (ङ)

(घ) अरे, किं न्विदम्। किं भणत—'एष खलु[illegible]म्, जातीकुसुमवासितः मोडको नाम दुष्टहस्ती विचरति' इति। अहो, आय[illegible] गत्वा। अथवा किं ममैतेन। यथाव्यवसितमनुष्ठास्या[illegible]

(ङ) कुत्र कुत्रार्या। [illegible] भूषिता।

[illegible]सन्तसेना कामदेवायत[illegible]रूपा ॥ शुश्रूषितपूर्वः ॥ शक्कशमणके शाक्यभिक्षुः। ए[illegible]त्यादि। गाथा। द्यूतेन तत्कृतं मम सर्वस्वाज्जनाद्विभ्यते [illegible] सर्वस्य जन[स्य]' इति प्राचीनटीका। इदानीं द्यूतदेयदशसुवर्णदेयक.. साभिलाषम्। नरेन्द्रमार्गेण विहरिष्यामि। भयविरहादित्याशयः ॥ १७ ॥ विअले॥ **यदेति**। 'विकलयति' इत्येके। गलुअदा गुरुत्वम् (?)। महावैभवशालित्वात्। यथा॥ ५४ ॥

**चारुदत्तः**—इयं वसन्तसेना । (स्वगतम् ।)

यया मे जनितः कामः क्षीणे विभवविस्तरे ।
क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥

**विदूषकः**—भो वअस्स, एसो क्खु राअसालो भणादि । (क)

**चारुदत्तः**—किम् ।

**विदूषकः**—एषा ससुवण्णा सहिलण्णा णवणाडअदंसणुट्ठिदा सुत्तधालि व्व वसन्तसेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा । (ख)

**वसन्तसेना**—(स्वगतम् ।) बलक्काराणुणीअमाणेत्ति जं सच्चम्, अलंकिदम्हि एदेहिं अक्खरेहिं । (ग)

**विदूषकः**—ता जइ मम हत्थे सअं ज्जेव पट्ठाविअ एणं समप्पेसि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविस्सदि । अण्णधा मलणन्तिके वेल हुविस्सदि । (घ)

**चारुदत्तः**—(सावज्ञम् ।) अज्ञोऽसौ । ...द्यूतकरः । आस...थं देवतोपस्थानयोग्या युवतिरियम्, किं तस्य ।

...हस्ताभरणं प्रतिपादयति । नहि नहि । स

(क) भो वयस्य, ए...

(ख) एषा ससुवर्णा... कुलपुत्रम्—'भूतस्तव गण्डः । आगच्छ ।
सेनानाम्नी गणिकादारि...) आर्ये, परितुष्टौ गतौ सभिकद्यूतकरौ ।
लात्कारानुनीयमाना त...बन्धुजनः समाश्वसितु ।

(ग) बलात्कारानुनीयं कला परिजनहस्तगता क्रियताम् ।

(घ) तद्यदि मम हा...दियं कला शिक्ष्यते, स एवार्येण शुश्रूषितपूर्व...
व्यवहारं विना लघु नि...
मरणान्तिकं वैरं भ...॥१६॥ मम विभवो नास्ति । अन्यत्र गच्छ ॥ धारयति ॥

...दर्शं तं संवाहकं कुलपुत्रम् । भूतो गण्डः । सुविधानमित्यर्थः ।
कामदेवायत...
भवति ॥ ...हट्टप्रसिद्धः । तत्पुनरपि द्यूतं रमामहे ॥ इयं कला संवाहक(न)-

कधं पच्चुवकलिश्शम् । (प्रकाशम् ।) अज्जए, अहं एदिणा जूदिअला-वमाणेण शक्कशमणके हुविश्शम् । ता शंवाहके जूदिअले शक्कशम-णके शंवुत्तेत्ति शुमलिदव्वा अज्जआए एदे अक्खलु । (क)

**वसन्तसेना**—अज्ज, अलं साहसेण । (ख)

**संवाहकः**—अज्जए, कले णिच्चए । (इति परिक्रम्य ।)

जूदेण तं कदं मे जं वीहत्थं जणश्श शव्वश्श ।
एणहिं पाअडशीशे णलिन्दमग्गेण विहलिश्शम् ॥ १७ ॥ (ग)

(नेपथ्ये कलकलः ।)

**संवाहकः**—(आकर्ण्य ।) अले, किं णेदम् । (आकाशे ।) किं भ-णाध—'एशे क्खु वशन्तशेणआए खुण्टमोडके णाम दुट्टहत्थी विअलेदि' त्ति । अहो, अज्जआए गन्धगअं पेक्खिश्शं गदुअ । अह वा किं मम एदिणा । जधाववशिदं अणुचिट्ठिश्शम् । (घ) (इति निष्क्रान्तः ।)

(ततः प्रविशत्यपटीक्षेपेण प्रहृष्टो विकटोज्ज्वलवेशः कर्णपूरकः ।)

**कर्णपूरकः**—कहिं कहिं अज्जआ । (ङ)

---

(क) आर्यया निपुणं प्रत्यादिष्टोऽस्मि । कथं प्रत्युपकरिष्ये । आर्ये, अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि । तत्संवाहको द्यूतकरः शाक्यश्रमणकः संवृत्त इति स्मर्तव्यान्यार्ययैतान्यक्षराणि ।

(ख) आर्य, अलं साहसेन । (ग) आर्ये, कुतो निश्चयः ।

द्यूतेन तत्कृतं मम यद्विहस्तं जनस्य सर्वस्य ।
इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि ॥

(घ) अरे, किं न्विदम् । किं भणत—'एष खलु वसन्तसेनायाः खुण्टमोडको नाम दुष्टहस्ती विचरति' इति । अहो, आर्याया गन्धगजं प्रेक्षिष्ये गत्वा । अथवा किं ममैतेन । यथाव्यवसितमनुष्ठास्यामि ।

(ङ) कुत्र कुत्रार्या ।

---

रूपा ॥ शुश्रूषितपूर्वः ॥ शक्कशमणके शाक्यभिक्षुः । एतान्यक्षराणि ॥ **जूदेणेत्यादि** । गाथा । द्यूतेन तत्कृतं मम सर्वस्माज्जनाद्विभ्यते यत् । 'यद्विभ्यतः सर्वस्य जन[स्य]' इति प्राचीनटीका । इदानीं द्यूतदेयदशसुवर्णदेयकाले । प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि । भयविरहादित्याशयः ॥ १७ ॥ विअलेदि विचरति । 'विकलयति' इत्येके । गल्लअदा गुरुत्वम् (?) । महावैभवशालित्वात् । यथाव्यवसितं

**चेटी**—दुम्मणुस्स, किं ते उव्वेअकारणम्, जं अग्गदो वट्टिदं अज्जअं ण पेक्खसि । (क)

**कर्णपूरकः**—(दृष्ट्वा ।) अज्जए, वन्दामि । (ख)

**वसन्तसेना**—कण्णऊरअ, परितुट्टमुहो लक्खीअसि । ता किं ण्णेदम् । (ग)

**कर्णपूरकः**—(सविस्मयम् ।) अज्जए, वञ्चिदासि, जाए अज्ज कण्णऊरअस्स परक्कमो ण दिट्टो । (घ)

**वसन्तसेना**—कण्णऊरअ, किं किम् । (ङ)

**कर्णपूरकः**—सुणादु अज्जआ । जो सो अज्जआए खुण्टमोडओ णाम दुट्टहत्थी, सो आलाणत्थम्भं भञ्जिअ महमेत्थं वावादिअ महन्तं संखोहं करन्तो राअमग्गं ओदिण्णो । तदो एत्थन्तरे उग्घुट्टं जणेण—

'अवणेध वालअजणं तुरिदं आरुहध वुक्खपासादम् ।
किं ण हु पेक्खध पुरदो दुट्टो हत्थी इदो एदि ॥ १८ ॥

अवि अ ।

विचलइ णेउरजुअलं छिज्जन्ति अ मेहला मणिक्खइआ ।
वलआ अ सुन्दरदरा रअणङ्कुरजालपडिबद्धा' ॥ १९ ॥

तदो तेण दुट्टहत्थिणा कलचलणरदणेहिं फुल्लणलिणिं विअ णअरिं उज्जइणिं अवगाहमाणेण, समासादिदो परिव्वाजओ । तच्च परिब्भट्टदण्डकुण्डिआभाअणं सीअरेहिं सिञ्चिअ दन्तन्तरे क्खित्तं

---

(क) दुर्मनुष्य, किं त उद्वेगकारणम्, यदग्रतोऽवस्थितामार्यां न प्रेक्षसे । (ख) आर्ये, वन्दे ।
(ग) कर्णपूरक, परितुष्टमुखो लक्ष्यसे । तत्किं न्विदम् ।
(घ) आर्ये, वञ्चितासि, ययाद्य कर्णपूरकस्य पराक्रमो न दृष्टः ।
(ङ) कर्णपूरक, किं किम् ।

---

परिव्रज्यानुष्ठानरूपम् ॥ उद्वेगकारणम् । अज्जअं वसन्तसेनाम् ॥ [महृ]मेत्थं महामात्रं हस्त्यारोहम् । **अवणेध इत्यादि** । गाथाद्वयम् । वृक्षप्रासादम् ॥१८॥ **विचलइ इति** । नूपुरं वलयाश्च विघटन्ते ॥ १९ ॥ समासादिदो प्राप्तः । परिव्राजकः संवाहक एव भिक्षुकरूपः । हस्तिकरशीकरसिच्यमानमुत्थापिनं प्रेक्ष्य ॥

पेक्खिअ पुणोवि उग्घुट्टं जणेण—'हा, परिव्वाजओ वावादीअदि' त्ति । (क)

**वसन्तसेना**—(ससंभ्रमम् ।) अहो पमादो, अहो पमादो । (ख)

**कर्णपूरकः**—अलं संभमेण । सुणादु दाव अज्जआ । तदो विच्छिण्णविसंठुलसिङ्खलाकलावअं उव्वहन्तं दन्तन्तरपरिग्गहिदं परिव्वाजअं उव्वहन्तं तं पेक्खिअ कण्णऊरएण मए, णहि णहि, अज्जआए अण्णपिण्डउट्टेण दासेण, वामचलणेण जूदलेक्खअं उग्घुसिअ उग्घुसिअ तुरिदं आवणादो लोहदण्डं गेण्हिअ आआरिदो सो दुट्टहत्थी । (ग)

**वसन्तसेना**—तदो तदो । (घ)

---

(क) शृणोत्वार्या । यः स आर्यायाः खुण्टमोडको नाम दुष्टहस्ती, स आलानस्तम्भं भङ्क्त्वा महामात्रं व्यापाद्य महान्तं संक्षोभं कुर्वन्राजमार्गमवतीर्णः । ततोऽत्रान्तरे उद्घुष्टं जनेन—

'अपनयत बालकजनं त्वरितमारोहत वृक्षप्रासादम् ।
किं न खलु प्रेक्षध्वं पुरतो दुष्टो हस्ती इत एति ॥

अपि च ।

विचलति नूपुरयुगलं छिद्यन्ते च मेखला मणिखचिताः ।
वलयाश्च सुन्दरतरा रत्नाङ्कुरजालप्रतिबद्धाः ॥'

ततस्तेन दुष्टहस्तिना करचरणरदनैः फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन समासादितः परिव्राजकः । तं च परिभ्रष्टदण्डकुण्डिकाभाजनं शीकरैः सिक्त्वा दन्तान्तरे क्षिप्तं प्रेक्ष्य पुनरप्युद्घुष्टं जनेन—'हा, परिव्राजको व्यापाद्यते' इति । (ख) अहो प्रमादः, अहो प्रमादः ।

(ग) अलं संभ्रमेण । शृणोतु तावदार्या । ततो विच्छिन्नविसंष्ठुलशृङ्खलाकलापमुद्वहन्तं दन्तान्तरपरिगृहीतं परिव्राजकमुद्वहन्तं तं प्रेक्ष्य कर्णपूरकेण मया, नहि नहि, आर्याया अन्नपिण्डपुष्टेन दासेन, वामचरणेन द्यूतलेखकं उद्घुष्योद्घुष्य त्वरितमापणाल्लोहदण्डं गृहीत्वाकारितः स दुष्टहस्ती ।

(घ) ततस्ततः ।

---

विसंष्ठुलशृङ्खलाकलापमिति क्रियाविशेषणम् । अण्णपिण्डउट्टेण अन्नपिण्डपुष्टेन । द्यूतलेखकमुत्प्राथ्य । आपणात्क्रयविक्रयस्थानात् । तत्र विक्रयार्थं लोहदण्डोऽप्यस्ति ॥

**कर्णपूरकः**—

आहणिऊण सरोसं तं हत्थिं विञ्झसैलसिहराभम् ।
मोआविओ मए सो दन्तन्तरसंठिओ परिव्वाजओ ॥२०॥ (क)

**वसन्तसेना**—सुट्ठु दे किदम् । तदो तदो । (ख)

**कर्णपूरकः**—तदो अज्जए, 'साहु रे कण्णऊरअ, साहु' त्ति एत्तिअमेत्तं भणन्ती, विसमभरक्कन्ता विअ णावा, एक्कदो पल्हत्था सअला उज्जइणी आसि । तदो अज्जए, एक्केण सुण्णाइं आहरणट्ठाणाइं परामुसिअ उद्धं पेक्खिअ दीहं णीससिअ अअं पावारओ मम उवरि क्खित्तो । (ग)

**वसन्तसेना**—कण्णऊरअ, जाणीहि दाव किं एसो जादीकुसुमवासिदो पावारओ ण वेत्ति । (घ)

**कर्णपूरकः**—अज्जए, मदगन्धेण सुट्ठु तं गन्धं ण जाणामि । (ङ)

**वसन्तसेना**—णामं पि दाव पेक्ख । (च)

**कर्णपूरकः**—इमं णामं अज्जआ एव्व वाएदु । (छ) (इति प्रावारकमुपनयति ।)

**वसन्तसेना**—अज्जचारुदत्तस्स । (ज) (इति वाचयित्वा सस्पृहं गृहीत्वा प्रावृणोति ।)

**चेटी**—कण्णऊरअ, सोहदि अज्जआए पावारओ । (झ)

---

(क) आहत्य सरोषं तं हस्तिनं विन्ध्यशैलशिखराभम् ।
मोचितो मया स दन्तान्तरसंस्थितः परिव्राजकः ॥

(ख) सुष्ठु त्वया कृतम् । ततस्ततः ।

(ग) तत आर्ये, 'साधु रे कर्णपूरक, साधु' इत्येतावन्मात्रं भणन्ती, विषमभराक्रान्ता इव नौः, एकतः पर्यस्ता सकलोज्जयिन्यासीत् । तत आर्ये, एकेन शून्यान्याभरणस्थानानि परामृष्य ऊर्ध्वं प्रेक्ष्य दीर्घं निःश्वस्यायं प्रावारको ममोपरि क्षिप्तः ।

(घ) कर्णपूरक, जानीहि तावत्किमेष जातीकुसुमवासितः प्रावारको न वेति । (ङ) आर्ये, मदगन्धेन सुष्ठु तं गन्धं न जानामि ।

(च) नामापि तावत्प्रेक्षस्व । (छ) इदं नामार्यैव वाचयतु ।

(ज) आर्यचारुदत्तस्य । (झ) कर्णपूरक, शोभत आर्यायाः प्रावारकः ।

---

आहणिऊणेत्यादि । गाथा । स परिव्राजकः ॥ २० ॥ पल्हत्था पर्यस्ता ।

**कर्णपूरकः**—आ, सोहदि अज्जआए पावारओ । (क)

**वसन्तसेना**—कण्णऊरअ, इदं दे पारितोसिअम् । (ख) (इत्याभरणं प्रयच्छति ।)

**कर्णपूरकः**—(शिरसा गृहीत्वा प्रणम्य च ।) संपदं सुट्ठु सोहदि अज्जआए पावारओ । (ग)

**वसन्तसेना**—कण्णऊरअ, एदाए वेलाए कहिं अज्जचारुदत्तो । (घ)

**कर्णपूरकः**—एदेण ज्जेव मग्गेण पवुत्तो गन्तुं गेहम् । (ङ)

**वसन्तसेना**—हञ्जे, उवरिदणं अलिन्दअं आरुहिअ अज्जचारुदत्तं पेक्खेम्ह । (च)

(इति निष्क्रान्ताः सर्वे ।)

**इति द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः ।**

---

(क) आं, शोभत आर्यायाः प्रावारकः ।
(ख) कर्णपूरक, इदं ते पारितोषिकम् ।
(ग) सांप्रतं सुष्ठु शोभत आर्यायाः प्रावारकः ।
(घ) कर्णपूरक, एतस्यां वेलायां कुत्रार्यचारुदत्तः ।
(ङ) एतेनैव मार्गेण प्रवृत्तो गन्तुं गेहम् ।
(च) चेटि, उपरितनमलिन्दकमारुह्यार्यचारुदत्तं पश्यामः ।

---

परामुसिअ परामृष्य ॥ आं, सोहदीति । मया साहसार्जितेन न युक्तमेतदिति भावः । प्रवृत्तश्चलितः ॥

इति द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः ।

(ततः प्रविशति चेटः ।)

**चेटः—**

सुअणे क्खु भिच्चाणुकम्पके शामिए णिद्धणके वि शोहदे ।
पिशुणे उण दव्वगव्विदे दुक्कले क्खु पलिणामदालुणे ॥ १ ॥

अवि अ ।

शश्शपलक्कवलद्दे ण शक्कि वालिदुं
अण्णपशत्तकलत्ते ण शक्कि वालिदुम् ।
जूदपशत्तमणुश्शे ण शक्कि वालिदुं
जे वि शहाविअदोशे ण शक्कि वालिदुम् ॥ २ ॥

का वि वेला अज्जचारुदत्तश्श गन्धव्वं शुणिदुं गदश्श । अदिक्कमदि अद्धलअणी । अज्ज वि ण आअच्छदि । ता जाव बाहिलदुआलशालाए गदुअ शुविश्शम् । (क) (इति तथा करोति ।)

(क) सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनकोऽपि शोभते ।
पिशुनः पुनर्द्रव्यगर्वितो दुष्करः खलु परिणामदारुणः ॥

अपि च ।

सस्यलम्पटबलीवर्दो न शक्यो वारयितु-
मन्यप्रसक्तकलत्रं न शक्यं वारयितुम् ।
द्यूतप्रसक्तमनुष्यो न शक्यो वारयितुं
योऽपि स्वाभाविकदोषो न शक्यो वारयितुम् ॥

कापि वेलार्यचारुदत्तस्य गान्धर्वं श्रोतुं गतस्य । अतिक्रामत्यर्धरजनी । अद्यापि नागच्छति । तद्यावद्बहिर्द्वारशालायां गत्वा स्वप्स्यामि ।

**सुअणे इत्यादि** । वैतालीयम् । 'सुअणे' इत्येकारो लघुः । छन्दोनुरोधात् । सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनोऽपि शोभते । पिशुनः पुनर्द्रव्यगर्वितो दुष्करः(?) खलु परिणामदारुणः ॥ खलु यस्मादर्थे । दुष्करो यतः, अतः परिणामदारुणः ॥ १ ॥ **शश्शपलकेत्यादि** । शकरी जातिः । पलक्को लम्पटः । 'पडकला' इति महाराष्ट्रभाषा । सस्यलम्पटो बलीवर्दो न शक्यो वारयितुम् । अन्यप्रसक्तकलत्रं न शक्यं वारयितुम् । द्यूतप्रसक्तमनुष्यो न शक्यो वारयितुम् । योऽपि स्वाभाविको दोषः सोऽपीत्यर्थान्न शक्यो वारयितुम् ॥ अतिरिक्तदातृत्वं दोष एवेति । तं च मम स्वामी न त्यजतीति भावः ॥ २ ॥

(ततः प्रविशति चारुदत्तो विदूषकश्च।)

**चारुदत्तः**—अहो अहो, साधु साधु, रेभिलेन गीतम्। वीणा हि नामासमुद्रोत्थितं रत्नम्। कुतः।

उत्कण्ठितस्य हृदयानुगुणा वयस्या
संकेतके चिरयति प्रवरो विनोदः।
संस्थापना प्रियतमा विरहातुराणां
रक्तस्य रागपरिवृद्धिकरः प्रमोदः॥ ३॥

**विदूषकः**—भो, एहि। गेहं गच्छेम्ह। (क)

**चारुदत्तः**—अहो, सुष्ठु भावरेभिलेन गीतम्।

**विदूषकः**—मम दाव दुवेहिं ज्जेव्व हस्सं जाअदि। इत्थिआए सक्कअं पठन्तीए, मणुस्सेण अ काअलीं गाअन्तेण। इत्थिआ दाव सक्कअं पठन्ती, दिण्णणवणस्सा विअ गिट्ठी, अहिअं सुसुआअदि। मणुस्सो वि काअलीं गाअन्तो, सुक्खसुमणोदामवेट्ठिदो वुड्ढपुरोहिदो विअ मन्तं जवन्तो, दिढं मे ण रोअदि। (ख)

**चारुदत्तः**—वयस्य, सुष्ठु खल्वद्य गीतं भावरेभिलेन। न च वान्परितुष्टः।

रक्तं च नाम मधुरं च समं स्फुटं च
भावान्वितं च ललितं च मनोहरं च।
किंवा प्रशस्तवचनैर्बहुभिर्मदुक्तै-
रन्तर्हिता यदि भवेद्वनितेति मन्ये॥ ४॥

---

(क) भोः, एहि। गृहं गच्छावः।

(ख) मम तावद्द्वाभ्यामेव हास्यं जायते। स्त्रिया संस्कृतं पठन्त्या, मनुष्येण च काकलीं गायता। स्त्री तावत्संस्कृतं पठन्ती, दत्तनवनास्येव गृष्टिः, अधिकं सूसूशब्दं करोति। मनुष्योऽपि काकलीं गायन्, शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्रं जपन्, दृढं मे न रोचते।

---

गन्धव्वं गान्धर्वम्। गीतमित्यर्थः॥ **उत्कण्ठितस्येति**॥ ३॥ सक्कअं संस्कृतम्। काअलीं काकलीम्। णस्सा नासिकाविवररज्जुः। सुसुआअदीत्यव्यक्तशब्दानुकरणम्। शुष्कसुमनोदामवेष्टितत्वेन चिरकालजपप्रवणत्वमुक्तम्॥ **रक्तमिति**। भावान्वितं रत्यास्पदम्। ललितं लालित्याख्यधर्मविशेषशालि।

अपि च ।

तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टं च तन्त्रीस्वनं
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम् ।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥ ५ ॥

**विदूषकः**—भो वअस्स, आवणन्तररच्छाविभाएसु सुहं कुक्कुरा वि सुत्ता । ता गेहं गच्छेम्ह । (अग्रतोऽवलोक्य ।) वअस्स, पेक्ख पेक्ख । एसो वि अन्धआरस्स विअ अवआसं देन्तो अन्तरिक्खपासादादो ओदरदि भअवं चन्दो । (क)

**चारुदत्तः**—सम्यगाह भवान् ।

असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः ।
जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ ६ ॥

**विदूषकः**—भो, एदं अम्हाणं गेहम् । वड्ढमाणअ, वड्ढमाणअ, उग्घाटेहि दुआरअम् । (ख)

**चेटः**—अज्जमित्तेआह शलशंजोए शुणीअदि । आगदे अज्ज चालुदत्ते । ता जाव दुआलअं शे उग्घाटेमि । (तथा कृत्वा ।) अज्ज, वन्दामि । मित्तेअ, तुमंपि वन्दामि । एत्थ वित्थिण्णे आशणे णिशीदन्तु अज्जा । (ग)

---

(क) भो वयस्य, आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः । तद्गृहं गच्छावः । वयस्य, पश्य पश्य । एषोऽप्यन्धकारस्येवावकाशं दददन्तरिक्षप्रासादादवतरति भगवांश्चन्द्रः ।

(ख) भोः, इदमस्माकं गेहम् । वर्धमानक, वर्धमानक, उद्घाटय द्वारम् ।

(ग) आर्यमैत्रेयस्य स्वरसंयोगः श्रूयते । आगत आर्यचारुदत्तः । तद्यावद्द्वारमस्योद्घाटयामि । आर्य, वन्दे । मैत्रेय, त्वामपि वन्दे । अत्र विस्तीर्ण आसने निषीदतमार्यौ ।

---

पिहिता योषिदेव गायति न पुरुष इति भासते ॥ ४ ॥ **तमिति** ॥ ५ ॥ आपणमध्यरथ्याविभागेषु कुक्कुरा अपि सुप्ताः । ओदरदि अवतरति । अस्ताभिमुखं यातीत्यर्थः ॥ **असाविति** । विषाणाग्रं दन्ताग्रम् ॥ ६ ॥ संयोगः समवधानम् ॥

बद्ध्वा विषवेगं नाटयति । चिकित्सां कृत्वा ) स्वस्थोऽस्मि । ( पुनः कर्म कृत्वा दृष्ट्वा च । ) अये, ज्वलति प्रदीपः । तथा हि ।

शिखा प्रदीपस्य सुवर्णपिञ्जरा महीतले संधिमुखेन निर्गता ।
विभाति पर्यन्ततमःसमावृता सुवर्णरेखेव कषे निवेशिता ॥ १७ ॥

( पुनः कर्म कृत्वा ) समाप्तोऽयं संधिः । भवतु । प्रविशामि । अथवा न तावत्प्रविशामि । प्रतिपुरुषं निवेशयामि । ( तथा कृत्वा । ) अये, न कश्चित् । नमः कार्तिकेयाय । ( प्रविश्य दृष्ट्वा च । ) अये, पुरुषद्वयं सुप्तम् । भवतु । आत्मरक्षार्थं द्वारमुद्घाटयामि । कथं जीर्णत्वाद्गृहस्य विरौति कपाटम् । तद्यावत्सलिलमन्वेषयामि । क न खलु सलिलं भविष्यति । ( इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन्सशङ्कम् । ) मा तावद्भूमौ पतच्छब्दमुत्पादयेत् । भवतु । एवं तावत् । ( पृष्ठेन प्रतीक्ष्य कपाटमुद्घाट्य । ) भवतु । एवं तावत् । इदानीं परीक्षे किं लक्ष्यसुप्तम्, उत परमार्थसुप्तमिदं द्वयम् । ( त्रासयित्वा परीक्ष्य च । ) अये, परमार्थसुप्तेनानेन भवितव्यम् । तथा हि ।

निःश्वासोऽस्य न शङ्कितः सुविशदस्तुल्यान्तरं वर्तते
दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला ।
गात्रं स्रस्तशरीरसंधिशिथिलं शय्याप्रमाणाधिकं
दीपं चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि ॥ १८ ॥

( समन्तादवलोक्य । ) अये, कथं मृदङ्गः । अयं दर्दुरः । अयं पणवः । इयमपि वीणा । एते वंशाः । अमी पुस्तकाः । कथं नाट्याचार्यस्य गृहमिदम् । अथवा भवनप्रत्ययात्प्रविष्टोस्मि । तत्किं परमार्थदरिद्रोऽयम्, उत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति । ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम् । भवतु । बीजं प्रक्षि-

---

...योगानिति कटकादेर्धर्मावकीलकसुश्लिष्टसंयोजनाभेदान् ॥ १६ ॥ शिखेति । ...१७ ॥ 'प्रतीक्ष्य' इत्यत्र 'प्रतीच्छय' इति पाठो दृश्यते । तत्र प्रतीच्छाग्रहणं ...शसृवेल्यत्रार्थे णिचि समासे क्त्वाप्रत्यये ल्यपि रूपम् । लक्ष्यसुप्तं व्याजसुप्तस्या...श्वासः इति । तुल्यमविषयमन्तरमन्तरालो यथा स्यादेवं ॥ २० ॥

पामि । ( तथा कृत्वा ) निक्षिप्तं बीजं न क्वचित्स्फारीभवति । अये, परमार्थदरिद्रोऽयम् । भवतु । गच्छामि ।

**विदूषकः**—( उत्स्वप्नायते । ) भो वअस्स, संधी विअ दिज्जदि । चोरं विअ पेक्खामि । ता गेण्हदु भवं एदं सुवण्णभण्डअम् । (क)

**शर्विलकः**—किं न खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति । तत्किं व्यापादयामि, उत लघुत्वादुत्स्वप्नायते । ( दृष्ट्वा । ) अये, जर्जरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलंकरणभाण्डम् । भवतु । गृह्णामि । अथवा न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम् । तद्गच्छामि ।

**विदूषकः**—भो वअस्स, साविदोसि गोबम्हणकामाए, जइ एदं सुवण्णभण्डअं ण गेह्लसि । (ख)

**शर्विलकः**—अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च । तद्गृह्णामि । अथवा ज्वलति प्रदीपः । अस्ति च मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्यते । तं तावत्प्रवेशयामि । तस्यायं देशकालः । एष मुक्तो मया कीटो यात्वेवास्य दीपस्योपरि मण्डलैर्विचित्रैर्विचरितुम् । एष पक्षद्वयानिलेन निर्वापितो भद्रपीठेन धिक्कृतमन्धकारम् । अथवा मयाप्यसद्ब्राह्मणकुलेन धिक्कृतमन्धकारम् । अहं हि चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्यमनुतिष्ठामि । इदानीं करोमि ब्राह्मणस्य प्रणयम् । ( इति जिघृक्षति । )

(क) भो वयस्य, संधिरिव दृश्यते । चौरमिव पश्यामि । तद्गृह्णातु भवानिदं सुवर्णभाण्डम् ।

(ख) भो वयस्य, शापितोऽसि गोब्राह्मणकाम्यया, यद्येतत्सुवर्णभाण्डं न गृह्णासि ।

कपटसुप्तस्य विषमान्तरालवत्त्वात् ॥ १८ ॥ स्फारीभवति । अभिमन्त्रितो बीजवापणार्थे धनसहितभूतले क्षिप्तो बहुलीभवतीति प्रसिद्धिः ॥ लघुत्वाच्चपलत्वात् स्वं यातीत्यर्थः इति । कामयतेर्लिङ्सामान्ये अचो यति पश्चात्स्त्रीत्वं विलक्षणीयम् ॥

**विदूषकः**—भो वअस्स, सीदलो दे अग्गहत्थो । (क)

**शर्विलकः**—धिक्प्रमादः । सलिलसंपर्काच्छीतलो मेऽग्रहस्तः । भवतु । कक्षयोर्हस्तं प्रक्षिपामि । ( नाट्येन सव्यहस्तमुष्णीकृत्य गृह्णाति । )

**विदूषकः**—गहिदम् । (ख)

**शर्विलकः**—अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः । तद्गृहीतम् ।

**विदूषकः**—दाणिं विक्किणिदपण्णो विअ वाणिओ, अहं सुहं सुविस्सम् । (ग)

**शर्विलकः**—महाब्राह्मण, स्वपिहि वर्षशतम् । कष्टमेवं मदनिकागणिकार्थे ब्राह्मणकुलं तमसि पातितम् । अथवा आत्मा पातितः ।

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम् ।
यदेतद्गर्हितं कर्म निन्दामि च करोमि च ॥ १९ ॥

तद्यावन्मदनिकाया निष्क्रयणार्थं वसन्तसेनागृहं गच्छामि । ( परिक्रम्यावलोक्य च । ) अये, पदशब्द इव । मा नाम रक्षिणः । भवतु । स्तम्भीभूत्वा तिष्ठामि । अथवा ममापि नाम शर्विलकस्य रक्षिणः । योऽहं

मार्जारः क्रमणे मृगः प्रसरणे श्येनो ग्रहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः ।
माया रूपशरीरवेशरचने वाग्देशभाषान्तरे
दीपो रात्रिषु संकटेषु डुडुमो वाजी स्थले नौर्जले ॥ २० ॥

(क) भो वयस्य, शीतलस्तेऽग्रहस्तः । (ख) गृहीतम् ।

(ग) इदानीं विक्रीतपण्य इव वणिक्, अहं सुखं स्वप्स्यामि ।

[illegible]गोर्ब्राह्मणसहिताया भङ्गं त्वं करोषि यदीदं न गृह्णासीति शपथार्थः ॥ प्रणयोऽ[illegible]र्थना ॥ विक्किणिदपण्णो विअ विक्रीतपण्य इव ॥ **धिगिति** । अनिर्वेदितेति प्र[illegible]:। निश्चयो निर्वेदः, तदभावोऽनिर्वेदः ॥१९॥ पदशब्द इत्यनेन रदनिकाप्रवेशा[illegible]नम् । **मार्जार इति** । ग्रहणयुक्तमालुञ्चनं ग्रहालुञ्चनम् । श्वा कुक्कुरः । माया शाम्बरी विद्या । रूपमाकारम् । वेशोऽलंकारादियोजना । डुडुम उहुंसः ॥ २० ॥

अपि च।

भुजग इव गतौ, गिरिः स्थिरत्वे, पतगपतेः परिसर्पणे च तुल्यः।
शश इव भुवनावलोकनेऽहं वृक इव च ग्रहणे बले च सिंहः ॥ २१ ॥

( प्रविश्य )

**रदनिका**—हद्धी हद्धी, बाहिरदुआरसालाए पसुत्तो वड्ढमाणओ। सोवि एत्थ ण दीसइ। भोदु। अज्जमित्तेअं सद्दावेमि। (क)

( इति परिक्रामति। )

**शर्विलकः**—( रदनिकां हन्तुमिच्छति। निरूप्य। ) कथं स्त्री। भवतु। गच्छामि। ( इति निष्क्रान्तः। )

**रदनिका**—( गत्वा सत्रासम्। ) हद्धी हद्धी, अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कमति। भोदु। मित्तेअं गदुअ पबोधेमि। ( विदूषकमुपगम्य। ) अज्जमित्तेअ, उट्ठेहि उट्ठेहि। अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कन्तो। (ख)

**विदूषकः**—( उत्थाए। ) आः दासीए धीए, किं भणासि—'चोरं कप्पिअ संधी णिक्कन्तो'। (ग)

**रदनिका**—हदास, अलं परिहासेण। किं ण पेक्खणि एणम्। (घ)

**विदूषकः**—आः दासीए धीए, किं भणासि—'दुदिअं विअ दुआरअं उग्घाडिदं' त्ति। भो वअस्स चारुदत्त, उट्ठेहि उट्ठेहि। अम्हाणं गेहे संधिं दइअ चोरो णिक्कन्तो। (ङ)

---

(क) हा धिक् हा धिक्, बहिर्द्वारशालायां प्रसुप्तो वर्धमानकः। सोऽप्यत्र न दृश्यते। भवतु। आर्यमैत्रेयमाह्वयामि।

(ख) हा धिक् हा धिक् अस्माकं गृहे संधिं कर्तयित्वा चौरो निष्क्रमति। भवतु। मैत्रेयं गत्वा प्रबोधयामि। आर्यमैत्रेय, उत्तिष्ठोत्तिष्ठ। अस्माकं गेहे संधिं कर्तयित्वा चौरो निष्क्रान्तः।

(ग) आः दास्याः पुत्रिके, किं भणसि 'चौरं कर्तयित्वा संधिर्निष्क्रान्तः'। (घ) हताश, अलं परिहासेन। किं न प्रेक्षस एन[illegible]

(ङ) आ दास्याः पुत्रिके, किं भणसि—'द्वितीयमिव द्वारमु[illegible] इति। भो वयस्य चारुदत्त, उत्तिष्ठोत्तिष्ठ। अस्माकं गेहे संधि[illegible] चौरो निष्क्रान्तः।

---

बीजा-[illegible]खं

**भुजग इति**। वृक इति हुण्डार इति प्रसिद्धः ॥ २१ ॥ कप्पिअ कृत्वा। निष्क्र[illegible]

**चारुदत्तः**—भवतु । भोः, अलं परिहासेन ।

**विदूषकः**—भो, ण परिहासो । पेक्खदु भवम् । (क)

**चारुदत्तः**—कस्मिन्नुद्देशे ।

**विदूषकः**—भो, एसो । (ख)

**चारुदत्तः**—(विलोक्य।) अहो दर्शनीयोऽयं संधिः ।

उपरितलनिपातितेष्टकोऽयं
शिरसि तनुर्विपुलश्च मध्यदेशे ।
असदृशजनसंप्रयोगभीरो-
र्हृदयमिव स्फुटितं महागृहस्य ॥ २२ ॥

कथमस्मिन्नपि कर्मणि कुशलता ।

**विदूषकः**—भो वअस्स, अअं संधी दुवेहिं ज्जेव दिण्णो भवे । आदु आगन्तुएण, सिक्खिदुकामेण वा । अण्णधा इध उज्जइणीए को अम्हाणं घरविहवं ण जाणादि । (ग)

**चारुदत्तः**—

वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान्धनैर्विरहितं विस्रब्धसुप्तं जनम् ।
दृष्ट्वा प्राङ्महतीं निवासरचनामस्माकमाशान्वितः
संधिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः ॥ २३ ॥

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी—'सार्थवाहसुतस्य गृहं प्रविश्य न किंचिन्मया समासादितम्' इति ।

**विदूषकः**—भो, कधं तं ज्जेव चोरहदअं अणुसोचसि । तेण चिन्तिदं महन्तं एदं गेहम् । इदो रअणभण्डअं सुवण्णभण्डअं वा

---

(क) भोः, न परिहासः । प्रेक्षतां भवान् । (ख) भोः, एषः ।

गोर्ब्राह्मण ... भो वयस्य, एष संधिर्द्वाभ्यामेव दत्तो भवेत् । अथवागन्तुकेन, ...नन वा । अन्यथात्रोज्जयिन्यां कोऽस्माकं गृहविभवं न जाना... । ऽर्थना ...ताम् ।

प्रवर्ध:ानिश्उपरीति । उपरिभागे तलभागे च विनिपातिता आ... शास्। 'उपरितन-' इति पाठ उपरितनी उपरिभवा । शेषं तु... शा...श्येनेति ॥ २३ ॥ णिक्कामिस्सं निष्क्रामयिष्यामि । वहि 'अरण्यषष्ठिका

णिक्कामिस्सम् । (स्मृत्वा सविषादमात्मगतम् ।) कहिं तं सुवण्णभण्डअम् । (पुनरनुस्मृत्य प्रकाशम् ।) भो वअस्स, तुमं सव्वकालं भणासि—'मुक्खो मित्तेअओ, अपण्डिदो मित्तेअओ' त्ति । सुट्ठु मए किदं तं सुवण्णभण्डअं भवदो हत्थे समप्पअन्तेण । अण्णधा दासीए पुत्तेण अवहिदं भवे । (क)

**चारुदत्तः**—अलं परिहासेन ।

**विदूषकः**—भो, जह णाम अहं मुक्खो ता किं परिहासस्स वि देशआलं ण जाणामि । (ख)

**चारुदत्तः**—कस्यां वेलायाम् ।

**विदूषकः**—भो, जदा तुमं मए भणिदो सि—'शीदलो दे अग्गहत्थो' । (ग)

**चारुदत्तः**—कदाचिदेवमपि स्यात् । (सर्वतो निरूप्य सहर्षम् ।) वयस्य, दिष्ट्या ते प्रियं निवेदयामि ।

**विदूषकः**—किं ण अवहिदम् । (घ)

**चारुदत्तः**—हृतम् ।

**विदूषकः**—तधा वि किं पिअम् । (ङ)

**चारुदत्तः**—यदसौ कृतार्थो गतः । Successful

**विदूषकः**—णासो क्खु सो । (च)

---

(क) भोः, कथं तमेव चौरहृतकमनुशोचसि । तेन चिन्तितं महदेतद्गृहम् । इतो रत्नभाण्डं सुवर्णभाण्डं वा निष्क्रामयिष्यामि । कुत्र तत्सुवर्णभाण्डम् । भो वयस्य, त्वं सर्वकालं भणसि—'मूर्खो मैत्रेयः, अपण्डितो मैत्रेयः' इति । सुष्टु मया कृतं तत्सुवर्णभाण्डं भवतो हस्ते समर्पयता । अन्यथा दास्याः पुत्रेणापहृतं भवेत् ।

(ख) भोः, यथा नामाहं मूर्खस्तत्किं परिहासस्यापि देशकालं न जानामि ।

(ग) भोः, यदा त्वं मया भणितोऽसि—'शीतलस्तेऽग्रहस्तः' । इति । भो किं नापहृतम् ।

चौरो निष्क्रान्तः... पि किं प्रियम् ।　　(च) न्यासः खलु सः ।

---

भुजग इति । ... दं अपहृतम् ॥ दिष्ट्या हर्षे ॥ ण अवहिदं नापहृतम् ॥

**चारुदत्तः**—कथं न्यासः । ( मोहमुपगतः ।)

**विदूषकः**—समस्ससदु भवम् । जइ णासो चोरेण अवहिदो तुमं किं मोहं उगवदो । (क)

**चारुदत्तः**—( समाश्वस्य । ) वयस्य,

कः श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति ।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ २४ ॥

भोः, कष्टम् ।

यदि तावत्कृतान्तेन प्रणयोऽर्थेषु मे कृतः ।
किमिदानीं नृशंसेन चारित्रमपि दूषितम् ॥ २५ ॥

**विदूषकः**—अहं क्खु अवलविस्सम्—'केण दिण्णम्, केण गहिदम्, को वा सक्खि' त्ति । (ख)

**चारुदत्तः**—अहमिदानीमनृतमभिधास्ये ।

भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यासप्रतिक्रियाम् ।
अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम् ॥ २६ ॥

**रदनिका**—ता जाव अज्जाधूदाए गदुअ णिवेदेमि । (ग)
( इति निष्क्रान्ता ।)

( प्रविशति चेट्या सह चारुदत्तवधूः ।)

**वधूः**—( ससंभ्रमम् ।) अइ, सच्चं अवरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह । (घ)

**चेटी**—भट्टिणि, सच्चम् । किं तु जो सो वेस्साजणकेरको अलंकारओ सो अवहिदो । (ङ)

---

(क) समाश्वसितु भवान् । यदि न्यासश्चौरेणापहृतस्त्वं किं मोहमुपगतः ।

(ख) अहं खल्वपलपिष्यामि—'केन दत्तम्, केन गृहीतम्, को वा साक्षी' इति । (ग) तद्यावदार्याधूतायै गत्वा निवेदयामि ।

[illegible]) अयि, सत्यमपरिक्षतशरीर आर्यपुत्र आर्यमैत्रेयेण सह ।

[illegible]) भर्त्रि, सत्यम् । किं तु यः स वेश्याजनस्यालंकारकः [illegible]हाणेताम् ।

---

[illegible]इति । निष्प्रतापा निष्पौरुषा ॥ २४ ॥ **यदीति** । प्रणये———

[illegible]**येणेति** ॥ २६ ॥ अवरक्खणजणस्स अपगतं रक्षणं । 'अरण्यषष्ठिका

( वधूर्मोहं नाटयति । )

**चेटी**—समस्ससदु अज्जाधूदा । (क)

**वधूः**—( समाश्वस्य । ) हञ्जे किं भणासि—'अवरिक्खदसरीरो अज्जउत्तो' त्ति । वरं दाणिं सो सरीरेण परिक्खदो, ण उण चारित्तेण । संपदं उज्जइणीए जणो एव्वं मन्तइस्सदि—'दलिद्दाए अज्जउत्तेण ज्जेव ईदिसं अकज्जं अणुचिट्ठिदम्' त्ति । ( ऊर्ध्वमवलोक्य निःश्वस्य च । ) भअवं कअन्त, पोक्खरवत्तपडिदजलबिन्दुचञ्चलेहिं कीलसि दलिद्दपुरिसभाअधेएहिं । इअं च मे एक्का मादुघरलद्धा रअणावली चिट्ठदि । एदं पि अदिसोण्डीरदाए अज्जउत्तो ण गेण्हिस्सदि । हञ्जे, अज्जमित्तेअं दाव सद्दावेहि । (ख)

**चेटी**—जं अज्जाधूदा आणवेदि । ( विदूषकमुपगम्य । ) अज्जमित्तेअ, धूदा दे सद्दावेदि । (ग)

**विदूषकः**—कहिं सा । (घ)

**चेटी**—एसा चिट्ठदि । उवसप्प । (ङ)

**विदूषकः**—( उपसृत्य । ) सोत्थि भोदिए । (च)

**वधूः**—अज्ज, वन्दामि । अज्ज, पौरत्थिमामुहो होहि । (छ)

**विदूषकः**—एसो भोदि, पौरत्थिमामुहो संवुत्तो म्हि । (ज)

---

(क) समाश्वसित्वार्याधूता ।

(ख) चेटि, किं भणसि—'अपरिक्षतशरीर आर्यपुत्रः' इति । वरमिदानीं स शरीरेण परिक्षतः, न पुनश्चारित्रेण । सांप्रतमुज्जयिन्यां जन एवं मन्त्रयिष्यति—'दरिद्रतयार्यपुत्रेणैवेदृशमकार्यमनुष्ठितम्' इति । भगवन्कृतान्त, पुष्करपत्रपतितजलबिन्दुचञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः । इयं च मे एका मातृगृहलब्धा रत्नावली तिष्ठति । एतामप्यतिशौण्डीरतयार्यपुत्रो न ग्रहीष्यति । चेटि, आर्यमैत्रेयं तावदाह्वय । Night pride

(ग) यदार्याधूताज्ञापयति । आर्यमैत्रेय, धूता त्वामाह्वयति ।

(ङ, (घ) कुत्र सा । (ङ) एषा तिष्ठति । उपसर्प ।

इति । भो कि स्वस्ति भवत्याः । (छ) आर्य, वन्दे । आर्य, पुरस्तान्मुखो भव ।

चौरो निष्क्रान्त पि भवति, पुरस्तान्मुखः संवृत्तोऽस्मि ।

---

भुजग इति । वृ दं वहिदो अपहृतः ॥ पौरत्थिमामुहो पौरस्त्याभिमुखः पूर्व

**वधूः**—अज्ज, पडिच्छ इमम् । (क)

**विदूषकः**—किं ण्णेदम् । (ख)

**वधूः**—अहं क्खु रअणसट्ठिं उववसिदा आसि । तहिं जधा-विहवाणुसारेण बम्हणो पडिग्गाहिदव्वो । सो अ ण पडिग्गाहिदो, ता तस्य किदे पडिच्छ इमं रअणमलिअम् । (ग)

**विदूषकः**—(गृहीत्वा ।) सोत्थि । गमिस्सम् । पिअवअस्सस्स णिवेदेमि । (घ)

**वधूः**—अज्जमित्तेअ, मा क्खु मं लज्जावेहि । (ङ) (इति निष्क्रान्ता ।)

**विदूषकः**—(सविस्मयम् ।) अहो, से महाणुभावदा । (च)

**चारुदत्तः**—अये चिरयति मैत्रेयः । मा नाम वैक्लव्यादकार्यं कुर्यात् । मैत्रेय, मैत्रेय ।

**विदूषकः**—(उपसृत्य ।) एसो म्हि । गेण्ह एदम् । (छ) (रत्नावलीं दर्शयति ।)

**चारुदत्तः**—किमेतत् ।

**विदूषकः**—भो, जं दे सरिसदारसंगहस्स फलम् । (ज)

**चारुदत्तः**—कथम् । ब्राह्मणी मामनुकम्पते । कष्टम् । इदानीमस्मि दरिद्रः ।

आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ २७ ॥

(क) आर्य, प्रतीच्छेमाम् । (ख) किं न्विदम् ।

(ग) अहं खलु रत्नषष्ठीमुपोषितास्मि । तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहितव्यः । स च न प्रतिग्राहितः, तत्तस्य कृते प्रतीच्छेमां रत्नमालिकाम् ।

(घ) स्वस्ति । गमिष्यामि । प्रियवयस्यस्य निवेदयामि ।

(ङ) आर्यमैत्रेय, मा खलु मां लज्जितां कुरु ।

(च) अहो, अस्या महानुभावता । (छ) एषोऽस्मि । गृहाणैताम् ।

(ज) भोः, यत्ते सदृशदारसंग्रहस्य फलम् ।

दिग्वलम्बितमुख इत्यर्थः ॥ रअणसट्ठिं रत्नषष्ठिकाभिधं व्रतम् । 'अरण्यषष्ठिका

अथवा । नाहं दरिद्रः । यस्य मम

विभवानुगता भार्या सुखदुःखसुहृद्भवान् ।
सत्यं च न परिभ्रष्टं यद्दरिद्रेषु दुर्लभम् ॥ २८ ॥

मैत्रेय, गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशम् । वक्तव्या च सा मद्वचनात्—'यत्खल्वस्माभिः सुवर्णभाण्डमात्मीयमिति कृत्वा विश्रम्भाद्द्यूते हारितम् । तस्य कृते गृह्यतामियं रत्नावली' इति ।

**विदूषकः**—मा दाव अक्खाइदस्स अभुत्तस्स अप्पमुल्लस्स चोरेहिं अवहिदस्स कारणादो चतुःसमुद्दसारभूदा रअणावली दीअदि । (क)

**चारुदत्तः**—वयस्य, मा मैवम् ।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः ।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ २९ ॥

तद्वयस्य, अस्मच्छरीरस्पृष्टिकया शापितोऽसि, नैनामग्राहयित्वात्रागन्तव्यम् । वर्धमानक,

एताभिरिष्टिकाभिः संधिः क्रियतां सुसंहतः शीघ्रम् ।
परिवादबहलदोषान्न यस्य रक्षां परिहरामि ॥ ३० ॥

वयस्य मैत्रेय, भवताप्यकृपणशौण्डीर्यमभिधातव्यम् ।

**विदूषकः**—भो, दलिद्दो किं अकिविणं मन्तेदि (ख)

**चारुदत्तः**—अदरिद्रोऽसि सखे, यस्य मम । ( 'विभवानुगता भार्या' ( ३।२८ ) इत्यादि पुनः पठति ।) तद्गच्छतु भवान् । अहमपि कृतशौचः संध्यामुपासे । ( इति निष्क्रान्ताः सर्वे ।)

**इति संधिच्छेदोनाम तृतीयोऽङ्कः ।**

---

(क) मा तावदखादितस्याभुक्तस्याल्पमूल्यस्य चौरैरपहृतस्य कारणाच्चतुःसमुद्रसारभूता रत्नावली दीयते । (ख) भोः, दरिद्रः किमकृपणं मन्त्रयति ।

---

नाम ग्रीष्मव्रतम्' इत्येके ॥ **आत्मेति** ॥ २७ ॥ **विभवेति** ॥ २८ ॥ चतुःसमुद्रेति । चतुःसमुद्राणां रत्नाकराणां सारभूता ॥ **यमिति** । समालम्ब्येत्याद्यपूर्वोऽपि सोहणसवनविभवेति (?) कुलीनत्वादेरित्यर्थः (?) ॥ २९ ॥ **एताभिरिति** ॥ ३० ॥ सत्त्वमाशयं महत्त्वम् (?) ॥

इति संधिच्छेदो नाम तृतीयोऽङ्कः ।

( ततः प्रविशति चेटी ।)

**चेटी**—आणत्तम्हि अत्ताए अज्जआए सआसं गन्तुम् । एसा अज्जआ चित्तफलअणिसण्णदिट्ठी मदणिआए सह किंपि मन्तअन्ती चिट्ठदि । ता जाव उवसप्पामि । (क) ( इति परिक्रामति ।)

( ततः प्रविशति यथानिर्दिष्टा वसन्तसेना मदनिका च ।)

**वसन्तसेना**—हञ्जे मदणिए, अवि सुसदिसी इअं चित्ताकिदी अज्जचारुदत्तस्स । (ख)

**मदनिका**—सुसदिसी । (ग)

**वसन्तसेना**—कधं तुमं जाणासि । (घ)

**मदनिका**—जेण अज्जआए सुसिणिद्धा दिट्ठी अणुलग्गा । (ङ)

**वसन्तसेना**—हञ्जे, किं वेसवासदाक्खिण्णेण मदणिए, एव्वं भणासि । (च)

**मदनिका**—अज्जए, किं जो ज्जेव जणो वेसे पडिवसदि, सो ज्जेव अलीअदक्खिणो भोदि । (छ)

**वसन्तसेना**—हञ्जे, णाणापुरिससङ्गेण वेस्साजणो अलीअदक्खिणो भोदि । (ज)

---

(क) आज्ञप्तास्मि मात्रार्यायाः सकाशं गन्तुम् । एषार्या चित्रफलकनिषण्णदृष्टिर्मदनिकया सह किमपि मन्त्रयन्ती तिष्ठति । तद्यावदुपसर्पामि ।

(ख) चेटि मदनिके, अपि सुसदृशीयं चित्राकृतिरार्यचारुदत्तस्य ।

(ग) सुसदृशी । (घ) कथं त्वं जानासि ।

(ङ) येनार्यायाः सुस्निग्धा दृष्टिरनुलग्ना ।

(च) चेटि, किं वेशवासदाक्षिण्येन मदनिके, एवं भणसि ।

(छ) आर्ये, किं य एव जनो वेशे प्रतिवसति, स एवालीकदक्षिणो भवति ।

(ज) चेटि, नानापुरुषसङ्गेन वेश्याजनोऽलीकदक्षिणो भवति ।

**मदनिका**—जदो दाव अज्जआए दिट्टी इध अभिरमदि हिअअं च, तस्स कारणं किं पुच्छीअदि । (क)

**वसन्तसेना**—हञ्जे, सहीजणादो उवहसणीअदां रक्खामि । (ख)

**मदनिका**—अज्जए, एव्वं णेदम् । सहीजणचित्ताणुवत्ती अबलाअणो भोदि । (ग)

**प्रथमा चेटी**—(उपसृत्य ।) अज्जए, अत्ता आणवेदि—'गहिदावगुण्ठणं पक्खदुआरए सज्जं पवहणम् । ता गच्छ' त्ति । (घ)

**वसन्तसेना**—हञ्जे, किं अज्जचारुदत्तो मं णइस्सदि । (ङ)

**चेटी**—अज्जए, जेण पवहणेण सह सुवण्णदससाहस्सिओ अलंकारओ अणुप्पेसिदो । (च)

**वसन्तसेना**—को उण सो । (छ)

**चेटी**—एसो ज्जेव राअस्सालो संठाणओ । (ज)

**वसन्तसेना**—(सक्रोधम् ।) अवेहि । मा पुणो एव्वं भणिस्ससि । (झ)

**चेटी**—पसीददु पसीददु अज्जआ । संदेसेण म्हि पेसिदा । (ञ)

**वसन्तसेना**—अहं संदेसस्स ज्जेव कुप्पामि । (ट)

---

(क) यतस्तावदार्याया दृष्टिरिहाभिरमते हृदयं च, तस्य कारणं किं पृच्छयते । (ख) चेटि, सखीजनादुपहसनीयतां रक्षामि ।

(ग) आर्ये, एवं नेदम् । सखीजनचित्तानुवर्त्यबलाजनो भवति ।

(घ) आर्ये, माताज्ञापयति—'गृहीतावगुण्ठनं पक्षद्वारे सज्जं प्रवहणम् । तद्गच्छ' इति । (ङ) चेटि, किमार्यचारुदत्तो मां नेष्यति ।

(च) आर्ये, येन प्रवहणेन सह सुवर्णदशसाहस्रिकोऽलंकारोऽनुप्रेषितः ।

(छ) कः पुनः सः । (ज) एष एव राजश्यालः संस्थानकः ।

(झ) अपेहि । मा पुनरेवं भणिष्यसि ।

(ञ) प्रसीदतु प्रसीदत्वार्या । संदेशेनास्मि प्रेषिता ।

(ट) अहं संदेशस्यैव कुप्यामि ।

---

तस्सेत्यादि । यत्र चक्षुर्हृदये लग्ने तत्र कारणं किं पर्यालोच्यते । अतिप्रियनासामस्वलं [illegible] । गहिदावगुण्ठणं गृहीतावगुण्ठनम् ॥

**चेटी**—ता किंति अत्तं विण्णविस्सम् । (क)

**वसन्तसेना**—एव्वं विण्णाविदव्वा—'जइ मं जीअन्तीं इच्छसि, ता एव्वं ण पुणो अहं अत्ताए आण्णाविदव्वा' । (ख)

**चेटी**—जधा दे रोअदि । (ग) (इति निष्क्रान्ता ।)

(प्रविश्य ।)

**शर्विलकः**—

दत्त्वा निशाया वचनीयदोषं निद्रां च जित्वा नृपतेश्च रक्ष्यान् ।
स एष सूर्योदयमन्दरश्मिः क्षपाक्षयाच्चन्द्र इवास्मि जातः ॥ १ ॥

अपि च ।

यः कश्चित्त्वरितगतिर्निरीक्षते मां
संभ्रान्तं द्रुतमुपसर्पति स्थितं वा ।
तं सर्वं तुलयति दूषितोऽन्तरात्मा
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ २ ॥

या खलु मदनिकायाः कृते साहसमनुष्ठितम् ।

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्जितम् ।
नरपतिबले पार्श्वायाते स्थितं गृहदारुव-
द्व्यवसितशतैरेवंप्रायैर्निशा दिवसीकृता ॥ ३ ॥

(इति परिक्रामति ।)

**वसन्तसेना**—हञ्जे, इमं दाव चित्तफलअं मम सअणीए ठाविअ तालवेण्टअं गेण्हिअ लहु आअच्छ । (घ)

**मदनिका**—जं अज्जआ आणवेदि । (ङ) (इति फलकं गृहीत्वा निष्क्रान्ता ।)

---

(क) तत्किमिति मातरं विज्ञापयिष्यामि ।

(ख) एवं विज्ञापयितव्या—'यदि मां जीवन्तीमिच्छसि, तदेवं न पुनरहं मात्राज्ञापयितव्या' । (ग) यथा ते रोचते ।

(घ) चेटि, इमं तावच्चित्रफलकं मम शयनीये स्थापयित्वा तालवृन्तं गृहीत्वा लघ्वागच्छ । (ङ) यदार्याज्ञापयति ।

---

विण्णविस्सं विज्ञापयिष्यामि ॥ **दत्त्वेति** ॥ १ ॥ **य इति** । त्वरितगतिः कश्चित् ।

(स्फालेकविशेषणस्य) ...



**शर्विलकः**—इदं वसन्तसेनाया गृहम् । तद्यावत्प्रविशामि । (प्रविश्य ।) क्व नु मया मदनिका द्रष्टव्या ।

(ततः प्रविशति तालवृन्तहस्ता मदनिका ।)

**शर्विलकः**—(दृष्ट्वा ।) अये, इयं मदनिका ।

मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् ।
मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥४॥

मदनिके ।

**मदनिका**—(दृष्ट्वा ।) अम्मो, कधं सव्विलओ । सव्विलअ, साअदं दे कहिं तुमम् । (क)

**शर्विलकः**—कथयिष्यामि ।

(इति सानुरागमन्योन्यं पश्यतः ।)

**वसन्तसेना**—चिरअदि मदणिआ । ता कहिं णु क्खु सा । (गवाक्षकेन दृष्ट्वा ।) कथम् । एसा केनावि पुरिसकेण सह मन्तअन्ती चिट्ठदि । जधा अदिसिणिद्धाए णिच्चलदिट्ठीए आपिबन्ती विअ एदं णिज्झाअदि, तधा तक्केमि, एसो सो जणो एदं इच्छदि अभुजिस्सं कादुम् । ता रमदु रमदु । मा कस्सावि पीदिच्छेदो भोदु । ण क्खु सद्दाविस्सम् (ख)

**मदनिका**—सव्विलअ, कधेहि । (ग)

(शर्विलकः सशङ्कं दिशोऽवलोकयति ।)

**मदनिका**—सव्विलअ, किं ण्णेदम् । ससङ्को विअ लक्खीअसि । (घ)

---

(क) आश्चर्यम्, कथं शर्विलकः । शर्विलक, स्वागतं ते । कुत्र त्वम् ।

(ख) चिरयति मदनिका । तत्कुत्र नु खलु सा । कथम् । एषा केनापि पुरुषकेण सह मन्त्रयन्ती तिष्ठति । यथातिस्निग्धया निश्चलदृष्ट्या पिबन्तीवैतं निध्यायति, तथा तर्कयामि, एष स जन एनामिच्छत्यभुजिष्यां कर्तुम् । तद्रमतां रमताम् । मा कस्यापि प्रीतिच्छेदो भवतु । न खल्वाकारयिष्यामि ।

(ग) शर्विलक, कथय ।

(घ) शर्विलक, किं न्विदम् । सशङ्क इव लक्ष्यसे ।

संभ्रान्तं माम् ॥ २ ॥ **परिजनेति** ॥ ३ ॥ **मदनमिति** ॥ ४ ॥ अभुजिस्सं अप्रे-

**शर्विलकः**—वक्ष्ये त्वां किंचिद्रहस्यम् । तद्विविक्तमिदम् ।

**मदनिका**—अध इं । (क)

**वसन्तसेना**—कधं परमरहस्सम् । ता ण सुणिस्सम् । (ख)

**शर्विलकः**—मदनिके, किं वसन्तसेना मोक्ष्यति त्वां निष्क्रयेण ।

**वसन्तसेना**—कधं मम संबन्धिणी कधा । ता सुणिस्सं इमिणा गवक्खेण ओवारिदसरीरा । (ग)

**मदनिका**—सव्विलअ, भणिदा मए अज्जआ । तदो भणादि —'जइ मम छन्दो तदा विणा अत्थं सव्वं परिजणं अभुजिस्सं करइस्सम्' । अध सव्विलअ, कुदो दे एत्तिओ विहवो, जेण मं अज्जआसआसादो मोआइस्ससि । (घ)

**शर्विलकः**—

दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च ।
अद्य रात्रौ मया भीरु त्वदर्थे साहसं कृतम् ॥ ५ ॥

**वसन्तसेना**— पसण्णा से आकिदी, साहसकम्मदाए उण उव्वेअणीआ । (ङ)

**मदनिका**—सव्विलअ, इत्थीकल्लवत्तस्स कारणेण उहअं पि संसए विणिक्खित्तम् । (च)

**शर्विलकः**—किं किम् ।

---

(क) अथ किम् । (ख) कथं परमरहस्यम् । तन्न श्रोष्यामि ।

(ग) कथं मम संबन्धिनी कथा । तच्छ्रोष्याम्यनेन गवाक्षेणापवारितशरीरा ।

(घ) शर्विलक, भणिता मयार्या । तदा भणति—'यदि मम छन्दस्तदा विनार्थं सर्वं परिजनमभुजिष्यं करिष्यामि । अथ शर्विलक, कुतस्त एतावान्विभवः, येन मामार्यासकाशान्मोचयिष्यसि ।

(ङ) प्रसन्नास्याकृतिः, साहसकर्मतया पुनरुद्वेजनीया ।

(च) शर्विलक, स्त्रीकल्यवर्तस्य कारणेनोभयमपि संशये विनिक्षिप्तम् ।

---

ष्याम् । स्वाधीनामिति यावत् ॥ मम छन्दो ममाभिलाषः ॥ **दारिद्र्येणेति ।** साहसं चौर्यरूपम् ॥ ५ ॥ साहसे जीवितानपेक्षकर्मणि । ण हु ते इति । न

**मदनिका**—सरीरं चारित्तं च । (क)

**शर्विलकः**—अपण्डिते, साहसे श्रीः प्रतिवसति ।

**मदनिका**—सव्विलअ, अखण्डिदचारित्तो सि । ता ण खु ते मम कारणादो साहसं करन्तेण अच्चन्तविरुद्धं आचरिदम् । (ख)

**शर्विलकः**—

नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां
विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम् ।
धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचि-
त्कार्याकार्यविचारिणी मम मतिश्चौर्येऽपि नित्यं स्थिता ॥६॥

तद्विज्ञाप्यतां वसन्तसेना—

'अयं तव शरीरस्य प्रमाणादिव निर्मितः ।
अप्रकाशो ह्यलंकारो मत्स्नेहाद्धार्यतामिति' ॥ ७ ॥

**मदनिका**—सव्विलअ, अप्पकाशो अलंकारओ । अअं च जणो त्ति दुवेवि ण जुज्जदि । ता उवणेहि दाव । पेक्खामि एदं अलंकारअम् । (ग)

**शर्विलकः**—इदमलंकरणम् । (इति साशङ्कं समर्पयति ।)

**मदनिका**—(निरूप्य ।) दिट्ठपुरुव्वो विअ अअं अलंकारओ । ता भणेहि कुदो दे एसो । (घ)

**शर्विलकः**—मदनिके, किं तवानेन । गृह्यताम् ।

---

(क) शरीरं चारित्रं च ।

(ख) शर्विलक, अखण्डितचारित्रोऽसि । तन्न खलु त्वया मम कारणात्साहसं कुर्वतात्यन्तविरुद्धमाचरितम् ।

(ग) शर्विलक, अप्रकाशोऽलंकारः । अयं च जन इति द्वयमपि न युज्यते । तदुपनय तावत् । पश्याम्येतमलंकारम् ।

(घ) दृष्टपूर्व इवायमलंकारः । तद्भण कुतस्त एषः ।

---

खल्वाचरितम्, अपि त्वाचरितमेव ॥ **नो मुष्णामीति** । शूद्रस्वर्णहरणे न तथा पातकमिति विप्रेत्यादिनोक्तम् ॥ ६ ॥ **अयमिति** । तव वसन्तसेनायाः ॥ अनुचितः प्रकाशो यस्य सोऽप्रकाशः । अनेनास्माकं दण्ड इत्यनेन न प्रकाशयितव्य इत्यर्थः ॥ ७ ॥ अयं जनो [illegible] । अयं

**मदनिका**—(सरोषम्।) जइ मे पच्चअं ण गच्छसि, ता किंणिमित्तं मं णिक्किणसि। (क)

**शर्विलकः**—अयि, प्रभाते मया श्रुतं श्रेष्ठिचत्वरे, यथा—'सार्थवाहस्य चारुदत्तस्य' इति।

(वसन्तसेना मदनिका च मूर्च्छां नाटयतः।)

**शर्विलकः**—मदनिके, समाश्वसिहि। किमिदानीं त्वं

विषादस्रस्तसर्वाङ्गी संभ्रमभ्रान्तलोचना।
नीयमानाभुजिष्यात्वं कम्पसे नानुकम्पसे॥ ८॥

**मदनिका**—(समाश्वस्य।) साहसिअ, ण क्खु तुए मम कारणादो इमं अकज्जं करन्तेण तस्सिं गेहे कोवि वावादिदो परिक्खदो वा। (ख)

**शर्विलकः**—मदनिके, भीते सुप्ते न शर्विलकः प्रहरति। तन्मया न कश्चिद्व्यापादितो नापि परिक्षतः।

**मदनिका**—सच्चम्। (ग)

**शर्विलकः**—सत्यम्।

**वसन्तसेना**—(संज्ञां लब्ध्वा।) अम्महे, पच्चुवजीविद म्हि। (घ)

**मदनिका**—पिअम्। (ङ)

**शर्विलकः**—(सेर्ष्यम्।) मदनिके, किं नाम प्रियमिति।

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं
सद्वृत्तपूर्वपुरुषेऽपि कुले प्रसूतः।
रक्षामि मन्मथविपन्नगुणोऽपि मानं
मित्रं च मां व्यपदिशस्यपरं च यासि॥ ९॥

(साकूतम्।)

---

(क) यदि मे प्रत्ययं न गच्छसि, तत्किंनिमित्तं मां निष्क्रीणासि।
(ख) साहसिक, न खलु त्वया मम कारणादिदमकार्यं कुर्वता तस्मिन्गेहे कोऽपि व्यापादितः परिक्षतो वा। (ग) सत्यम्।
(घ) आश्चर्यम्, प्रत्युपजीवितास्मि। (ङ) प्रियम्।

---

जनः शर्विलकः' इति प्राचीनटीका। तन्न बुध्यते। वेश्यात्वे वसन्तसेनाया निभृतं संगतमित्यभिप्रायः॥ **विषादेति**॥ ८॥ **त्वदिति**। मन्मथेन विपन्नो गुणो यस्य। ईदृशोऽपि देहं रक्षामि। मदनिकार्थचौर्याहरणेन हीनगुणत्वं

इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः ।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥ १० ॥
अयं च सुरतज्वालः कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ ११ ॥

**वसन्तसेना**—(सस्मितम् ।) अहो, से अत्थाणे आवेओ । (क)

**शर्विलकः**—सर्वथा

अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति ।
श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्यापरिसर्पणानि ॥१२॥
स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति ।
रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥ १३ ॥

सुष्ठु खल्विदमुच्यते—

एता हसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति पुरुषं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानसुमना इव वर्जनीयाः ॥ १४ ॥

अपि च ।

समुद्रवीचीव चलस्वभावाः संध्याभ्रलेखेव मुहूर्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति ॥१५॥

स्त्रियो नाम चपलाः

अन्यं मनुष्यं हृदयेन कृत्वा अन्यं ततो दृष्टिभिराह्वयन्ति ।
अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥ १६ ॥

सूक्तं खलु कस्यापि—

न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति ।
यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः १७

(क) अहो, अस्यास्थान आवेगः ।

व्यक्तम् ॥ ९ ॥ इहेति ॥ १० ॥ अयमिति ॥ ११ ॥ अपण्डिता इति ॥ १२ ॥ स्त्रीष्विति ॥ १३ ॥ एता इति । सुमनसः पुष्पवृत्तेरेकवचनान्ततापि । यथा—'अग्रल्याख्येये दधिसुमनसी' इति । 'सुमना मालती' इत्येके । वचनभेदेऽपि सतामनुद्वेजकत्वाददुष्टत्वमुपमायाः ॥ १४ ॥ समु-

आः दुरात्मन् चारुदत्तहतक, अयं न भवसि। (इति कतिचित्पदानि गच्छति।)

**मदनिका**—(अञ्चले गृहीत्वा।) अइ असंबद्धभासअ, असंभावणीए कुप्पसि। (क)

**शर्विलकः**—कथमसंभावनीयं नाम।

**मदनिका**—एसो क्खु अलंकारओ अज्जआकेरओ। (ख)

**शर्विलकः**—ततः किम्।

**मदनिका**—स च तस्स अज्जस्स हत्थे विणिक्खित्तो। (ग)

**शर्विलकः**—किमर्थम्।

**मदनिका**—(कर्णे) एव्वं विअ। (घ)

**शर्विलकः**—(सवैलक्ष्यम्।) भोः, कष्टम्।

छायार्थं ग्रीष्मसंतप्तो यामेवाहं समाश्रितः।
अजानता मया सैव पत्रैः शाखा वियोजिता॥ १८॥

**वसन्तसेना**—कधं एसो वि संतप्पदि ज्जेव। ता अजाणन्तेण एदिणा एव्वं अणुचिट्ठिदम्। (ङ)

**शर्विलकः**—मदनिके, किमिदानीं युक्तम्।

**मदनिका**—इत्थं तुमं ज्जेव पण्डिओ। (च)

**शर्विलकः**—नैवम्। पश्य।

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः।
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते॥ १९॥

**मदनिका**—सव्विलअ, जइ मम वअणं सुणीअदि, ता तस्स ज्जेव महाणुभावस्स पडिणिज्जादेहि। (छ)

---

(क) अयि असंबद्धभाषक, असंभावनीये कुप्यसि।

(ख) एष खल्वलंकार आर्यासंबन्धी।

(ग) स च तस्यार्यस्य हस्ते विनिक्षिप्तः। (घ) एवमिव।

(ङ) कथमेषोऽपि संतप्यत एव। तदजानतैतेनैवमनुष्ठितम्।

(च) अत्र त्वमेव पण्डितः।

(छ) शर्विलक, यदि मम वचनं श्रूयते, तदा तस्यैव महानुभावस्य प्रतिनिर्यातय।

---

द्रेति॥ १५॥ अन्यमिति॥ १६॥ नेति॥ १७॥ छायार्थमिति

**शर्विलकः**—मदनिके, यद्यसौ राजकुले मां कथयति ।

**मदनिका**—ण चन्दादो आदवो होदि । (क)

**वसन्तसेना**—साहु मदणिए, साहु । (ख)

**शर्विलकः**—मदनिके,

न खलु मम विषादः साहसेऽस्मिन्भयं वा
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम् ।
जनयति मम खेदं कुत्सितं कर्म लज्जां
नृपतिरिह शठानां मादृशां किं नु कुर्यात् ॥ २० ॥

तथापि नीतिविरुद्धमेतत् । अन्य उपायश्चिन्त्यताम् ।

**मदनिका**—सो अअं अवरो उवाओ । (ग)

**वसन्तसेना**—को क्खु अवरो उवाओ हुविस्सदि । (घ)

**मदनिका**—तस्स ज्जेव अज्जस्स केरओ भविअ एदं अलंकारअं अज्जआए उवणेहि । (ङ)

**शर्विलकः**—एवं कृते किं भवति ।

**मदनिका**—तुमं दाव अचोरो, सो वि अज्जो अरिणो, अज्जआए सकं अलंकारअं उवगदं भोदि । (च)

**शर्विलकः**—नन्वतिसाहसमेतत् ।

**मदनिका**—अइ, उवणेहि । अण्णधा अदिसाहसम् । (छ)

**वसन्तसेना**—साहु मदणिए, साहु । अभुजिस्सए विअ मन्तिदम् । (ज)

---

(क) न चन्द्रादातपो भवति । (ख) साधु मदनिके, साधु ।
(ग) सोऽयमपर उपायः । (घ) कः खल्वपर उपायो भविष्यति ।
(ङ) तस्यैवार्यस्य संबन्धी भूत्वेममलंकारकमार्याया उपनय ।
(च) त्वं तावदचौरः, सोऽप्यार्योऽनृणः आर्यया स्वकोऽलंकार उपगतो भवति । (छ) अयि, उपनय । अन्यथातिसाहसम् ।
(ज) साधु मदनिके, साधु । अभुजिष्ययेव मन्त्रितम् ।

---

॥ १८ ॥ **स्त्रिय इति** ॥ १९ ॥ **न खल्विति** ॥ २० ॥ अथ निजपतित्वेनैवमाह—तुमं जेवेति । इदानीं ब्राह्मणभार्यात्वेनेति भावः । म

शर्विलकः—

मयाप्ता महती बुद्धिर्भवतीमनुगच्छता ।
निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ॥ २१ ॥

**मदनिका**—तेण हि तुमं इमस्सिं कामदेवगेहे मुहुत्तअं चिट्ठ, जाव अज्जआए तुह आगमणं णिवेदेमि । (क)

**शर्विलकः**—एवं भवतु ।

**मदनिका**—(उपसृत्य ।) अज्जए, एसो क्खु चारुदत्तस्स सआसादो वम्हणो आअदो । (ख)

**वसन्तसेना**—हञ्जे, तस्स केरअं त्ति कधं तुमं जाणासि । (ग)

**मदनिका**—अज्जए, अत्तणकेरअं वि ण जाणामि । (घ)

**वसन्तसेना**—(स्वगतं सशिरःकम्पं विहस्य ।) जुज्जदि । (प्रकाशम् ।) पविसदु । (ङ)

**मदनिका**—जं अज्जआ आणवेदि । (उपगम्य ।) पविसदु सव्विलओ । (च)

**शर्विलकः**—(उपसृत्य सवैलक्ष्यम् ।) स्वस्ति भवत्यै ।

**वसन्तसेना**—अज्ज, वन्दामि । उवविसदु अज्जो । (छ)

**शर्विलकः**—सार्थवाहस्त्वां विज्ञापयति—'जर्जरत्वाद्गृहस्य दूरक्ष्यमिदं भाण्डम् । तद्गृह्यताम्' । (इति मदनिकायाः समर्प्य प्रस्थितः ।)

---

(क) तेन हि त्वमस्मिन्कामदेवगेहे मुहूर्तकं तिष्ठ, यावदार्यायै तवागमनं निवेदयामि ।

(ख) आर्ये, एष खलु चारुदत्तस्य सकाशाद्ब्राह्मण आगतः ।

(ग) चेटि, तस्य संबन्धीति कथं त्वं जानासि ।

(घ) आर्ये, आत्मसंबन्धिनमपि न जानामि ।

(ङ) युज्यते । प्रविशतु ।

(च) यदार्याज्ञापयति । प्रविशतु शर्विलकः ।

(छ) आर्य, वन्दे । उपाविशत्वार्यः ।

---

येति ॥ २१ ॥ अत्तणकेरअं वीति चारुदत्तस्यानुचरत्वं स्वीकृत्य ब्रूते ।

**वसन्तसेना**—अज्ज, ममावि दाव पडिसंदेसं तहिं अज्जो णेदु । (क)

**शर्विलकः**—(स्वगतम् ।) कस्तत्र यास्यति । (प्रकाशम् ।) कः प्रतिसंदेशः ।

**वसन्तसेना**—पडिच्छदु अज्जो मदणिअम् । (ख)

**शर्विलकः**—भवति, न खल्ववगच्छामि ।

**वसन्तसेना**—अहं अवगच्छामि । (ग)

**शर्विलकः**—कथमिव ।

**वसन्तसेना**—अहं अज्जचारुदत्तेण भणिदा—'जो इमं अलंकारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा' । ता सो ज्जेव एदं दे देदित्ति एव्वं अज्जेण अवगच्छिदव्वम् । (घ)

**शर्विलकः**—(स्वगतम् ।) अये, विज्ञातोऽहमनया । (प्रकाशम् ।) साधु आर्यचारुदत्त, साधु ।

गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा ।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ २२ ॥

wealth without virtue

अपि च ।

गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ २३ ॥

moon

**वसन्तसेना**—को एत्थ पवहणिओ । (ङ)

(प्रविश्य सप्रवहणः)

**चेटः**—अज्जए, सज्जं पवहणम् । (च)

---

(क) आर्य, ममापि तावत्प्रतिसंदेशं तत्रार्यो नयतु ।

(ख) प्रतीच्छत्वार्यो मदनिकाम् । (ग) अहमवगच्छामि ।

(घ) अहमार्यचारुदत्तेन भणिता—'य इममलंकारकं समर्पयिष्यति, तस्य त्वया मदनिका दातव्या । तत्स एवैतां ते ददातीत्येवमार्येणावगन्तव्यम् । (ङ) कोऽत्र प्रवहणिकः ।

(च) आर्ये, सज्जं प्रवहणम् ।

---

गुणेष्वेवेति ॥ २२ ॥ गुणेष्विति ॥ २३ ॥

**वसन्तसेना**—हञ्जे मअणिए, सुदिट्टं मं करेहि । दिण्णासि । आरुह पवहणम् । सुमरेसि मम् । (क)

**मदनिका**—(रुदती ।) परिच्चत्तम्हि अज्जआए । (ख) इति पादयोः पतति ।)

**वसन्तसेना**—संपदं तुमं ज्जेव वन्दणीआ संवुत्ता । ता गच्छ । आरुह पवहणम् । सुमरेसि मम् । (ग)

**शर्विलकः**—स्वस्ति भवत्यै । मदनिके,

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः ।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम् ॥ २४ ॥

(इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः ।)

(नेपथ्ये ।)

कः कोऽत्र भोः । राष्ट्रियः समाज्ञापयति—'एष खल्वार्यको गोपालदारको राजा भविष्यतीति सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे वन्धनागारे बद्धः । ततः स्वेषु स्वेषु स्थानेष्वप्रमत्तैर्भवद्भिर्भवितव्यम्' ।

**शर्विलकः**—(आकर्ण्य ।) कथं राज्ञा पालकेन प्रियसुहृदार्यको मे बद्धः । कलत्रवांश्चास्मि संवृत्तः । आः, कष्टम् । अथवा

द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च ।
संप्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः ॥ २५ ॥

भवतु । अवतरामि । (इत्यवतरति ।)

**मदनिका**—(सास्रमञ्जलिं बद्ध्वा ।) एव्वं णेदम् । ता परं णेदु मं अज्जउत्तो समीवं गुरुअणाणम् । (घ)

---

(क) चेटि मदनिके, सुदृष्टां मां कुरु । दत्तासि । आरोह प्रवहणम् । स्मरसि माम् । (ख) परित्यक्तास्म्यार्यया ।

(ग) सांप्रतं त्वमेव वन्दनीया संवृत्ता । तद्गच्छ । आरोह प्रवहणम् । स्मरसि माम् ।

(घ) एवं नेदम् । तत्परं नयतु मामार्यपुत्रः समीपं गुरुजनानाम् ।

---

**सुदृष्ट इति** । यत्र ते इति । हेतावाधारविवक्षया 'यत्र' इति सप्तमी । कर्तुः शेषत्वविवक्षया 'ते' इति षष्ठी ॥ २४ ॥ **द्वयमिति** ॥ २५ ॥ उदवसितं गृहम् ॥

**शर्विलकः**—साधु प्रिये, साधु । असच्चित्तसदृशमभिहितम् । (चेटमुद्दिश्य ।) भद्र, जानीषे रेभिलस्य सार्थवाहस्योदवसितम् ।

**चेटः**—अध इं । (क)

**शर्विलकः**—तत्र प्रापय प्रियाम् ।

**चेटः**—जं अज्जो आणवेदि । (ख)

**मदनिका**—जधा अज्जउत्तो भणादि, अप्पमत्तेण दाव अज्जउत्तेण होदव्वम् । (ग) (इति निष्क्रान्ता ।)

**शर्विलकः**—अहमिदानीं

ज्ञातीन्विटान्स्वभुजविक्रमलब्धवर्णा-
न्राजापमानकुपितांश्च नरेन्द्रभृत्यान् ।
उत्तेजयामि सुहृदः परिमोक्षणाय
यौगन्धरायण इवोदयनस्य राज्ञः ॥ २६ ॥

अपि च ।

प्रियसुहृदमकारणे गृहीतं
रिपुभिरसाधुभिराहितात्मशङ्कैः ।
सरभसमभिपत्य मोचयामि
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥ २७ ॥

(इति निष्क्रान्तः ।)

(प्रविश्य ।)

**चेटी**—अज्जए, दिट्ठिआ वड्ढसि । अज्जचारुदत्तस्स सआसादो बम्हणो आअदो । (घ)

**वसन्तसेना**—अहो, रमणीअदा अज्ज दिवसस्स । ता हञ्जे, सादरं बन्धुलेण समं पवेसेहि णम् । (ङ)

---

(क) अथ किम् । (ख) यदार्य आज्ञापयति ।
(ग) यथार्यपुत्रो भणति, अप्रमत्तेन तावदार्यपुत्रेण भवितव्यम् ।
(घ) आर्ये, दिष्ट्या वर्धसे । आर्यचारुदत्तस्य सकाशाद्ब्राह्मण आगतः ।
(ङ) अहो, रमणीयताद्य दिवसस्य । तच्चेटि, सादरं बन्धुलेन समं प्रवेशयैनम् ।

---

ज्ञातीनिति ॥ २६ ॥ प्रियेति ॥ २७ ॥ बन्धुलेन ।

**चेटी**—जं अज्जआ आणवेदि । (क) (इति निष्क्रान्ता ।)

(विदूषको बन्धुलेन सह प्रविशति ।)

**विदूषकः**—ही ही भोः, तवच्चरणकिलेसविणिज्जिदेण रक्खसराआ रावणो पुप्फकेण विमाणेण गच्छदि । अहं उण बम्हणो अकिदतवच्चरणकिलेसो वि णरणारीजणेण गच्छामि । (ख)

**चेटी**—पेक्खदु अज्जो अम्हकेरकं गेहदुआरम् । (ग)

**विदूषकः**—(अवलोक्य सविस्मयम् ।) अहो सलिलसित्तमज्जिदकिदहरिदोवलेवणस्स विविहसुअन्धिकुसुमोवहारचित्तलिहिदभूमिभाअस्स गअणतलाअलोअणकोदूहलदूरुण्णामिदसीसस्स दोलाअमाणावलम्बिदैरावणहत्थब्भमाइदमल्लिआदामगुणालंकिदस्स समुच्छिददन्तिदन्ततोरणावभासिदस्स महारअणोवराओवसोहिणा पवणबलन्दोलणाललन्तचञ्चलग्गहत्थेण 'इदो एहि' त्ति बाहरन्तेण विअ मं सोहग्गपडाआणिवहेणोवसोहिदस्स तोरणधरणत्थम्भवेदिआणिक्खित्तसमुल्लसन्तहरिदचूदपल्लवललामफटिहमङ्गलकलसाभिरामोहअपास्सस्स महासुरवक्खत्थलदुब्भेज्जवज्जणिरन्तरपडिबद्धकणअकवाडस्स

(क) यदार्याज्ञापयति ।

(ख) आश्चर्यं भोः, तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति । अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि । (ग) प्रेक्षतामार्योऽस्मदीयं गेहद्वारम् ।

अत्रैवाङ्के पञ्चमप्रकोष्ठके 'परगृहललिताः' (४।२८) इत्यादि बन्धुललक्षणं करिष्यते । ही ही भो इति विस्मये । तपश्चरणक्लेशविनिर्जितेन स्वाधीनेन । पुष्पकेण विमानविशेषेण । अकृततपश्चरणक्लेशः । नरयुक्ता नारी नरनारी सोद्वाहिका यस्य । पुष्पकमपि सा नरनारी सीतारूपा उद्वाहनीया यस्येदृशम् । शब्दच्छलेन साम्यम् ॥ अहो वसन्तसेनाभवनद्वारस्य सश्रीकता । किंभूतस्य । सलिलसिक्तमार्जितकृतहरितोपलेपनस्य । कृतगोमयोपलेपनस्येत्यर्थात् । तथा विविधसुगन्धिसुकुमोपहारचित्रलिखितभूमिभागस्य । गगनतलावलोकनकौतूहलदूरोन्नामितशीर्षस्य । उच्छ्रायप्रकर्षपरमेतत् । दोलायमानावलम्बितैरावणहस्तभ्रमागतमल्लीदामगुणालंकृतस्य । समुच्छ्रितदन्तिदन्ततोरणावभासितस्य । महारत्नोपरागोपशोभिना पवनबलान्दोलनाललच्चञ्चलाग्रहस्तेन इत एहीति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य । तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य । महासुरवक्षस्तटदुर्भे-

दुग्गदजणमणोरहाआसकरस्स वसन्तसेणाभवणदुआरस्स सस्सिरीअदा। जं सच्चं मज्झत्थस्स वि जणस्स बलादिट्ठिं आआरेदि। (क)

**चेटी**—एदु एदु। इमं पढमं पओट्टं पविसदु अज्जो। (ख)

**विदूषकः**—(प्रविश्यावलोक्य च।) ही ही भोः, इधो वि पढमे पओट्ठे ससिसङ्खमुणालसच्छाहाओ विणिहिदचुण्णमुट्ठिपाण्डुराओ विविहरअणपडिबद्धकञ्चणसोबाणसोहिदाओ पासादपन्तिओ ओलम्बिदमुत्तादामेहिं फटिहवादाअणमुहचन्देहिं णिज्झाअन्ती विअ उज्जइणिम्। सोत्तिओ विअ सुहोवविट्ठो णिद्दाअदि दोवारिओ। सदहिणा कलमोदणेण पलोहिदा ण भक्खन्ति वायसा बलिं सुधासवण्णदाए। आदियदु भोदी। (ग)

---

(क) अहो सलिलसिक्तमार्जितकृतहरितोपलेपनस्य विविधसुगन्धिकुसुमोपहारचित्रलिखितभूमिभागस्य गगनतलावलोकनकौतूहलदूरोन्नामितशीर्षस्य दोलायमानावलम्बितैरावणहस्तभ्रमागतमल्लिकादामगुणालंकृतस्य समुच्छितदन्तिदन्ततोरणावभासितस्य महारत्नोपरागोपशोभिना पवनबलान्दोलनाललच्चलाग्रहस्तेन 'इत एहि' इति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य महासुरवक्षःस्थलदुर्भेद्यवज्रनिरन्तरप्रतिबद्धकनककपाटस्य दुर्गतजनमनोरथायासकरस्य वसन्तसेनाभवनद्वारस्य सश्रीकता। यत्सत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति।

(ख) एत्वेतु। इमं प्रथमं प्रकोष्ठं प्रविशत्वार्यः।

(ग) आश्चर्यं भोः, अत्रापि प्रथमे प्रकोष्ठे शशिशङ्खमृणालसच्छाया विनिहितचूर्णमुष्टिपाण्डुरा विविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिताः प्रासादपङ्क्त्योऽवलम्बितमुक्तादामभिः स्फटिकवातायनमुखचन्द्रैर्निर्ध्यायन्तीवोज्जयिनीम्। श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः। सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया। आदिशतु भवती।

---

द्यवज्ररत्ननिरन्तरप्रतिबद्धकनककपाटस्य। दुर्गतजनमनोरथायासकरस्य। यत्सत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयत्याह्वयति॥ प्रथम[प्र]कोष्ठवर्णनम्—शशिशङ्खमृणालस्वच्छाभाः विनिहतचूर्णमुष्टिपाण्डुराः विविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिताः प्रासादपङ्क्तयः अवलम्बितमुक्ताफलदामभिः स्फटिकवातायनमुखचन्द्रैर्निर्ध्यायन्तीवोज्जयिनीम्। श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः। सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा

**चेटी**—एदु एदु अज्जो । इमं दुदिअं पओट्ठं पविसदु अज्जो ।(क)

**विदूषकः**—(प्रविश्यावलोक्य च ।) ही ही भोः, इधो वि दुदिए पओट्ठे पज्जन्तोवणीदजवसबुसकवलसुपुट्ठा तेलब्भङ्गिदविसाणा बद्धा पवहणबइल्ला । अअं अण्णदरो अवमाणिदो विअ कुलीणो दीहं णीससदि सेरिहो । इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स । इदो इदो अवराणं अस्साणं केसकप्पणा करीअदि । अअं अवरो पाडच्चरो विअ दिढबद्धो मन्दुराए साहामिओ । (अन्यतोऽवलोक्य च ।) इदो अ कूरच्चुअतेल्लमिस्सं पिण्डं हत्थी पडिच्छावीअदि मेत्थपुरिसेहिं । आदिसदु भोदी । (ख)

**चेटी**—एदु एदु अज्जो । इमं तइअं पओट्ठं पविसदु अज्जो । (ग)

**विदूषकः**—(प्रविश्य दृष्ट्वा च ।) ही ही भो, इधो वि तइए पओट्ठे इमाइं दाव कुलउत्तजणोववेसणणिमित्तं विरचिदाइं आसणाइं । अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ । एसो अ सा-

---

(क) एत्वेत्वार्यः । इमं द्वितीयं प्रकोष्ठं प्रविशत्वार्यः ।

(ख) आश्चर्यं भोः, इहापि द्वितीये प्रकोष्ठे पर्यन्तोपनीतयवसबुसकवलसुपुष्टास्तैलाभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्दाः । अयमन्यतरोऽवमानित इव कुलीनो दीर्घं निःश्वसिति सैरिभः । इतश्चापनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य । इत इतोऽपरेषामश्वानां केशकल्पना क्रियते । अयमपरः पाटच्चर इव दृढबद्धो मन्दुरायां शाखामृगः । इतश्च कूरच्युततैलमिश्रं पिण्डं हस्ती प्रतिग्राह्यते मात्रपुरुषैः । आदिशतु भवती ।

(ग) एत्वेत्वार्यः । इमं तृतीयं प्रकोष्ठं प्रविशत्वार्यः ।

---

बलिं सुधासवर्णतया ॥ इहापि द्वितीयप्रकोष्ठके पर्यन्तोपनीतयवसबुसकवलसुपुष्टास्तैलाभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्दाः । अयमपरोऽपमानित इव कुलीनो दीर्घं निःश्वसिति सैरिभो महिषः । इतोऽपनीतयुद्धस्य मल्लस्येव मृद्यते ग्रीवा मेषस्य । इतोऽपरेषामश्वानां क्के(के)शकल्पना क्रियते । अयमपरः पाटच्चर इव चौर इव दृढबद्धो मन्दुरायां शाखामृगः । इतोऽपि भक्ततैलघृतमिश्रपिण्डं ग्राह्यते हस्ती हस्तिपकपुरुषैः ॥ [इहापि] तृतीये प्रकोष्ठे इमानि तावत्कुलपुत्रजनोपवेशननिमित्तं विरचितान्यासनानि । अर्धपठितस्तिष्ठति पुस्तकः ।

हीणमणिमअसारिआसहिदो पासअपीठो । इमे अ अवरे मअणसंधिविग्गहचदुरा विविहवण्णिआविलित्तचित्तफलअग्गहत्था इदो तदो परिब्भमंति गणिआ वुड्ढविडा अ । आदिसदु भोदी । (क)

चेटी—एदु एदु अज्जो । इमं चउट्ठं पओट्ठं पविसदु अज्जो । (ख)

विदूषकः—(प्रविश्यावलोक्य च ।) ही ही भो, इधो वि चउट्ठे पओट्ठे जुवदिकरताडिदा जलधरा विअ गम्भीरं णदन्ति मुदङ्गा, हीणपुण्णाओ विअ गअणादो तारआओ णिवडन्ति कंसतालआ, महुअरविरुअं विअ महुरं वज्जदि वंसो । इअं अवरा ईसाप्पणअकुविदकामिणी विअ अङ्कारोविदा कररुहपरामरिसेण सारिज्जदि वीणा । इमाओ अवराओ कुसुमरसमत्ताओ विअ महुअरिओ अदिमहुरं पगीदाओ गणिआदारिआओ णच्चीअन्ति, णट्टअं पठीअन्ति, ससिङ्गारओ । ओवग्गिदा गवक्खेसु वादं गेण्हन्ति सलिलगग्गरीओ । आदिसदु भोदी । (ग)

---

(क) आश्चर्यं भोः, इहापि तृतीये प्रकोष्ठे इमानि तावत्कुलपुत्रजनोपवेशननिमित्तं विरचितान्यासनानि । अर्धवाचितं पाशकपीठे तिष्ठति पुस्तकम् । एतच्च स्वाधीनमणिमयसारिकासहितं पाशकपीठम् । इमे चापरे मदनसंधिविग्रहचतुरा विविधवर्णिकाविलिप्तचित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाश्च । आदिशतु भवती ।

(ख) एत्वेत्वार्यः । इमं चतुर्थं प्रकोष्ठं प्रविशत्वार्यः ।

(ग) आश्चर्यं भोः, इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीरं नदन्ति मृदङ्गाः, क्षीणपुण्या इव गगनात्तारका निपतन्ति कांस्य-

---

कामशास्त्रस्येत्यर्थात् । स्वाधीनमणिमयसारीसहितं पाशकपीठम् । 'सारितम्' इति पाठे प्रसारितमित्यर्थः । 'स्वाधीनमकृत्रिमम्' इति प्राचीनटीका । इमे चापरे मदनसंधिविग्रहचतुरा विविधवर्णिकावलिप्तं चित्रफलकं वहमाना इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाः ॥ इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीरं धीरं नदन्ति मुरजाः । क्षीणपुण्या इव गगनात्तारा इव निपतन्ति कांस्यतालाः । वैदग्ध्यवादनादेव निपातः । मधुकराभिरुतमिव मधुरं वाद्यते वंशः । इयमपरा प्रणयकुपिता कामिनीवाङ्कारोपिता कररुहपरामर्शेन सार्यते वीणा । इमा अपराः कुसुमरसमत्ता इव मधुकर्योऽतिमधुरं प्रगीताः । गणिकादारिका वेश्याविशेषा इति गुणपताकायामुक्तम् । [illegible]

चेटी—एदु एदु अज्जो। इमं पञ्चमं पओट्ठं पविसदु अज्जो। (क)

विदूषकः—(प्रविश्य दृष्ट्वा च।) ही ही भो, इधो वि पञ्चमे पओट्ठे अअं दलिद्दजणलोहुप्पादणअरो आहरइ उवचिदो हिङ्गुतेल्लगन्धो। विविहसुरहिधूमुग्गरेहिं णिच्चं संताविज्जमाणं णीससदि विअ महाणसं दुवारमुहेहिं। अधिअं उसुसावेदि मं साहिज्जमाणबहुविहभक्खभोअणगन्धो। अअं अवरो पडच्चरं विअ पोट्टिं धोअदि रूपिदारओ। बहुविहाहारविआरं उवसाहेदि सूवआरो। बज्झन्ति मोदआ, पच्चन्ति अपूवआ। (आत्मगतम्।) अवि दाणिं इह वड्ढिअं भुञ्जसु त्ति पादोदअं लहिस्सम्। (अन्यतोऽवलोक्य च।) इदो गन्धव्वच्छरगणेहिं विअ विविहालंकारसोहिदेहिं गणिआजणेहिं बन्धुलेहिं अ जं सच्चं सग्गीअदि एदं गेहम्। भो, के तुम्हे बन्धुला णाम। (ख)

---

तालाः, मधुकरविरुतमिव मधुरं वाद्यते वंशः। इयमपरेर्ष्याप्रणयकुपितकामिनीवाङ्कारोपिता कररुहपरामर्शेन सार्यते वीणा। इमा अपराः कुसुमरसमत्ता इव मधुकर्योऽतिमधुरं प्रगीता गणिकादारिका नर्त्यन्ते, नाट्यं पाठ्यन्ते सशृङ्गारः (रम्)। अपवलिगता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः। आदिशतु भवती।

(क) एत्वेत्वार्यः। इमं पञ्चमं प्रकोष्ठं प्रविशत्वार्यः।

(ख) आश्चर्यं भोः, इहापि पञ्चमे प्रकोष्ठेऽयं दरिद्रजनलोभोत्पादनकर

---

(रम्)। अवलम्बिता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः। एतच्च जनानां पानार्थम्॥ इहापि पञ्चमप्रकोष्ठे अयमपि दरिद्रजनलोभोत्पादनकरो हिङ्गुतैलगन्ध आ समन्ताद्धरति। विविधसुरभिधूमोद्गारैर्नित्यं संताप्यमानं निःश्वसितीव महानसं द्वारमुखैः। अधिकं रोमाञ्चयति सं(मां) साध्यमानबहुविधभक्ष्यभोजनगन्धः। भोजनं करणे ल्युटि व्यञ्जनादिवचनः। अयमपरः पटच्चरमिव जीर्णवस्त्रमिव। छेयपट्टमनेकाधारशोणिताभ्यामुपहतत्वात्। रूपिदारओ। रूपशब्दः पशुवचनस्तद्योगाद्रूपी खट्टिकस्तस्य दारकः पुत्रः। यद्वा। रूपी रूपसंघस्तस्य दारकश्छेदकः। खट्टिक एव। यत्र मांसं छिद्यते तं पदं धावति प्रक्षालयति। बहुविधाहारविकारसुपसाधयति सूपकारः। बध्यन्ते मोदकाः। पच्यन्तेऽपूपकाः। अपीदानीमहं भोक्तुं पादोदकं लप्स्ये। 'वर्धितम्' इति पाठे 'व्यञ्जनादिसामग्र्योपचितं वर्धितकम्' इति पूर्वटीका। इतश्च गन्धर्वाप्सरोगणैरिव विविधालंकारशोभितैर्गणिकाजनैर्बन्धुलैश्च

**बन्धुलाः**—वयं खलु

परगृहललिताः परान्नपुष्टाः परपुरुषैर्जनिताः पराङ्गनासु ।

परधननिरता गुणेष्ववाच्या गजकलभा इव बन्धुला ललामः ॥ २८॥

**विदूषकः**—आदिसदु भोदी । (क)

**चेटी**—एदु एदु अज्जो । इमं छट्ठं पओट्ठं पविसदु अज्जो । (ख)

**विदूषकः**—(प्रविश्यावलोक्य च ।) ही ही भो, इधो वि छट्ठे पओट्ठे अमुं दाव सुवण्णरअणाणं कम्मतोरणाइं णीलरअणविणिक्खित्ताइं इन्दाउहट्ठाणं विअ दरिसअन्ति । वेदुरिअमोत्तिअपवालअपुप्फराअइन्दणीलकक्केतरअपद्मराअमरगअपहुदिआइं रअणविसेसाइं अण्णोण्णं विचारेन्ति सिप्पिणो । बज्झन्ति जादरूवेहिं माणिक्काइं । घडिज्जन्ति सुवण्णालंकारा । रत्तसुत्तेण गत्थीअन्ति मोत्तिआभरणाइं । घसीअन्ति धीरं वेदुरिआइं । छेदीअन्ति सङ्खआ । साणि-

---

आहरत्युपचितो हिङ्गुतैलगन्धः । विविधसुरभिधूमोद्गारैर्नित्यं संताप्यमानं निःश्वसितीव महानसं द्वारमुखैः । अधिकमुत्सुकायते मां साध्यमानबहुविधभक्ष्यभोजनगन्धः । अयमपरः पटच्चरमिव हतपशूदरपेशिं धावति रूपिदारकः । बहुविधाहारविकारमुपसाधयति सूपकारः । बध्यन्ते मोदकाः, पच्यन्तेऽपूपकाः । अपीदानीमिह वर्धितं भुङ्क्ष्व इति पादोदकं लप्स्ये । इह गन्धर्वाप्सरोगणैरिव विविधालंकारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायत इदं गेहम् । भोः, के यूयं बन्धुला नाम ।

(क) आदिशतु भवती ।

(ख) एत्वेत्वार्यः । इमं षष्ठं प्रकोष्ठं प्रविशत्वार्यः ।

---

यत्सत्यं स्वर्गायत इदं गृहम् ॥ **परगृहेति** । गुणेष्ववाच्याः । अनभिधानीयगुणा इत्यर्थः । 'ऋणेषु' इति पाठे ऋणेष्ववाच्या ऋणमेवावसीय सर्वैरभिमुह्यामह इत्यर्थः । ललामो विलसामः । 'लल विलासे' भौवादिकः । अनुप्रासानुरोधेनानयोरैक्यम् । 'ललामाः' इति पाठे श्रेष्ठा इत्यर्थः ॥ २८ ॥ इहापि षष्ठे प्रकोष्ठे अयं तावत्सुवर्णरत्नानां कर्मतोरणानि नीले रत्ने वस्तुविशेषे निक्षिप्तानि प्रसारितानीन्द्रायुधस्थानकमिव दर्शयन्ति । नीलरत्नेष्वा(?)रोपितानीन्द्रायुधमिव दृश्यन्त इत्याशयः । वैडूर्यमौक्तिकप्रवालकपुष्परागनीलककर्केतरपद्मराग[मरकत]-प्रभृतीन्रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः । प्रवालककर्केतरौ मणिविशेषौ । बध्यन्ते जातरूपैः सुवर्णैर्माणिक्यानि । घट्यन्ते सुवर्णालंकाराः । लोहितसूत्रैर्ग्रथ्यन्ते मौक्तिकाभरणानि । ...

ज्जन्ति पवालआ । सुक्खविअन्ति ओल्लविदकुङ्कुमपत्थरा । सालीअदि सल्लज्जअम् । विस्साणीअदि चन्दणरसो । संजोईअन्ति गन्धजुत्तीओ । दीअदि गणिआकामुकाणां सकप्पूरं ताम्बोलम् । अवलोईअदि सकडक्खअम् । पअट्टदि हासो । पिबीअदि अ अणवरअं ससिक्कारं मइरा । इमे चेडा, इमा चेडिआओ, इमे अवरे अवधीरिदपुत्तदारवित्ता मणुस्सा आसवकरआपीदमदिरेहिं गणिआजणेहिं जे मुक्का ते पिअन्ति । आदिसदु भोदी । (क)

**चेटी**—एदु एदु अज्जो । इमं सत्तमं पओट्ठं पविसदु अज्जो । (ख)

---

(क) आश्चर्यं भोः, इहापि षष्ठे प्रकोष्ठेऽमूनि तावत्सुवर्णरत्नानां कर्मतोरणानि नीलरत्नविनिक्षिप्तानीन्द्रायुधस्थानमिव दर्शयन्ति । वैदूर्यमौक्तिकप्रवालकपुष्परागेन्द्रनीलकर्केतरकपद्मरागमरकतप्रभृतीन्रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः । बध्यन्ते जातरूपैर्माणिक्यानि । घट्यन्ते सुवर्णालंकाराः । रक्तसूत्रेण ग्रथ्यन्ते मौक्तिकाभरणानि । घृष्यन्ते धीरं वैदूर्याणि । छिद्यन्ते शङ्खाः । शाणैर्घृष्यन्ते प्रवालकाः । शोष्यन्त आर्द्रकुङ्कुमप्रस्तराः । सार्यते कस्तूरिका । विशेषेण घृष्यते चन्दनरसः । संयोज्यन्ते गन्धयुक्तयः । दीयते गणिकाकामुकयोः सकर्पूरं ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रवर्तते हासः । पीयते चानवरतं ससीत्कारं मदिरा । इमे चेटाः, इमाश्चेटिकाः, इमे अपरेऽवधीरितपुत्रदारवित्ता मनुष्या आसवकरकापीतमदिरैर्गणिकाजनैर्ये मुक्तास्ते पिबन्ति । आदिशतु भवती ।

(ख) एत्वेत्वार्यः । इमं सप्तमं प्रकोष्ठं प्रविशत्वार्यः ।

---

घृष्यन्ते प्रवालानि । शोष्यन्ते ओल्लविदमवतारिता आर्द्रिता वा कुङ्कुमप्रस्तराः । 'प्रस्तरः कुङ्कुमाधार[श्च]र्मपुटः' इत्याहुः । सालीअदि आर्द्रीक्रियते । सल्लज्जअं कस्तूरिका । शल्यवद्वेधकत्वात् । आज्यमिव मृगमदत्वात् (?) । विस्साणीअदि विशेषेण घृष्यते चन्दनरसः । संयोज्यन्ते गन्धयुक्तयः । दीयते गणिकाकामुकयोः सकर्पूरं ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रवर्तते हासः । पीयतेऽनवरतं सश्टङ्गारं मदिरा । इमेऽन्येऽवज्ञातपुत्रदारवित्ता मनुष्या आसवकरकेणापीतमदिरा गणिकाजनैर्ये मुक्तास्ते वाटं पिबन्ति । अयमर्थः—मद्यपानभाण्डेनापीतमद्या अनादृतनिजपरिवारास्त्यक्तान्यकर्तव्या अत एव तत्रैवात्यन्तमवस्थाना गणिकाभिर्ये मुक्ता निःसारिता इत्युक्तं ते पुरुषा वारंवारं पुनः

**विदूषकः**—(प्रविश्यावलोक्य च ।) ही ही भो, इधो वि सत्तमे पओट्ठे सुसिलिट्ठविहङ्गवाडीसुहणिसण्णाइं अण्णोण्णचुम्बणपराइं सुहं अणुभवन्ति पारावदमिहुणाइं । दहिभत्तपूरिदोदरो ब-म्हणो विअ सुत्तं पढदि पञ्जरसुओ इअं अवरा संमाणणालद्धपसरा विअ घरदासी अधिअं कुरुकुराअदि मदणसारिआ । अणेअफलर-सास्सादपन्हुट्टकण्ठा कुम्भदासी विअ कूअदि परपुट्ठा । आलम्बिदा णागदन्तेसु पञ्जरपरम्पराओ । जोधीअन्ति लावआ । आलवीअन्ति कविञ्जला । पेसीअन्ति पञ्जरकवोदा । इदो तदो विविहमणिचित्त-लिदो विअ अअं सहरिसं णच्चन्तो रविकिरणसंतत्तं पक्खुक्खेवेहिं विधुवेदि विअ पासादं घरमोरो । (अन्यतोऽवलोक्य ।) इदो पण्डी-किदा विअ चन्दपादा पदगदिं सिक्खन्ता विअ कामिणीणं पच्छादो परिब्भमन्ति राअहंसमिहुणा । एदे अवरे वुड्ढमहल्लका विअ इदो तदो संचरन्ति घरसारसा । ही ही भो, पसारणअं किदं गणिआए णाणापक्खिसमूहेहिं । जं सच्चं क्खु णन्दणवणं विअ मे गणिआघरं पडिभासदि । आदिसदु भोदी । (क)

(क) आश्चर्यं भोः, इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटीसुखनिषण्णा-न्यन्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । दधिभक्तपूरितो-दरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः । इयमपरा संमाननालब्धप्रसरेव

पुनर्मद्यमेव पिवन्ति । मदिराया अवारितसत्रत्वमुक्तम् ॥ इह सप्तमे प्रकोष्ठे सु-श्लिष्टायां विहङ्गपाल्यां कपोतपालिकायां सुखनिषण्णा[न्य]न्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । दधिभक्तपूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः । ऋक्समुदायः सूक्तम् । शोभनोक्तं च यथा स्यादेवम् । इयमपरा संमान[ना]लब्धप्रसरेव गृहदासी अधिकं कुरकुरायते मदनसारिका । अनेक-फलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा कोकिला । आलम्बिता नागदन्तेषु गृहभित्तिस्थदारुविशेषेषु । नागदन्तका इति प्रकृष्टौ कः । पञ्जर-परम्पराः । योध्यन्ते लावकाः । आलाप्यन्ते कपिञ्जला गौरास्तित्तिरयः । प्रेष्यन्ते पञ्जरकपोताः । योद्धुमित्यर्थात् । इतस्ततो विविधमणिविचित्रित इवायं सहच-रि(री)सहितः [सहर्षं] नृत्यन्रविकिरणसंतप्त(प्तं) पक्षोत्क्षेपैर्वीजयतीव प्रासादं गृह-मयूरः । इतः पिण्डीकृताश्चन्द्रकिरणा इव पदगतिं शिक्षमाणानि कामिनीनां पश्चा-त्परिभ्रमन्ति राजहंसमिथुनानि । एतेऽपरे वृद्धमहल्लका इव इतस्ततः परिभ्रमन्ति गृहसारसाः । प्रसारणकं दत्तं गणिका[illegible] । [illegible]नन्दनव-

**चेटी**—एदु एदु अज्जो । इमं अट्टमं पओट्टं पविसदु अज्जो । (क)

**विदूषकः**—(प्रविश्यावलोक्य च ।) भोदि, को एसो पट्टपावारअपाउदो अधिअदरं अच्चब्भुदपुणरुत्तालंकारालंकिदो अङ्गभङ्गेहिं परिक्खलन्तो इदो तदो परिब्भमदि । (ख)

**चेटी**—अज्ज, एसो अज्जआए भादा भोदि । (ग)

**विदूषकः**—केत्तिअं तवच्चरणं कदुअ वसन्तसेणाए भादा भोदि । अधवा ।

मा दाव जइ वि एसो उज्जलो सिणिद्धो अ सुअन्धो अ ।

तह वि मसाणवीधी एजादो विअ चम्पअरुक्खो अणहिगमणीओ लोअस्स ॥ २९ ॥

(अन्यतोऽवलोक्य ।) भोदि, एसा उण का फुल्लपावारअपाउदा उवा-

---

गृहदासी अधिकं कुरकुरायते मदनसारिका । अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा । आलम्बिता नागदन्तेषु पञ्जरपरम्पराः । योध्यन्ते लावकाः । आलाप्यन्ते कपिञ्जलाः । प्रेष्यन्ते पञ्जरकपोताः । इतस्ततो विविधमणिचित्रित इवायं सहर्षं नृत्यन्रविकिरणसंतप्तं पक्षोत्क्षेपैर्विधुवतीव प्रासादं गृहमयूरः । इतः पिण्डीकृता इव चन्द्रपादाः पदगतिं शिक्षमाणानीव कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि । एतेऽपरे वृद्धमहल्लका इव इतस्ततः संचरन्ति गृहसारसाः । आश्चर्यं भो, प्रसारणं कृतं गणिकया नानापक्षिसमूहैः । यत्सत्यं खलु नन्दनवनमिव मे गणिकागृहं प्रतिभासते । आदिशतु भवती ।

(क) एत्वेत्वार्यः । इममष्टमं प्रकोष्ठं प्रविशत्वार्यः ।

(ख) भवति, क एष पट्टप्रावारकप्रावृतोऽधिकतरमत्यद्भुतपुनरुक्तालंकारालंकृतोऽङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति ।

(ग) आर्य, एष आर्याया भ्राता भवति ।

---

नमिव मे गणिकागृहं प्रतिभाति ॥ [इहापि] अष्टमे प्रकोष्ठे । भवति, क एष पट्टप्रच्छदप्रावृतोऽधिकतरमत्यद्भुतपुनरुक्तालंकारालंकृतोऽङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति ॥ **मा दाव जइ वि इति** । आर्या । विततायामिव अ-

णहजुअलणिक्खित्ततेल्लचिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि । (क)

**चेटी**—अज्ज, एसा क्खु अम्हाणं अज्जआए अत्तिआ । (ख)

**विदूषकः**—अहो से कवड्डडाइणीए पोट्टवित्थारो । ता किं एदं पवेसिअ महादेवं विअ दुआरसोहा इह घरे णिम्मिदा । (ग)

**चेटी**—हदास, मा एव्वं उवहस अम्हाणं अत्तिअम् । एसा क्खु चाउत्थिएण पीडीअदि । (घ)

**विदूषकः**—(सहपरिहासम् ।) भअवं चाउत्थिअ, एदिणा उवआरेण मं पि बम्हणं आलोएहि । (ङ)

**चेटी**—हदास, मरिस्ससि । (च)

---

(क) कियत्तपश्चरणं कृत्वा वसन्तसेनाया भ्राता भवति । अथवा ।
मा तावद्यद्यप्येष उज्ज्वलः स्निग्धश्च सुगन्धश्च ।
तथापि श्मशानवीथ्यां जात इव चम्पकवृक्षोऽनभिगमनीयो लोकस्य ॥
भवति, एषा पुनः का पुष्पप्रावारकप्रावृतोपानद्युगलनिक्षिप्ततैलचिक्कणाभ्यां पादाभ्यामुच्चासन उपविष्टा तिष्ठति ।

(ख) आर्य, एषा खल्वस्माकमार्याया माता ।

(ग) अहो अस्याः कपर्दकडाकिन्या उदरविस्तारः । तत्किमेतां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता ।

(घ) हताश, मैवमुपहसास्माकं मातरम् । एषा खलु चातुर्थिकेन पीड्यते ।

(ङ) भगवंश्चातुर्थिक, एतेनोपकारेण मामपि ब्राह्मणमवलोकय ।

(च) हताश, मरिष्यसि ।

---

मेध्य इवेति पाठान्तरे इत्यर्थः । अनभिगम्योऽनभिगमनीयः । एषा पुनः का पुष्पप्रावारकप्रावृता 'पुष्पपट' इति प्रसिद्धः । उपानद्युगलनिक्षिप्ततैलचिक्कणाभ्यां पादाभ्यां लक्षिता । अहो अस्याः कपर्दकडाकिन्या उदरविस्तारः । 'करट' इति पाठे अशौचाभ्यवहरणप्रयुक्तकरटब्राह्मणवत् । तत्किमितीमां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता । अन्यथा अनेन द्वारेणास्या गृहे न प्रवेशः स्यादित्याशयः ॥ एषा खल्वस्माकमत्ता चातुर्थिकेन ज्वरविशेषेण पीड्यते । तेनेदृशी दशेत्युक्तम् ॥ सपरिहासम् । भगवंश्चातुर्थ(र्थि)क, एतेनोपकारेण मामपि ब्राह्मणमवलोकय । शूणपीणजठरो शूण उच्छूनः पीनो

**विदूषकः**—(सपरिहासम् ।) दासीए धीए, वरं इदिसो शूणपीणजठरो मुदो ज्जेव ।

सीधुसुरासवमत्तिआ एआवत्थं गदा हि अत्तिआ ।
जइ मरइ एत्थ अत्तिआ भोदि सिआलसहस्सपज्जत्तिआ ॥३०॥

भोदि, किं तुम्हाणं जाणवत्ता वहन्ति । (क)

**चेटी**—अज्ज, णहि णहि । (ख)

**विदूषकः**—किं वा एत्थ पुच्छीअदि । तुम्हाणं क्खु पेम्मणिम्मलजले मअणसमुद्दे त्थणणिअम्बजहणा ज्जेव जाणवत्ता मणहरणा । एव्वं वसन्तसेणाए बहुवुत्तन्तं अट्ठपओट्ठं भवणं पेक्खिअ जं सच्चं जाणामि, एकत्थं विअ तिविट्ठअं दिट्ठम् । पसंसिदुं णत्थि मे वाआविहवो । किं दाव गणिआघरो, अहवा कुबेरभवणपरिच्छेदो त्ति । कहिं तुम्हाणं अज्जआ । (ग)

**चेटी**—अज्ज, एसा रुक्खवाडिआए चिट्ठदि । ता पविसदु अज्जो । (घ)

**विदूषकः**—(प्रविश्य दृष्ट्वा च ।) ही ही भो, अही रुक्खवाडि-

---

(क) दास्याःपुत्रि, वरमीदृशः शूनपीनजठरो मृत एव ।
सीधुसुरासवमत्ता एतावदवस्थां गता हि माता ।
यदि म्रियतेऽत्र माता भवति शृगालसहस्रपर्याप्तिका ॥
भवति, किं युष्माकं यानपात्राणि वहन्ति । (ख) आर्य नहि नहि ।

(ग) किं वात्र पृच्छयते । युष्माकं खलु प्रेमनिर्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव यानपात्राणि मनोहराणि । एवं वसन्तसेनाया बहुवृत्तान्तमष्टप्रकोष्ठं भवनं प्रेक्ष्य यत्सत्यं जानामि, एकस्थमिव त्रिविष्टपं दृष्टम् । प्रशंसितुं नास्ति मे वाग्विभवः । किं तावद्गणिकागृहम्, अथवा कुबेरभवनपरिच्छेद इति । कुत्र युष्माकमार्या ।

(घ) आर्य, एषा वृक्षवाटिकायां तिष्ठति । तत्प्रविशत्वार्यः ।

---

मुदो मृतः । **सीधुसुरासवेत्यादि** । उपजातिविशेषः । सीधुसुरासवा मदिराविशेषाः । एतावदवस्थामापन्नपीनत्वरूपां(पा) गता यदि म्रियतेऽत्र मृता भवति शृगालानां पर्याप्तिका सौहित्यम् ॥३०॥ युष्माकमपि जानपात्रा वहन्ति । उद्वाहकेनार्जितविभवस्यैव परमियान्विस्तारो भवतीति प्रष्टुरभिप्रायः (?) ॥ प्रेमनि-

आए सस्सिरीअदा । अच्छरीदिकुसुमपत्थारा रोविदाअणेअपादवा, णिरन्तरपादवतलणिम्मिदा जुवदिजहणप्पमाणा पट्टदोला, सुवण्णजूघिआसेहालिआमालईमल्लिआणोमालिआकुरबआअदिमोत्तअप्पहुदिकुसुमेहिं सअं णिवडिदेहिं जं सच्चं लहुकरेदि विअ णन्दणवणस्स सस्सिरीअदम् । (अन्यतोऽवलोक्य ।) इदो अ उदअन्तसूरसमप्पहेहिं कमलरत्तोप्पलेहिं संझाअदि विअ दीहिआ । अवि अ ।

एसो असो अवुच्छो णवणिग्गमकुसुमपल्लवो भादि ।
सुभडो व्व समरमज्झे घणलोहिदपङ्कचच्चिक्को ॥ ३१ ॥

भोदु । ता कहिं तुम्हाणं अज्जआ । (क)

**चेटी**—अज्ज, ओणामेहि दिट्टिम् । पेक्ख अज्जअम् । (ख)

**विदूषकः**—(दृष्ट्वा उपसृत्य ।) सोत्थि भोदीए । (ग)

**वसन्तसेना**—(संस्कृतमाश्रित्य ।) अये, मैत्रेयः । (उत्थाय ।) स्वागतम् । इदमासनम् । अत्रोपविश्यताम् ।

**विदूषकः**—उपविसदु भोदी । (घ)

(उभावुपविशतः ।)

**वसन्तसेना**—अपि कुशलं सार्थवाहपुत्रस्य ।

---

(क) आश्चर्यं भोः अहो वृक्षवाटिकायाः सश्रीकता । अच्छरीतिकुसुमप्रस्तारा रोपितानेकपादपाः, निरन्तरपादपतलनिर्मिता युवतिजघनप्रमाणा पट्टदोला, सुवर्णयूथिकाशेफालिकामालतीमल्लिकानवमल्लिकाकुरबकातिमुक्तकप्रभृतिकुसुमैः स्वयं निपतितैर्यत्सत्यं लघूकरोतीव नन्दनवनस्य सश्रीकताम् । इतश्च उदयत्सूर्यसमप्रभैः कमलरक्तोत्पलैः संध्यायते इव दीर्घिका । अपि च ।

एषोऽशोकवृक्षो नवनिर्गमकुसुमपल्लवो भाति ।
सुभट इव समरमध्ये घनलोहितपङ्कचर्चिकः ॥

भवतु । तत्कुत्र युष्माकमार्या ।

(ख) आर्य, अवनमय दृष्टिम् । पश्यार्याम् । (ग) स्वस्ति भवत्यै ।
(घ) उपविशतु भवती ।

---

मैलजले मदनसमुद्रे स्तननितम्बजघनान्येव यानपात्राणि ॥ सर्वर्तुकुसुमप्रस्तारारोपितानेकपादपा निरन्तरपादपतलनिर्मिता युवतिजघनप्रमाणा पट्टदोला । लघुकीकरोतीव नन्दनवनस्य सश्रीकत्वम् । **एसो असोअ इत्यादि** । गाथा । वुच्छो वृक्षः । घनरुधिरपङ्कचर्चिका चर्चा यस्य सः ॥ ३१ ॥ ओणामेहि

**विदूषकः**—भोदि, कुशलम् (क)

**वसन्तसेना**—आर्य मैत्रेय, अपीदानीं

गुणप्रवालं विनयप्रशाखं विश्रम्भमूलं महनीयपुष्पम् ।
तं साधुवृक्षं स्वगुणैः फलाढ्यं सुहृद्विहङ्गाः सुखमाश्रयन्ति ३२

**विदूषकः**—(स्वगतम् ।) सुट्ठु उवलक्खिदं दुट्ठविलासिणीए । (प्रकाशम् ।) अध इं । (ख)

**वसन्तसेना**—अये, किमागमनप्रयोजनम् ।

**विदूषकः**—सुणादु भोदी । तत्तभवं चारुदत्तो सीसे अञ्जलिं कदुअ भोदिं विण्णवेदि । (ग)

**वसन्तसेना**—(अञ्जलिं बद्ध्वा ।) किमाज्ञापयति ।

**विदूषकः**—मए तं सुवण्णभण्डअं विस्सम्भादो अत्तणकेरकेत्ति कदुअ जूदे हारिदम् । सो अ सहिओ राअवत्थहारी ण जाणिअदि कहिं गदो त्ति । (घ)

**चेटी**—अज्जए, दिट्ठिआ वड्ढसि । अज्जो जूदिअरो संवुत्तो । (ङ)

**वसन्तसेना**—(स्वगतम् ।) कधम् । चोरेण अवहिदं पि सोण्डीरदाए जूदे हारिदं त्ति भणादि । अदो जेव कामीअदि । (च)

---

(क) भवति, कुशलम् ।

(ख) सुष्ठूपलक्षितं दुष्टविलासिन्या । अथ किम् ।

(ग) शृणोतु भवती । तत्रभवांश्चारुदत्तः शीर्षेऽञ्जलिं कृत्वा भवतीं विज्ञापयति ।

(घ) मया तत्सुवर्णभाण्डं विश्रम्भादात्मीयमिति कृत्वा द्यूते हारितम् । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति ।

(ङ) आर्ये, दिष्ट्या, वर्धसे । आर्यो द्यूतकरः संवृत्तः ।

(च) कथम् । चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति । अत एव काम्यते ।

---

अवनमय ॥ **गुणेति** ॥ ३२ ॥ से अस्याः (?) भावे क्तयोगे षष्ठी (?) । छात्रस्य हसितमिति यथा ॥ अध इं अथ किम् । अनुमतौ ॥ राअवत्थहारी वा-

**विदूषकः**—ता तस्स कारणादो गेण्हदु भोदी इमं रअणावलिम् । (क)

**वसन्तसेना**—(आत्मगतम् ।) किं दंसेमि तं अलंकारअम् । (विचिन्त्य ।) अधवा ण दाव । (ख)

**विदूषकः**—किं दाव ण गेण्हदि भोदी एदं रअणावलिम् । (ग)

**वसन्तसेना**—(विहस्य सखीमुखं पश्यन्ती ।) मित्तेअ, कधं ण गेण्हिस्सं रअणावलिम् । (इति गृहीत्वा पार्श्वे स्थापयति । स्वगतम् ।) कधं झीणकुसुमादो वि सहआरपादवादो मअरन्दबिन्दओ णिवडन्ति । (प्रकाशम् ।) अज्ज, विण्णवेहि तं जूदिअरं मम वअणेण अज्जचारुदत्तम्—'अहं पि पदोसे अज्जं पेक्खिदुं आअच्छामि' त्ति । (घ)

**विदूषकः**—(स्वगतम् ।) किं अण्णं तहिं गदुअ गेण्हिस्सदि । (प्रकाशम् ।) भोदि, भणामि—(स्वगतम् ।) 'णिअत्तीअदु इमादो गणिआपसङ्गादो, त्ति । (ङ) (इति निष्क्रान्तः ।)

**वसन्तसेना**—हञ्जे, गेण्ह एदं अलंकारअम् । चारुदत्तं अहिरमिदुं गच्छम्ह । (च)

**चेटी**—अज्जए, पेक्ख पेक्ख । उण्णमदि अकालदुद्दिणम् । (छ)

---

(क) तत्तस्य कारणाद्गृह्णातु भवतीमां रत्नावलीम् ।

(ख) किं दर्शयामि तमलंकारम् । अथवा न तावत् ।

(ग) किं तावन्न गृह्णाति भवतीमां रत्नावलीम् ।

(घ) मैत्रेय, कथं न ग्रहीष्यामि रत्नावलीम् । कथं हीनकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति । आर्य, विज्ञापय तं द्यूतकरं मम वचनेनार्यचारुदत्तम्—'अहमपि प्रदोष आर्यं प्रेक्षितुमागच्छामि' इति ।

(ङ) किमन्यत्तत्र गत्वा ग्रहीष्यति । भवति, भणामि—'निवर्ततामस्माद्गणिकाप्रसङ्गात्' इति ।

(च) चेटि, गृहाणैतमलंकारम् । चारुदत्तमभिरन्तुं गच्छामः ।

(छ) आर्ये, पश्य पश्य । उन्नमत्यकालदुर्दिनम् ।

---

र्तिकः ॥ सोण्डीरदाए शौण्डीर्येणाशयमहत्त्वेन ॥ भोदी भवती ॥ भणामीत्यनन्तरं

वसन्तसेना—

उदयन्तु नाम मेघा भवतु निशा वर्षमविरतं पततु ।
गणयामि नैव सर्वं दयिताभिमुखेन हृदयेन ॥ ३३ ॥

हञ्जे, हारं गेण्हिअ लहुं आअच्छ । (क)

(इति निष्क्रान्ताः सर्वे ।)

**मदनिकाशर्विलको नाम चतुर्थोऽङ्कः ।**

---

(क) चेटि, हारं गृहीत्वा शीघ्रमागच्छ ।

---

सहासनाटकसूत्रं परितमिव तथा कृत्वा बोद्धव्यम् (?) ॥ **उदयन्त्विति** ॥३३॥

इति मदनिकाप्रदानो नाम चतुर्थोऽङ्कः ॥

## पञ्चमोऽङ्कः ।

(ततः प्रविशत्यासनस्थः सोत्कण्ठश्चारुदत्तः ।)

**चारुदत्तः**—(ऊर्ध्वमवलोक्य ।) उन्नमत्यकालदुर्दिनम् । यदेतत्

आलोकितं गृहशिखण्डिभिरुत्कलापै-
हंसैर्यियासुभिरपाकृतमुन्मनस्कैः ।
आकालिकं सपदि दुर्दिनमन्तरीक्ष-
मुत्कण्ठितस्य हृदयं च समं रुणद्धि ॥ १ ॥

अपि च ।

मेघो जलार्द्रमहिषोदरभृङ्गनीलो
विद्युत्प्रभारचितपीतपटोत्तरीयः ।
आभाति संहतबलाकगृहीतशङ्खः
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥ २ ॥

अपि च ।

केशवगात्रश्यामः कुटिलबलाकावलीरचितशङ्खः ।
विद्युद्गुणकौशेयश्चक्रधर इवोन्नतो मेघः ॥ ३ ॥

एता निषिक्तरजतद्रवसंनिकाशा
धारा जवेन पतिता जलदोदरेभ्यः ।
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ॥ ४ ॥

---

पूर्वाङ्केऽङ्कावतारेणैव सूचितस्य प्रकरणनायकस्य प्रवेशः । तथा चोक्तम्—'प्रवेशश्चूलिका चैव तथा विष्कम्भकोऽपरः । अङ्कावतारोऽङ्कमुखमथो (र्थो) पक्षेपपञ्चकम् ॥' इति । प्रवेशयतीति प्रवेशः । पचाद्यच् । प्रवेशको ण्वुलन्त उच्यते । अधमपात्रप्रयोज्यः प्रवेशकः । तदुक्तम्—'भृत्यवर्गकथावच्च कर्तव्यस्तु प्रवेशकः । अन्तर्जवनिकासंस्थैस्तथा मागधवन्दिभिः ॥ अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ॥' विष्कम्भस्तु द्विधा सोऽयं शुद्धः संकीर्ण एव च । शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः ॥' इति । **आलोकितमिति** । अपाकृतं निरस्तम् । अनभिनन्दितमिति यावत् ॥ १ ॥ **मेघ इति** । बलाकशब्दः पुंलिङ्गोऽप्येषां संमतः । खं आकाशम् ॥ २ ॥ **केशवेति** ॥ ३ ॥ **एता इति** । निषिक्तं

संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः ।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना ॥ ५ ॥

एतत्तद्धृतराष्ट्रवक्त्रसदृशं मेघान्धकारं नभो
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।
अक्षद्यूतजितो युधिष्ठिर इवाध्वानं गतः कोकिलो
हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां गताः ॥ ६ ॥

(विचिन्त्य ।) चिरं खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य । नाद्यापि आगच्छति ।

(प्रविश्य)

**विदूषकः**—अहो गणिआए लोभो अदक्खिणदा अ, जदो ण कधा वि किदा अण्णा । अणेकहा सिणेहाणुसारं भणिअ किं पि, एव्वमेअ गहिदा रअणावली । एत्तिआए ऋद्धीए ण तए अहं भणिदो—'अज्जमित्तेअ, वीसमीअदु । मल्लकेण पाणीअं पि पिविअ गच्छीअदु' त्ति । ता मा दाव दासीए धीआए गणिआए मुहं पि पेक्खिस्सम् । (सनिर्वेदम् ।) सुट्ठु क्खु वुच्चदि—'अकन्दसमुत्थिता पउमिणी, अवञ्चओ वाणिओ, अचोरो, सुवण्णआरो, अकलहो गामसमागमो, अलुद्धा गणिआ त्ति दुक्करं एदे संभावीअन्ति' । ता पिअवअस्सं गदुअ इमादो गणिआपसङ्गादो णिवत्तावेमि । (परिक्रम्य दृष्ट्वा ।) कधं पिअवअस्सो रुक्खवाडिआए उवविट्ठो चि-

---

द्रावितम् ॥ ४ ॥ **संसक्तैरिति** । प्रडीनैरिति कर्मणि क्तः (?) । व्याविद्धैर्भ्रान्तैः । चक्रं समूहः । पत्रस्य छेदः खण्डनं विचलं (?) यत्र चित्रे तत्पत्रछेद्यं चित्रम् । तदिव गगनं शोभते ॥ ५ ॥ **एतदिति** । धृतराष्ट्रवक्त्रसदृशं नष्टचन्द्रार्कत्वात् । वा इवार्थे । शिखी मयूरः । वनादिति ल्यब्लोपे कर्मणि पञ्चमी । वनं प्राप्येत्यर्थः ॥ ६ ॥ अणेकहा सिणेहाणुसारं भणिअ अनेकधा स्नेहानुसारं भणित्वा । पाठान्तरे णैव कथा कथं हारितमलंकारभाण्डमित्यादिका नैव कथा-

ट्ठदि । ता जाव उवसप्पामि । (उपसृत्य ।) सोत्थि भवदे । वड्ढदु भवम् । (क)

**चारुदत्तः**—(विलोक्य ।) अये, सुहृन्मे मैत्रेयः प्राप्तः । वयस्य, स्वागतम् । आस्यताम् ।

**विदूषकः**—उवविट्ठो म्हि । (ख)

**चारुदत्तः**—वयस्य, कथय तत्कार्यम् ।

**विदूषकः**—तं क्खु कज्जं विणट्ठम् । (ग)

**चारुदत्तः**—किं तया न गृहीता रत्नावली ।

**विदूषकः**—कुदो अम्हाणं एत्तिअं भाअधेअम् । णवणलिण-कोमलं अञ्जलिं मत्थए कदुअ पडिच्छिआ । (घ)

**चारुदत्तः**—तत्किं ब्रवीषि विनष्टमिति ।

**विदूषकः**—भो, कधं ण विणट्ठम्, जं अभुत्तपीदस्स चोरेहिं अवहिदस्स अप्पमुल्लस्स सुवण्णभण्डअस्स कारणादो चदुस्ससुद्दसारभूदा रअणमाला हारिदा । (ङ)

---

(क) अहो गणिकाया लोभोऽदक्षिणता च, यतो न कथापि कृतान्या । अनेकधा स्नेहानुसारं भणित्वा किमपि, एवमेव गृहीता रत्नावली । एतावत्या ऋद्ध्या न तयाहं भणितः—'आर्यमैत्रेय, विश्रम्यताम् । मल्लकेन पानीयमपि पीत्वा गम्यताम्' इति । तन्मा तावद्दास्याःपुत्र्या गणिकाया मुखमपि द्रक्ष्यामि । सुष्ठु खलूच्यते—'अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति दुष्करमेते संभाव्यन्ते' । तत्प्रियवयस्यं गत्वास्माद्गणिकाप्रसङ्गान्निवर्तयामि । कथं प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति । तद्यावदुपसर्पामि । स्वस्ति भवते । वर्धतां भवान् ।

(ख) उपविष्टोऽस्मि । (ग) तत्खलु कार्यं विनष्टम् ।

(घ) कुतोऽस्माकमेतावद्भागधेयम् । नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतीष्टा ।

(ङ) भोः, कथं न विनष्टम्, यदभुक्तपीतस्य चौरैरपहृतस्याल्पमूल्यस्य सुवर्णभाण्डस्य कारणाच्चतुःसमुद्रसारभूता रत्नमाला हारिता ।

---

नुसारः कृतोऽस्या रत्नावल्या भाव (?) इत्यादिकः । मल्लको भाजनविशेषः । तन्मा तावत् । यद्भोजनाद्यर्थमपि न तथा भणितोऽहम् ॥ यदभुक्तपीतस्य चौरै-

**चारुदत्तः**—वयस्य, मा मैवम् ।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः ।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ ७ ॥

**विदूषकः**—भो वअस्स, एदं पि मे दुदिअं संतावकारणं जं सहीअणदिण्णसण्णाए पडन्तोवारिदं मुहं कदुअ अहं उवहसिदो । ता अहं बम्हणो भविअ दाणिं भवन्तं सीसेण पडिअ विण्णवेमि—'णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो गणिआपसङ्गादो' । गणिआ णाम पादुअन्तरप्पविट्ठा विअ लेट्ठुआ दुक्खेण उण णिराकरीअदि । अवि अ भो वअस्स, गणिआ हत्थी काअत्थओ भिक्खु चाटो रासहो अ जहिं एदे णिवसन्ति तहिं दुट्ठा वि ण जाअन्ति । (क)

**चारुदत्तः**—वयस्य, अलमिदानीं सर्वं परिवादमुक्त्वा । अवस्थयैवास्मि निवारितः । पश्य ।

वेगं करोति तुरगस्त्वरितं प्रयातुं
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः
खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥ ८ ॥

अपि च वयस्य,

यस्यार्थास्तस्य सा कान्ता धनहार्यो ह्यसौ जनः ।
(स्वगतम् ।) न गुणहार्यो ह्यसौ जनः । (प्रकाशम् ।)
वयमर्थैः परित्यक्ता ननु त्यक्तैव सा मया ॥ ९ ॥

---

(क) भो वयस्य, एतदपि मे द्वितीयं संतापकारणं यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाहमुपहसितः । तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि—'निवर्त्यतामात्मास्माद्बहुप्रत्यवायाद्गणिकाप्रसङ्गात्' । गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुका दुःखेन पुनर्निराक्रियते । अपि च भो वयस्य, गणिका हस्ती कायस्थो भिक्षुश्चाटो रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते ।

---

रेवापहृतस्याल्पमूल्यस्य ॥ **यमिति** ॥ ७ ॥ यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वा । गणिका हस्ती कायस्थो भिक्षुश्चाटौ(टो) क्षुद्रविषयभोक्ता रासभो गदर्भः ॥ **वेगमिति** ॥ ८ ॥ **यस्येति** ॥ ९ ॥ अवेध्य माणहेति ।

**विदूषकः**—(अधोऽवलोक्य स्वगतम् ।) जधा एसो उद्धं पेक्खिअ दीहं णिससदि, तधा तक्केमि मए विणिवारिअन्तस्स अधिअदरं वड्ढिदा से उक्कण्ठा । ता सुट्ठुक्खु एव्वं वुच्चदि—'कामो वामो' त्ति। (प्रकाशम् ।) भो वअस्स, भणिदं अ ताए—भणेहि चारुदत्तम्—'अज्ज पओसे मए एत्थ आअन्तव्वं' त्ति । ता तक्केमि रअणावलीए अपरितुट्ठा अवरं मग्गिदुं आअमिस्सदि त्ति । (क)

**चारुदत्तः**—वयस्य, आगच्छतु । परितुष्टा यास्यति ।

**चेटः**—(प्रविश्य ।) अवेध माणहे ।

जधा जधा वश्यदि अब्भखण्डे तधा तधा तिम्मदि पुट्ठिचम्मे ।
जधा जधा लग्गदि शीदवादे तधा तधा वेवदि मे हलक्के ॥१०॥

(प्रहस्य ।)

वंशं वाए शत्तछिद्दं शुशद्दं वीणं वाए शत्ततन्तिं णदन्तिम् ।
गीअं गाए गद्दहश्शाणुलूअं के मे गाणे तुम्बुलू णालदे वा ॥११॥

आणत्तम्हि अज्जआए वशन्तशेणाए—'कुम्भीलआ, गच्छ तुमम् । मम आगमणं अज्जचारुदत्तश्श णिवेदेहि' त्ति । ता जाव अज्जचारुदत्तश्श गेहं गच्छामि । (परिक्रम्य प्रविष्टकेन दृष्ट्वा ।) एशे चालुदत्ते रुक्खवाडिआए चिट्ठदि । एशे वि शे दुट्टवडुके । ता जाव उव-

---

(क) यथैष ऊर्ध्वं प्रेक्ष्य दीर्घं निश्वसिति, तथा तर्कयामि मया विनिवार्यमाणस्याधिकतरं वृद्धास्योत्कण्ठा । तत्सुष्ठु खल्वेवमुच्यते—'कामो वामः' इति । भो वयस्य, भणितं च तया—भण चारुदत्तम्—'अद्य प्रदोषे मयात्रागन्तव्यम्' इति । तत्तर्कयामि रत्नावल्या अपरितुष्टापरं याचितुमागमिष्यतीति ।

---

अवेत अवगच्छत मानवा इत्यर्थः **जधा जधेति** । उपेन्द्रवज्रया श्लोकः । यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति अर्द्रीभवति पृष्ठचर्म । यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम् ॥ १० ॥ **वंशं वाए इति ।** उपजातिविशेषः । पादत्रयं जगतीजात्या । चतुर्थः पादः शालिन्या । वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम् । गीतं गायामि गर्दभस्यानुरूपं को मे तुल्यस्तुम्बुरुर्नारदो वा ॥ ११ ॥ अस्य वटु-

शप्पेमि। कधं ढक्किदे दुवाले रुक्खवाडिआए। भोदु। एदश्श दुट्टवडुकश्श शण्णं देमि। (क) (इति लोष्टगुटिकाः क्षिपति।)

**विदूषकः**—अए, को दाणिं एसो पाआरवेट्टिदं विअ कइत्थं मं लोट्टकेहिं ताडेदि। (ख)

**चारुदत्तः**—आरामप्रासादवेदिकायां क्रीडद्भिः पारावतैः पातितं भवेत्।

**विदूषकः**—दासीए पुत्त दुट्टपारावअ, चिट्ठ चिट्ठ। जाव एदिणा दण्डकट्ठेण सुपक्कं विअ चूअफलं इमादो पासादादो भूमीए पाडइस्सम्। (ग) (इति दण्डकाष्ठमुद्यम्य धावति।)

**चारुदत्तः**—(यज्ञोपवीत आकृष्य।) वयस्य, उपविश। किमनेन। तिष्ठतु दयितासहितस्तपस्वी पारावतः।

**चेटः**—कधं पारावदं पेक्खदि। मं ण पेक्खदि। भोदु। अवराए लोट्टगुडिकाए पुणो वि ताडइस्सम्। (घ) (तथा करोति।)

---

(क) अवेत मानवाः,

यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति पृष्ठचर्म।
यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम्॥
वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम्।
गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बुरुर्नारदो वा॥

आज्ञप्तोऽस्म्यार्यया वसन्तसेनया—'कुम्भीलक, गच्छ त्वम्। ममागमनमार्यचारुदत्तस्य निवेदय' इति। तद्यावदार्यचारुदत्तस्य गेहं गच्छामि। एष चारुदत्तो वृक्षवाटिकायां तिष्ठति। एषोऽपि स दुष्टबटुकः तद्यावदुपसर्पामि। कथमाच्छादितं द्वारं वृक्षवाटिकायाः। भवतु। एतस्य दुष्टबटुकस्य संज्ञां ददामि।

(ख) अये, क इदानीमेष प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताडयति।

(ग) दास्याःपुत्र दुष्टपारावत, तिष्ठ तिष्ठ यावदेतेन दण्डकाष्ठेन सुपक्कमिव चूतफलमस्मात्प्रासादाद्भूमौ पातयिष्यामि।

(घ) कथं पारावतं पश्यति। मां न पश्यति। भवतु। अपरया लोष्टगुटिकया पुनरपि ताडयिष्यामि।

विदूषकः—(दिशोऽवलोक्य।) कधं कुम्भीलओ। ता जाव उवसप्पामि। (उपसृत्य। द्वारमुद्घाट्य।) अरे कुम्भीलअ, पविश। साअदं दे। (क)

चेटः—(प्रविश्य।) अज्ज, वन्दामि। (ख)

विदूषकः—अरे, कहिं तुमं ईदिसे दुद्दिणे अन्धआरे आअदो।(ग)

चेटः—अले, एशा शा। (घ)

विदूषकः—का एसा का। (ङ)

चेटः—एशा शा। (च)

विदूषकः—किं दाणिं दासीए पुत्ता, दुब्भिक्खकाले वुड्ढरङ्को विअ उद्धकं सासाअसि—'एसा सा से'त्ति। (छ)

चेटः—अले, तुमं पि दाणिं इन्दमहकामुको विअ शुट्ठु किं काकाअसि—'का के'त्ति। (ज)

विदूषकः—ता कहेहि। (झ)

चेटः—(स्वगतम्।) भोदु। एव्वं भणिश्शम्। (प्रकाशम्।) अले, पण्हं दे दइश्शम्। (ञ)

विदूषकः—अहं दे मुण्डे गोड्डं दइस्सम्। (ट)

---

(क) कथं कुम्भीलकः। तद्यावदुपसर्पामि। अरे कुम्भीलक, प्रविश। स्वागतं ते। (ख) आर्य, वन्दे।

(ग) अरे, कुत्र त्वमीदृशे दुर्दिनेऽन्धकार आगतः।

(घ) अरे, एषा सा। (ङ) कैषा का। (च) एषा सा।

(छ) किंमिदानीं दास्याःपुत्र, दुर्भिक्षकाले वृद्धरङ्क इवोर्ध्वकं श्वासायसे—'एषा सा सा' इति।

(ज) अरे, त्वमपीदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे—'का का' इति। (झ) तत्कथय।

(ञ) भवतु। एवं भणिष्यामि। अरे, प्रश्नं ते दास्यामि।

(ट) अहं ते मस्तके पादं दास्यामि।

---

कस्य संज्ञां ददामि॥ कपित्थं फलविशेषः॥ वृद्धविब्भो दुंवासू इति यावत् (?)। इन्द्रमहकामुकः काकः। 'इन्द्रमह काकपोदओ विअ' इति पाठो व्यक्तार्थ एव॥

**चेटः**—अले, जाणाहि दाव, तेण हि । कस्सिं काले चूआ मोलेन्ति । (क)

**विदूषकः**—अरे दासीए पुत्ता, गिम्हे । (ख)

**चेटः**—(सहासम् ।) अले, णहि णहि । (ग)

**विदूषकः**—(स्वगतम् ।) किं दाणिं एत्थ कहिस्सम् । (विचिन्त्य ।) भोदु । चारुदत्तं गदुअ पुच्छिस्सम् । (प्रकाशम् ।) अरे, मुहुत्तअं चिट्ठ । (चारुदत्तमुपसृत्य ।) भो वअस्स, पुच्छिस्सं दाव, कस्सिं काले चूआ मोलेन्ति । (घ)

**चारुदत्तः**—मूर्ख, वसन्ते ।

**विदूषकः**—(चेटमुपगम्य ।) मुक्ख, वसन्ते । (ङ)

**चेटः**—दुदिअ दे पण्हं दइश्शम् । शुशमिद्धाणं गामाणं का लक्खणं कलेदि । (च)

**विदूषकः**—अरे, रच्छा । (छ)

**चेटः**—(सहासम् ।) अले, णहि णहि । (ज)

**विदूषकः**—भोदु । संसए पडिदम्हि । (विचिन्त्य ।) भोदु । चारुदत्तं पुणो वि पुच्छिस्सम् । (झ) (पुनर्निवृत्य चारुदत्तं तथैवोदाहरति ।)

**चारुदत्तः**—वयस्य, सेना ।

**विदूषकः**—(चेटमुगम्य ।) अरे दासीए पुत्ता, सेणा । (ञ)

---

(क) अरे, जानीहि तावत्, तेन हि । कस्मिन्काले चूता मुकुलिता भवन्ति ।

(ख) अरे दास्याः पुत्र, ग्रीष्मे ।     (ग) अरे, नहि नहि

(घ) किमिदानीमत्र कथयिष्यामि । भवतु । चारुदत्तं गत्वा प्रक्ष्यामि । अरे, मुहूर्तकं तिष्ठ । भो वयस्य, प्रक्ष्यामि तावत्, कस्मिन्काले चूता मुकुलिता भवन्ति ।     (ङ) मूर्ख वसन्ते ।

(च) द्वितीयं ते प्रश्नं दास्यामि । सुसमृद्धानां ग्रामाणां का रक्षां करोति ।     (छ) अरे, रथ्या ।     (ज) अरे, नहि नहि ।

(झ) भवतु । संशये पतितोऽस्मि । भवतु चारुदत्तं पुनरपि प्रक्ष्यामि ।     (ञ) अरे दास्याः पुत्र, सेना ।

**चेटः**—अले, दुवे वि एक्कस्शिं कदुअ शिग्घं भणाहि। (क)

**विदूषकः**—सेणावसन्ते। (ख)

**चेटः**—णं पलिवत्तिअ भणाहि। (ग)

**विदूषकः**—(कायेन परिवृत्य।)सेणावसन्ते। (घ)

**चेटः**—अले मुक्ख बडुका, पदाइं पलिवत्तावेहि। (ङ)

**विदूषकः**—(पादौ परिवर्त्य।) सेणावसन्ते। (च)

**विटः**—अले मुक्ख, अक्खलपदाइं पलिवत्तावेहि। (छ)

**विदूषकः**—(विचिन्त्य।) वसन्तसेणा। (ज)

**चेटः**—एशा शा आअदा। (झ)

**विदूषकः**—ता जाव चारुदत्तस्स णिवेदेमि। (उपसृत्य।) भो चारुदत्त, धणिओ दे आअदो। (ञ)

**चारुदत्तः**—कुतोऽस्मत्कुले धनिकः।

**विदूषकः**—जइ कुले णत्थि, ता दुवारे अत्थि। एसा वसन्तसेणा आअदा। (ट)

**चारुदत्तः**—वयस्य, किं मां प्रतारयसि।

**विदूषकः**—जइ मे वअणे ण पत्तिआअसि, ता एदं कुम्भीलअं पुच्छ। अरे दासीए पुत्ता कुम्भीलअ, उवसप्प। (ठ)

**चेटः**—(उपसृत्य।) अज्ज, वन्दामि। (ड)

**चारुदत्तः**—भद्र, स्वागतम्। कथय सत्यं प्राप्ता वसन्तसेना।

---

(क) अरे, द्वे अप्येकस्मिन्कृत्वा शीघ्रं भण।

(ख) सेनावसन्ते। (ग) ननु परिवर्त्य भण।

(घ) सेनावसन्ते। (ङ) अरे मूर्ख बटुक, पदे परिवर्तय।

(च) सेनावसन्ते। (छ) अरे मूर्ख अक्षरपदे परिवर्तय।

(ज) वसन्तसेना। (झ) एषा सागता।

(ञ) तद्यावच्चारुदत्तस्य निवेदयामि। भो चारुदत्त, धनिकस्त आगतः।

(ट) यदि कुले नास्ति, तद्द्वारेऽस्ति। एषा वसन्तसेनागता।

(ठ) यदि मे वचने न प्रत्ययसे, तदिमं कुम्भीलकं पृच्छ। अरे दास्याः पुत्र कुम्भीलक, उपसर्प। (ड) आर्य, वन्दे।

**चेटः**—एशा शा आअदा वशन्तशेणा । (क)

**चारुदत्तः**—(सहर्षम् ।) भद्र, न कदाचित्प्रियवचनं निष्फलीकृतं मया । तद्गृह्यतां पारितोषिकम् । (इत्युत्तरीयं प्रयच्छति ।)

**चेटः**—(गृहीत्वा प्रणम्य सपरितोषम् ।) जाव अज्जआए णिवेदेमि । (ख) (इति निष्क्रान्तः ।)

**विदूषकः**—भो, अवि जाणासि, किंणिमित्तं ईदिसे दुद्दिणे आअदेत्ति । (ग)

**चारुदत्तः**—वयस्य, न सम्यगवधारयामि ।

**विदूषकः**—मए जाणिदम् । अप्पमुल्ला रअणावली, बहुमुल्लं सुवण्णभण्डअं त्ति ण परितुट्ठा अवरं मग्गिदुं आअदा । (घ)

**चारुदत्तः**—(स्वगतम् ।) परितुष्टा यास्यति ।

(ततः प्रविशत्युज्ज्वलाभिसारिकावेशेन वसन्तसेना, सोत्कण्ठा छत्रधारिणी, विटश्च ।)

**विटः**—(वसन्तसेनामुद्दिश्य ।)

अपद्मा श्रीरेषा प्रहरणमनङ्गस्य ललितं
कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम् ।
सलीलं गच्छन्ती रतिसमयलज्जाप्रणयिनी
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥ १२ ॥

वसन्तसेने, पश्य पश्य ।

गर्जन्ति शैलशिखरेषु विलम्बिबिम्बा
मेघा वियुक्तवनिताहृदयानुकाराः ।

---

(क) एषा सागता वसन्तसेना । (ख) यावदार्याया निवेदयामि ।

(ग) भोः, अपि जानासि, किंनिमित्तमीदृशे दुर्दिन आगतेति ।

(घ) मया ज्ञातम् । अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डमिति न परितुष्टापरं याचितुमागता ।

---

पण्हं प्रश्नम् ॥ मुण्डे मस्तके । गोड्डं पादम् ॥ **अपद्मेति** । एषा वसन्तसेनेति संनिकर्षेण । लज्जाप्रणयिनीत्यत्र संधावचामित्यादिनाकारलोपः (?) ॥ १२ ॥

येषां रवेण सहसोत्पतितैर्मयूरैः
खं वीज्यते मणिमयैरिव तालवृन्तैः ॥ १३ ॥

अपि च ।

पङ्कक्लिन्नमुखाः पिबन्ति सलिलं धाराहता दर्दुराः
कण्ठं मुञ्चति बर्हिणः समदनो नीपः प्रदीपायते ।
संन्यासः कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा
विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र संतिष्ठते ॥ १४ ॥

**वसन्तसेना**—भाव, सुट्ठु दे भणिदम् । (क) एषा हि

मूढे निरन्तरपयोधरया मयैव
कान्तः सहाभिरमते यदि किं तवात्र ।
मां गर्जितैरपि मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १५ ॥

**विटः**—भवतु । एवं तावत् । उपालभ्यतां तावदियम् ।

**वसन्तसेना**—भाव, किमनया स्त्रीस्वभावदुर्विदग्धयोपालब्धया । पश्यतु भावः ।

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा ।
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः ॥ १६ ॥

**विटः**—वसन्तसेने, पश्य पश्य । अयमपरः

पवनचपलवेगः स्थूलधाराशरौघः
स्तनितपटहनादः स्पष्टविद्युत्पताकः ।
हरति करसमूहं खे शशाङ्कस्य मेघो
नृप इव पुरमध्ये मन्दवीर्यस्य शत्रोः ॥ १७ ॥

(क) भाव, सुष्ठु ते भणितम् ।

**गर्जन्तीति** ॥ १३ ॥ **पंकेति** । कण्ठं मुञ्चतीति । 'कण्ठो गले गलध्वाने' इति कोशः । लावण्ययोगवान् पूर्णं कण्ठं मुञ्चतीत्युत्प्रेक्षा (?) ॥ १४ ॥ **मूढे इति** । मूढे इति वसन्तसेनायाः साक्षेपसंबोधनम् । पयोधरो मेघः, स्तनौ च ॥ १५ ॥ **मेघा इति** ॥१६॥ अयमपर इति शत्रोः पुनर्मध्य इत्यर्थात् । **पवनेति** । करसमूहं

**वसन्तसेना**—एव्वं णेदम् । ता कधं एसो अवरो । (क)

एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरै-
गर्जद्भिः सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः ।
तत्किं प्रोषितभर्तृवध्यपटहो हा हा हताशो बकः
प्रावृट् प्रावृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन् ॥१८॥

**विटः**—वसन्तसेने, एवमेतत् । इदमपरं पश्य ।

बलाका पाण्डुरोष्णीषं विद्युदुत्क्षिप्तचामरम् ।
मत्तवारणसारूप्यं कर्तुकाममिवाम्बरम् ॥ १९ ॥

**वसन्तसेना**—भाव,पेक्ख पेक्ख । (ख)

एतैरार्द्रतमालपत्रमलिनैरापीतसूर्यं नभो
वल्मीकाः शरताडिता इव गजाः सीदन्ति धाराहताः ।
विद्युत्काञ्चनदीपिकेव रचिता प्रासादसंचारिणी
ज्योत्स्ना दुर्बलभर्तृकेव वनिता प्रोत्सार्य मेघैर्हृता ॥ २० ॥

**विटः**—वसन्तसेने, पश्य पश्य ।

एते हि विद्युद्गुणबद्धकक्षा गजा इवान्योन्यमभिद्रवन्तः ।
शक्राज्ञया वारिधराः सधारा गां रूप्यरज्ज्वेव समुद्धरन्ति २१

अपि च पश्य ।

महावाताध्मातैर्महिषकुलनीलैर्जलधरै-
श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः ।
इयं गन्धोद्दामा नवहरितशष्पाङ्कुरवती
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥ २२ ॥

**वसन्तसेना**—भाव, एसो अवरो । (ग)

---

(क) एवं न्विदम् । तत्कथमेषोऽपरः । (ख) भाव, पश्य पश्य ।
(ग) भाव, एषोऽपरः ।

---

अंशु–राजग्राह्यभागौ ॥१७॥ **एतैरिति** । प्रोषितभर्तृशब्दात् 'न नित्यः समासान्तः' इति न 'नद्यृतश्च' इति कप् ॥ १८ ॥ **बलाकेति** ॥ १९ ॥ **एतैरिति** ॥ २० ॥ **एत इति** । कक्षा मध्यबन्धनम् । गां भूमिम् ॥ २१ ॥ **महेति** । शष्पाङ्कुराः

एह्येहीति शिखण्डिनां पटुतरं केकाभिराक्रन्दितः
प्रोड्डीयेव बलाकया सरभसं सोत्कण्ठमालिङ्गितः ।
हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः
कुर्वन्नञ्जनमेचका इव दिशो मेघः समुत्तिष्ठति ॥ २३ ॥

**विटः**—एवमेतत् । तथा हि पश्य ।

निष्पन्दीकृतपद्मषण्डनयनं नष्टक्षपावासरं
विद्युद्भिः क्षणनष्टदृष्टतिमिरं प्रच्छादिताशामुखम् ।
निश्चेष्टं स्वपितीव संप्रति पयोधारागृहान्तर्गतं
स्फीताम्भोधरधामनैकजलदच्छत्रापिधानं जगत् ॥ २४ ॥

**वसन्तसेना**—भाव, एव्वं णेदम् । ता पेक्ख पेक्ख । (क)

गता नाशं तारा उपकृतमसाधाविव जने
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः ।
प्रकामान्तस्तप्तं त्रिदशपतिशस्त्रस्य शिखिना
द्रवीभूतं मन्ये पतति जलरूपेण गगनम् ॥ २५ ॥

अपि च पश्य ।

उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम् ।
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि ॥ २६ ॥

**विटः**—एवमेतत् ।

विद्युद्भिर्ज्वलतीव संविहसतीवोच्चैर्बलाकाशतै-
र्माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा ।
विस्पष्टाशनिनिस्वनेन रसतीवाघूर्णतीवानिलै-
र्नीलैः सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम् ॥ २७ ॥

**वसन्तसेना**—

जलधर निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम् ।
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥ २८ ॥

---

(क) भाव, एवं न्विदम् । तत्पश्य पश्य ।

---

संलग्नशरत्तुल्याः ॥ २२ ॥ **एहीति** । मेचकाः श्यामाः ॥ **निष्पन्दीति** ॥ २४ ॥ **गता इति** । गगनं जलरूपेण द्रवीभूतं पतति । त्रिदशपतिशस्त्रस्य वज्रस्य ॥ २५ ॥ **उन्नमतीति** ॥ २६ ॥ **विद्युद्भिरिति** ॥ २७ ॥ **जलध-**

मोः शक्र,

किं ते ह्यहं पूर्वरतिप्रसक्ता यत्त्वं नदस्यम्बुदसिंहनादैः ।
न युक्तमेतत्प्रियकाङ्क्षिताया मार्गं निरोद्धुं मम वर्षपातैः ॥२९॥

अपि च ।

यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोऽस्मीति ।
तद्वन्ममापि दुःखं निरपेक्ष निवार्यतां जलदः ॥ ३० ॥

अपि च ।

गर्ज वा वर्ष वा शक्र मुञ्च वा शतशोऽशनिम् ।
न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ ३१ ॥

यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः ।
अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि ॥ ३२ ॥

**विटः**—भवति, अलमलमुपालम्भेन । उपकारिणी तवेयम् ।

ऐरावतोरसि चलेव सुवर्णरज्जुः
शैलस्य मूर्ध्नि निहितेव सिता पताका ।
आखण्डलस्य भवनोदरदीपिकेय-
माख्याति ते प्रियतमस्य हि संनिवेशम् ॥ ३३ ॥

**वसन्तसेना**—भाव, एव्वं तं ज्जेव एदं गेहम् । (क)

**विटः**—सकलकलाभिज्ञाया न किंचिदिह तवोपदेष्टव्यमस्ति । तथापि स्नेहः प्रलापयति । अत्र प्रविश्य कोपोऽत्यन्तं न कर्तव्यः ।

यदि कुप्यसि नास्ति रतिः कोपेन विनाथवा कुतः कामः ।
कुप्य च कोपय च त्वं प्रसीद च त्वं प्रसादय च कान्तम् ॥३४॥

---

(क) भाव, एवं तदेवैतद्गेहम् ।

---

रेति ॥ २८ ॥ **किं त इति** । रतिप्रसक्ता संभोगेन प्रसक्ता । प्रियेण काङ्क्षितायाः ॥ २९ ॥ **यद्वदिति** । हे शक्र, यथा अहल्याया अप्राप्तिदुःखेन गौतमोऽस्मीत्यसत्यं ब्रूषे । हे निरुपेक्ष परपीडानभिज्ञ, त[द्व]न्ममापि दुःखं जानीहीत्यर्थात् । ततः किं कर्तुमुचितमित्याह—निवार्यतामिति । प्रियभवनगमनं प्रति विरोधकत्वादित्याशयः ॥ ३० ॥ **गर्जेति** ॥ ३१ ॥ **यदिति** ॥ ३२ ॥ **ऐरा-**

भवतु । एवं स्तावत् । भो भोः, निवेद्यतामार्यचारुदत्ताय ।

एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका ।
विद्युद्वारिदगर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी
पादौ नूपुरलग्नकर्दमधरौ प्रक्षालयन्ती स्थिता ॥ ३५ ॥

**चारुदत्तः**—(आकर्ण्य ।) वयस्य, ज्ञायतां किमेतदिति ।

**विदूषकः**—जं भवं आणवेदि । (वसन्तसेनामुपगम्य । सादरम् ।) सोत्थि भोदीए । (क)

**वसन्तसेना**—अज्ज, वन्दामि । साअदं अज्जस्स । (विटं प्रति ।) भाव, एसा छत्तधारिआ भावस्स ज्जेव भोदू । (ख)

**विटः**—(स्वगतम् ।) अनेनोपायेन निपुणं प्रेषितोऽस्मि । (प्रकाशम् ।) एवं भवतु । भवति वसन्तसेने,

साटोपकूटकपटानृतजन्मभूमेः
शाठ्यात्मकस्य रतिकेलिकृतालयस्य ।
वेश्यापणस्य सुरतोत्सवसंग्रहस्य
दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु ॥ ३६ ॥

(इति निष्क्रान्तो विटः ।)

**वसन्तसेना**—अज्ज मित्तेअ, कहिं तुम्हाणं जूदिअरो । (ग)

**विदूषकः**—(स्वगतम् ।) ही ही भो, जूदिअरो त्ति भणन्तीए अलंकिदो पिअवअस्सो । (प्रकाशम् ।) भोदि, एसो क्खु सुक्खरुक्खवाडिआए । (घ)

---

(क) यद्भवानाज्ञापयति । स्वस्ति भवत्यै ।

(ख) आर्य, वन्दे । स्वागतमार्यस्य । भाव, एषा छत्रधारिका भावस्यैव भवतु । (ग) आर्य मैत्रेय, कुत्र युष्माकं द्यूतकरः ।

(घ) आश्चर्यं भोः, द्यूतकर इति भणन्त्यालंकृतः प्रियवयस्यः । भवति, एष खलु शुष्कवृक्षवाटिकायाम् ।

---

**वत इति** ॥ ३३ ॥ **यदीति** ॥ ३४ ॥ **एषेति** ॥ ३५ ॥ **साटोपेति** । आटोपो दम्भः, कूटं माया, कपटं छद्म, अनृतं मृषाभाषणम् । निह्नवप्राकट्यभेदात्कूटकपटयोर्भेदः । एतेषां जन्मभूमेः । वेश्यापणो वेश्याव्यवहारः । व्यज्यकेत्यर्थः (?) । दाक्षिण्यपण्यप्रधानं निष्क्रयो मूल्यम् ॥ ३६ ॥ अपि पारयिष्यामि ॥

**वसन्तसेना**—अज्ज, का तुम्हाणं सुक्खरुक्खवाडिआ वुच्चदि । (क)

**विदूषकः**—भोदि, जहिं ण खाईअदि ण पीईअदि । (ख)

(वसन्तसेना स्मितं करोति ।)

**विदूषकः**—ता पविसदु भोदी । (ग)

**वसन्तसेना**—(जनान्तिकम् ।) एत्थ, पविसिअ किं मए भणिदव्वम् । (घ)

**चेटी**—जूदिअर, अवि सुहो दे पदोसो त्ति । (ङ)

**वसन्तसेना**—अवि पारइस्सम् । (च)

**चेटी**—अवसरो ज्जेव पारइस्सदि । (छ)

**विदूषकः**—पविसदु भोदी । (ज)

**वसन्तसेना**—(प्रविश्योपसृत्य च । पुष्पैस्ताडयन्ती ।) अइ जूदिअर, अवि सुहो दे पदोसो । (झ)

**चारुदत्तः**—(अवलोक्य ।) अये, वसन्तसेना प्राप्ता । (सहर्षमुत्थाय ।) अयि प्रिये,

सदा प्रदोषो मम याति जाग्रतः
सदा च मे निश्वसतो गता निशा ।
त्वया समेतस्य विशाललोचने
ममाद्य शोकान्तकरः प्रदोषकः ॥ २७ ॥

तत्स्वागतं भवत्यै । इदमासनम् । अत्रोपविश्यताम् ।

---

(क) आर्य, का युष्माकं शुष्कवृक्षवाटिकोच्यते ।

(ख) भवति, यत्र न खाद्यते न पीयते ।

(ग) तस्मात्प्रविशतु भवती ।

(घ) अत्र प्रविश्य किं मया भणितव्यम् ।

(ङ) द्यूतकर, अपि सुखस्ते प्रदोष इति ।

(च) अपि पारयिष्यामि । (छ) अवसर एव पारयिष्यति

(ज) प्रविशतु भवती । (झ) अयि द्यूतकर, अपि सुखस्ते चौरैरपहृतम् ।

**विदूषकः**—इदं आसणम् । उवविसदु भोदी । (क)

(वसन्तसेनासीना । ततः सर्व उपविशन्ति ।)

**चारुदत्तः**—वयस्य, पश्य पश्य ।

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥ ३८ ॥

तद्वयस्य, क्लिन्ने वाससी वसन्तसेनायाः । अन्ये प्रधानवाससी समुपनीयेतामिति ।

**विदूषकः**—जं भवं आणवेदि । (ख)

**चेटी**—अज्ज मित्तेअ, चिट्ठ तुमम् । अहं ज्जेव अज्जअं सुस्सूसइस्सम् । (ग) (तथा करोति ।)

**विदूषकः**—(अपवारितकेन ।) भो वअस्स, पुच्छामि दाव तत्थभोदिं किं पि । (घ)

**चारुदत्तः**—एवं क्रियताम् ।

**विदूषकः**—(प्रकाशम् ।) अध किंणिमित्तं उण ईदिसे पणट्ठचन्दालोए दुद्दिणअन्धआरे आअदा भोदी । (ङ)

**चेटी**—अज्जए, उजुओ बम्हणो । (च)

**वसन्तसेना**—णं णिउणोत्ति भणाहि । (छ)

**चेटी**—एसा क्खु अज्जआ एव्वं पुच्छिदुं आअदा—'केत्तिअं ताए रअणावलीए मुल्लं' त्ति (ज)

---

(क) इदमासनम् । उपविशतु भवती । (ख) यद्भवानाज्ञापयति ।
(ग) आर्य मैत्रेय, तिष्ठ त्वम् । अहमेवार्यां शुश्रूषयिष्यामि ।
(घ) भो वयस्य, पृच्छामि तावत्तत्रभवतीं किमपि ।
म॰ (ङ) अथ किंनिमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकार आगता
(ती । (च) आर्ये, ऋजुको ब्राह्मणः ।
एष खेछ) ननु निपुण इति भण ।
वत इति एषा खल्वार्या एवं प्रष्टुमागता—'कियत्तस्या रत्नावल्या मूआटोपो दम्भे ।
त्कूटकपटयोर्भे॰
त्यर्थः (?) । दा॰ ॥ वर्षोदकमिति ॥ ३८ ॥ आआविओ आचार्य उपदेष्टा (?)

**विदूषकः**—(जनान्तिकम् ।) भो, भणिदं मए, जधा अप्पमुल्ला रअणावली, बहुमुल्लं सुवण्णभण्डअम् । ण परितुट्टा । अवरं मग्गिदुं आअदा । (क)

**चेटी**—सा क्खु अज्जआए अत्तणकेरकेत्ति भणिअ जूदे हारिदा । सो अ सहिओ राअवात्थहारी ण जाणीअदि कहिं गदो त्ति । (ख)

**विदूषकः**—भोदि, मन्तिदं ज्जेव मन्तीअदि । (ग)

**चेटी**—जाव सो अण्णेसीअदि ताव एदं ज्जेव गेण्ह सुवण्णभण्डअम् । (घ) ( इति दर्शयति ।)

(विदूषको विचारयति ।)

**चेटी**—अदिमेत्तं अज्जो णिज्झाअदि । ता किं दिट्टपुरुव्वो दे । (ङ)

**विदूषकः**—भोदि, सिप्पकुसलदाए ओबन्धेदि दिट्ठिम् । (च)

**चेटी**—अज्ज, वञ्चिदोसि दिट्टीए । तं ज्जेव एदं सुवण्णभण्डअम् । (छ)

**विदूषकः**—(सहर्षं ।) भो वअस्स, तं ज्जेव एदं सुवण्णभण्डअम्, जं अम्हाणं गेहे चोरेहिं अवहिदम् । (ज)

**चारुदत्तः**—वयस्य,

---

(क) भोः, भणितं मया, यथाल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डम् । न परितुष्टा । अपरं याचितुमागता ।

(ख) सा खल्वार्यया आत्मीयेति भणित्वा द्यूते हारिता । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत गति ।

(ग) भवति, मन्त्रितमेव मन्त्र्यते ।

(घ) यावत्सोऽन्विष्यते तावदिदमेव गृहाण सुवर्णभाण्डम् ।

(ङ) अतिमात्रमार्यो निध्यायति । तत्किं दृष्टपूर्वं ते ।

(च) भवति, शिल्पकुशलतयावबध्नाति दृष्टिम् ।

(छ) आर्य, वञ्चितोऽसि दृष्ट्या । तदेवेदं सुवर्णभाण्डम् ।

(ज) भो वयस्य, तदेवेदं सुवर्णभाण्डम्, यदस्माकं गृहे चौरैरपहृतम् ।

योऽस्माभिश्चिन्तितो व्याजः कर्तुं न्यासप्रतिक्रियाम् ।
स एव प्रस्तुतोऽस्माकं किंतु सत्यं विडम्बना ॥ ३९ ॥

**विदूषकः**—भो वअस्स, सच्चं सवामि बम्हणेण । (क)

**चारुदत्तः**—प्रियं नः प्रियम् ।

**विदूषकः**—(जनान्तिकम् ।) भो, पुच्छामि णं कुदो एदं समासादिदं त्ति । (ख)

**चारुदत्तः**—को दोषः ।

**विदूषकः**—(चेट्याः कर्णे ।) एव्वं विअ । (ग)

**चेटी**—(विदूषकस्य कर्णे ।) एव्वं विअ । (घ)

**चारुदत्तः**—किमिदं कथ्यते । किं वयं बाह्याः ।

**विदूषकः**—(चारुदत्तस्य कर्णे ।) एव्वं विअ । (ङ)

**चारुदत्तः**—भद्रे, सत्यं तदेवेदं सुवर्णभाण्डम् ।

**चेटी**—अज्ज, अध इं । (च)

**चारुदत्तः**—भद्रे, न कदाचित्प्रियनिवेदनं निष्फलीकृतं मया । तद्गृह्यतां पारितोषिकमिदमङ्गुलीयकम् । (इत्यनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति ।)

**वसन्तसेना**—(आत्मगतम् ।) अदो ज्जेव कामीअसि । (छ)

**चारुदत्तः**—(जनान्तिकम् ।) भोः, कष्टम् ।

धनैर्वियुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति ॥४०॥

(क) भो वयस्य, सत्यं शपे ब्राह्मण्येन ।
(ख) भोः, पृच्छामि ननु कुत इदं समासादितमिति । (ग) एवमिव ।
(घ) एवमिव । (ङ) एवमिव ।
(च) आर्य, अथ किम् ।
(छ) अत एव काम्यसे ।

प्रेष्यतां भुज्यताम् (?) य इति । किं तु स एव व्याजो विडम्बनास्माकं प्रस्तुत आरब्धा ॥ ३९ ॥ अथवा सत्यमेवेदम् । अथवेति प्रकरणात्प्रतीयते । बम्हणेण

अपि च।

पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम्।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ ४१ ॥

अपि च।

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः।
यद्दृष्टपूर्वजनसंगमविस्मृताना-
मेवं भवन्ति विफलाः परितोषकालाः ॥ ४२ ॥

**विदूषकः**—भो, अलं अदिमेत्तं संतप्पिदेण। (प्रकाशं सपरिहासम्।) भोदि, समप्पीअदु ममकेरिआ ण्हाणसाडिआ। (क)

**वसन्तसेना**—अज्ज चारुदत्त, जुत्तं णेदं इमाए रअणावलीए इमं जणं तुलइदुम्। (ख)

**चारुदत्तः**—(सविलक्षस्मितम्।) वसन्तसेने, पश्य पश्य।

कः श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ ४३ ॥

**विदूषकः**—हञ्जे, किं भोदीए इध ज्जेव सुविदव्वम्। (ग)

**चेटी**—(विहस्य।) अज्ज मित्तेअ, अदिमेत्तं दाणिं उज्जुअं अत्ताणअं दंसेसि। (घ)

**विदूषकः**—भो वअस्स, एसो क्खु ओसारअन्तो विअ सुहो-

---

(क) भोः; अलमतिमात्रं संतापितेन। भवति, समर्प्यतां मम स्नानशाटिका।

(ख) आर्य चारुदत्त, युक्तं नेदमनया रत्नावल्या इमं जनं तूलयितुम्।

(ग) चेटि, किं भवत्या इहैव सुप्तव्यम्।

(घ) आर्य मैत्रेय, अतिमात्रमिदानीमृजुमात्मानं दर्शयसि।

---

ब्राह्मणेन ॥ **धनैरिति** ॥ ४० ॥ **पक्षेति** ॥ ४१ ॥ **शून्यैरिति**। यद्दृष्टेति। यतो यस्माद्दृष्टपूर्वस्य जनस्य संगमेनोत्तरलतया वर्तमानस्वदैन्यविस्मृतानां विस्मरणवतां पुंसाम् ॥ ४२ ॥ मत्संबन्धिनी स्नानशाटिका ॥ तूलयितुमिति। लुब्धालुब्धजिज्ञासया श(ब)हुमूल्याया रत्नावल्या अल्पमूल्यसुवर्ण-

चविट्टं जणं पुणोवि वित्थारिवारिधाराहिं पविट्ठो पज्जण्णो। (क)

**चारुदत्तः**—सम्यगाह भवान्।

अमूर्हि भित्त्वा जलदान्तराणि पङ्कान्तराणीव मृणालसूच्यः।
पतन्ति चन्द्रव्यसनाद्विमुक्ता दिवोऽश्रुधारा इव वारिधाराः॥ ४४॥

अपि च।

धाराभिरार्यजनचित्तसुनिर्मलाभि-
श्चण्डाभिरर्जुनशरप्रतिकर्कशाभिः।
मेघाः स्रवन्ति बलदेवपटप्रकाशाः
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः॥ ४५॥

प्रिये, पश्य पश्य।

एतैः पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः।
एषाम्भोदसमागमप्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत्समालिङ्गति॥ ४६॥

(वसन्तसेना शृङ्गारभावं नाटयन्ती चारुदत्तमालिङ्गति।)

**चारुदत्तः**—(स्पर्शं नाटयन्प्रत्यालिङ्ग्य।)

भो मेघ गम्भीरतरं नद त्वं तव प्रसादात्स्मरपीडितं मे।
संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम्॥ ४७॥

**विदूषकः**—दासीए पुत्त दुद्दिण, अणज्जो दाणिं सि तुमम्, जं अत्तभोदिं विज्जुआए भायावेसि। (ख)

**चारुदत्तः**—वयस्य, नार्हस्युपालब्धुम्।

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु।
असद्विधदुर्लभया यदहं प्रियया परिष्वक्तः॥ ४८॥

---

(क) भो वयस्य, एष खल्वपसारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारिवारिधाराभिः प्रविष्टः पर्जन्यः।

(ख) दास्याः पुत्र दुर्दिन, अनार्य इदानीमसि त्वम्, यदत्रभवतीं विद्युता भीषयसि।

---

भाण्डस्य कृते योगात्॥ **क इति**॥ ४३॥ **अमूरिति**॥ ४४॥ **धाराभिरिति**॥ ४५॥ **एतैरिति**। वर्णकं विलेपनम्॥ ४६॥ **भो मेघेति**॥ ४७॥ **वर्षशतमिति**। असद्विधदुर्लभया। दरिद्रस्य वेशावाप्त्यसंभवात्॥ ४८॥

अपि च । वयस्य,

धन्यानि तेषां खलु जीवितानि ये कामिनीनां गृहमागतानाम् ।
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति ॥४९॥

प्रिये वसन्तसेने,

स्तम्भेषु प्रचलितवेदिसंचयान्तं
शीर्णत्वात्कथमपि धार्यते वितानम् ।
एषा च स्फुटितसुधाद्रवानुलेपा-
त्सक्लिन्ना सलिलभरेण चित्रभित्तिः ॥ ५० ॥

(ऊर्ध्वमवलोक्य ।) अये इन्द्रधनुः । प्रिये, पश्य पश्य ।

विद्युज्जिह्वेनेदं महेन्द्रचापोच्छ्रितायतभुजेन ।
जलधरविवृद्धहनुना विजृम्भितमिवान्तरीक्षेण ॥ ५१ ॥

तदेहि । अभ्यन्तरमेव प्रविशावः । (इत्युत्थाय परिक्रामति ।)

तालीषु तारं विटपेषु मन्द्रं शिलासु रुक्षं सलिलेषु चण्डम् ।
संगीतवीणा इव ताड्यमानास्तालानुसारेण पतन्ति धाराः ॥५२॥

(इति निष्क्रान्ताः सर्वे ।)

**दुर्दिनो नाम पञ्चमोऽङ्कः ।**

---

**धन्यानीति** ॥ ४९ ॥ **स्तम्भेष्वित्यादि** । प्रकृतिच्छन्दसा । वितान चन्द्रातपः ॥ ५० ॥ **विद्युदिति** । आर्या । अनया च वेतालादिभयानकरूपवर्णनम् ॥ ५१ ॥ **तालीष्विति** । संगीतवीणा इव धाराः ॥ ५२ ॥

॥ इति दुर्दिनो नाम पञ्चमोऽङ्कः ॥

( ततः प्रविशति चेटी ।)

**चेटी**—कधं अज्ज वि अज्जआ ण विवुज्झदि । भोदु । पविसिअ पडिबोधइस्सम् । (क) (इति नाट्येन परिक्रामति ।)

( ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना ।)

**चेटी**—(निरूप्य ।) उत्थेदु उत्थेदु अज्जआ । पभादं संवुत्तम् ।(ख)

**वसन्तसेना**—(प्रतिबुद्धय ।) कधं रत्ति ज्जेव पभादं संवुत्तम् ।(ग)

**चेटी**—अम्हाणं एसो प्रभादो । अज्जआए उण रत्ति ज्जेव । (घ)

**वसन्तसेना**—हञ्जे, कहिं उण तुम्हाणं जूदिअरो । (ङ)

**चेटी**—अज्जए, वड्ढमाणअं समादिसिअ पुप्फकरण्डअं जिण्णुज्जाणं गदो अज्जचारुदत्तो । (च)

**वसन्तसेना**—किं समादिसिअ (छ)

**चेटी**—जोएहि रात्तीए पवहणम्, वसन्तसेना गच्छदु त्ति । (ज)

**वसन्तसेना**—हञ्जे, कहिं मए गन्तव्वम् । (झ)

**चेटी**—अज्जए, जहिं चारुदत्तो । (ञ)

**वसन्तसेना**—(चेटीं परिष्वज्य) हञ्जे, सुट्ठु ण निज्झाइदो रात्तीए ।

---

(क) कथमद्याप्यार्या न विबुध्यते । भवतु । प्रविश्य प्रतिबोधयिष्यामि ।

(ख) उत्तिष्ठतूत्तिष्ठत्वार्या । प्रभातं संवृत्तम् ।

(ग) कथं रात्रिरेव प्रभातं संवृत्तम् ।

(घ) अस्माकमेतत्प्रभातम् । आर्यायाः पुना रात्रिरेव ।

(ङ) चेटि, कुतः पुनर्युष्माकं द्यूतकरः ।

(च) आर्ये, वर्धमानकं समादिश्य पुष्पकरण्डकं जीर्णोद्यानं गत आर्यचारुदत्तः । (छ) किं समादिश्य ।

(ज) योजय रात्रौ प्रवहणम्, वसन्तसेना गच्छत्विति ।

(झ) चेटि, कुत्र मया गन्तव्यम् ।

(ञ) आर्ये, यत्र चारुदत्तः ।

---

जोएहि योजय अस्मद्विधइ अपर्याप्तम् (?) । यदृच्छासंबन्धि (?) । एतेन मृच्छ.

ता अज्ज पच्चक्खं पेक्खिस्सम् । हञ्जे, किं पविट्ठा अहं इह अब्भन्तरचदुस्सालअम् । (क)

**चेटी**—ण केवलं अब्भन्तरचदुस्सालअम् । सव्वजणस्स विहिअअं पविट्ठा । (ख)

**वसन्तसेना**—अवि संतप्पदि चारुदत्तस्स परिअणो । (ग)

**चेटी**—संतप्पिस्सदि । (घ)

**वसन्तसेना**—कदा । (ङ)

**चेटी**—जदो अज्जआ गमिस्सदि । (च)

**वसन्तसेना**—तदो मए पढमं संतप्पिदव्वम् । (सानुनयम् ।) हञ्जे, गेण्ह एदं रअणावलिम् । मम बहिणीआए अज्जाधूदाए गदुअ समप्पेहि । भणिदव्वं च—'अहं सिरिचारुदत्तस्स गुणणिज्जिदा दासी, तदा तुम्हाणं पि । ता एसा तुह ज्जेव कण्ठाहरणं होदु रअणावली । (छ)

**चेटी**—अज्जए, कुपिस्सदि चारुदत्तो अज्जाए दाव । (ज)

**वसन्तसेना**—गच्छ । ण कुपिस्सदि । (झ)

**चेटी**—(गृहीत्वा) जं आणवेदि । (इति निष्क्रम्य पुनः प्रविशति ।) अज्जए, भणादि अज्जा धूदा—'अज्जउत्तेण तुम्हाणं पसादीकिदा ।

---

(क) चेटि, सुष्ठु न निध्यातो रात्रौ । तदद्य प्रत्यक्षं प्रेक्षिष्ये । चेटि, किं प्रविष्टाहमिहाभ्यन्तरचतुःशालकम् ।

(ख) न केवलमभ्यन्तरचतुःशालकम् । सर्वजनस्यापि हृदयं प्रविष्टा ।

(ग) अपि संतप्यते चारुदत्तस्य परिजनः । (घ) संतप्स्यति ।

(ङ) कदा । (च) यदार्या गमिष्यति ।

(छ) तदा मया प्रथमं संतप्तव्यम् । चेटि, गृहाणेमां रत्नावलीम् । मम भगिन्या आर्याधूतायै गत्वा समर्पय । वक्तव्यं च—'अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी, तदा युष्माकमपि । तदेषा तवैव कण्ठाभरणं भवतु रत्नावली' ।

(ज) आर्ये, कुपिष्यति चारुदत्त आर्यायै तावत् ।

(झ) गच्छ । न कुपिष्यति ।

ण जुत्तं मम एदं गेण्हिदुम्। अज्जउत्तो ज्जेव मम आहरणविसेसो त्ति जाणादु भोदी' (क)

(ततः प्रविशति दारकं गृहीत्वा रदनिका।)

**रदनिका**—एहि वच्छ, सअडिआए कीलम्ह। (ख)

**दारकः**—(सकरुणम्।) रदणिए, किं मम एदाए मट्टिआसअडिआए। तं ज्जेव सोवण्णसअडिअं देहि। (ग)

**रदनिका**—(सनिर्वेदं निश्वस्य।) जाद, कुदो अम्हाणं सुवण्णववहारो। तादस्स पुणो वि रिद्धीए सुवण्णसअडिआए कीलिस्ससि। ता जाव विणोदेमि णम्। अज्जआवसन्तसेणाआए समीवं उवसप्पिस्सम्। (उपसृत्य।) अज्जए, पणमामि। (घ)

**वसन्तसेना**—रदणिए, साअदं दे। कस्स उण अअं दारओ। अणलंकिदसरीरो वि चन्दमुहो आणन्देदि मम हिअअम्। (ङ)

**रदनिका**—एसो क्खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णाम। (च)

**वसन्तसेना**—(बाहू प्रसार्य।) एहि मे पुत्तअ, आलिङ्ग। (इत्यङ्के उपवेश्य।) अणुकिदं अणेण पिदुणो रूवम्। (छ)

---

(क) यदाज्ञापयति। आर्ये, भणत्यार्या धूता—'आर्यपुत्रेण युष्माकं प्रसादीकृता। न युक्तं ममैतां ग्रहीतुम्। आर्यपुत्र एव ममाभरणविशेष इति जानातु भवती। (ख) एहि वत्स, शकटिकया क्रीडावः।

(ग) रदनिके किं ममैतया मृत्तिकाशकटिकया। तामेव सौवर्णशकटिकां देहि।

(घ) जात, कुतोऽस्माकं सुवर्णव्यवहारः। तातस्य पुनरपि ऋद्ध्या सुवर्णशकटिकया क्रीडिष्यसि। तद्यावद्विनोदयाम्येनम्। आर्यावसन्तसेनायाः समीपमुपसर्पिष्यामि। आर्ये, प्रणमामि।

(ङ) रदनिके, स्वागतं ते। कस्य पुनरयं दारकः। अनलंकृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम्।

(च) एष खल्वार्यचारुदत्तस्य पुत्रो रोहसेनो नाम।

(छ) एहि मे पुत्रक, आलिङ्ग। अनुकृतमनेन पितू रूपम्।

**रदनिका**—ण केवलं रूवम्, सीलं पि तक्केमि । एदिणा अज्जचारुदत्तो अत्ताणअं विणोदेदि । (क)

**वसन्तसेना**—अध किंणिमित्तं एसो रोअदि । (ख)

**रदनिका**—एदिणा पडिवेसिअगहवइदारअकेरिआए सुवण्णसअडिआए कीलिदम् । तेण अ सा णीदा । तदो उण तं मग्गन्तस्स मए इअं मट्टिआसअडिआ कदुअ दिण्णा । तदो भणादि—'रदणिए, किं मम एदाए मट्टिआसअडिआए । तं ज्जेव सोवण्णसअडिअं देहि' त्ति । (ग)

**वसन्तसेना**—हद्धी हद्धी । अअं पि णाम परसंपत्तीए संतप्पदि । भअवं कअन्त, पोक्खरवत्तपडिदजलबिन्दुसरिसेहिं कीलसि तुमं पुरिसभाअधेएहिं । (इति साम्रा।) जाद, मा रोद । सोवण्णसअडिआए कीलिस्ससि । (घ)

**दारकः**—रदणिए, का एसा । (ङ)

**वसन्तसेना**—पिदुणो दे गुणणिज्जिदा दासी । (च)

**रदनिका**—जाद, अज्जआ दे जणणी भोदि । (छ)

---

(क) न केवलं रूपम्, शीलमपि तर्कयामि । एतेनार्यचारुदत्त आत्मानं विनोदयति । (ख) अथ किंनिमित्तमेष रोदिति ।

(ग) एतेन प्रतिवेशिकगृहपतिदारकस्य सुवर्णशकटिकया क्रीडितम् । तेन च सा नीता । ततः पुनस्तां याचतो मयेयं मृत्तिकाशकटिका कृत्वा दत्ता । ततो भणति—'रदनिके, किं ममैतया मृत्तिकाशकटिकया । तामेव सौवर्णशकटिकां देहि' इति ।

(घ) हा धिक् हा धिक् । अयमपि नाम परसंपत्त्या संतप्यते । भगवन्कृतान्त, पुष्करपत्रपतितजलबिन्दुसदृशैः क्रीडसि त्वं पुरुषभागधेयैः । जात मा रुदिहि । सौवर्णशकटिकया क्रीडिष्यसि । (ङ) रदनिके, कैषा ।

(च) पितुस्ते गुणनिर्जिता दासी ।

(छ) जात, आर्या ते जननी भवति ।

---

कटेन प्रतिवेशिकगृहपतिदारकसंबन्धिन्या सुवर्णशकटिकया क्रीडितम् । तेन प्रति-

**दारकः**—रदणिए, अलिअं तुमं भणासि । जइ अम्हाणं अज्जआ जणणी ता कीस अलंकिदा । (क)

**वसन्तसेना**—जाद, मुद्धेण मुहेण अदिकरुणं मन्तेसि । (नाट्येनाभरणान्यवतार्य रुदती ।) एसा दाणिं दे जणणी संवुत्ता । ता गेण्ह एदं अलंकारअम् । सोवण्णसअडिअं घडावेहि । (ख)

**दारकः**—अवेहि । ण गेण्हिस्सम् । रोदसि तुमम् । (ग)

**वसन्तसेना**—(अश्रूणि प्रमृज्य ।) जाद, ण रोदिस्सम् । गच्छ । कील । (अलंकारैर्मृच्छकटिकं पूरयित्वा ।) जाद, कारेहि सोवण्णसअडिअम् । (घ)

(इति दारकमादाय निष्क्रान्ता रदनिका ।)

(प्रविश्य प्रवहणाधिरूढः)

**चेटः**—लदणिए, लदणिए, णिवेदेहि अज्जआए वशन्तशेणाए—'ओहालिअं पक्खदुआलए शज्जं पवहणं चिट्ठदि' । (ङ)

(प्रविश्य)

**रदनिका**—अज्जए, एसो वड्ढमाणओ विण्णवेदि—'पक्खदुआरए सज्जं पवहणं' त्ति । (च)

---

(क) रदनिके, अलीकं त्वं भणसि । यद्यस्माकमार्या जननी, तत्किमर्थमलंकृता ।

(ख) जात, मुग्धेन मुखेनातिकरुणं मन्त्रयसि । एषेदानीं ते जननी संवृत्ता । तद्गृहाणैतमलंकारम् । सौवर्णशकटिकां कारय ।

(ग) अपेहि । न ग्रहीष्यामि । रोदिषि त्वम् ।

(घ) जात, न रोदिष्यामि । गच्छ । क्रीड । जात, कारय सौवर्णशकटिकाम् ।

(ङ) रदनिके रदनिके, निवेदयार्यायै वसन्तसेनायै—'अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति' ।

(च) आर्ये एष वर्धमानको विज्ञापयति—'पक्षद्वारे सज्जं प्रवहणम्' इति ।

---

नेशिगृहपतिदारकेण ॥ तव पितुर्गुणनिर्जिता दासी ॥ अलिअं अलीकम् । असत्यमिति यावत् ॥ बालहस्ताभ्यां सुवर्णपूर्णां शकटिकां दारकं च स्वयं गृहीत्वा

**वसन्तसेना**—हञ्जे, चिट्ठदु मुहुत्तअम् । जा[क्रान्ता ।)] पसाधेमि । (क) [रु]ह्य च ।) किं

**रदनिका**—(निष्क्रम्य ।) वड्ढमाणआ, चिट्ठ मुहुत्त ज्जेव दंसणं अज्जआ अत्ताणअं पसाधेदि । (ख)

**चेटः**—ही ही भो, मए वि जाणत्थलके विशुमलि[दे ।] जाव गेण्हिअ आअच्छामि । एदे णश्शालज्जुकडुआ [बइल्ला ।] [भ]ोदु । पवहणेण ज्जेव गदागदिं कलिश्शम् । (ग) (इति निष्क्रान्त[श्चेटः । इति प्रव]हणे ।

**वसन्तसेना**—हञ्जे, उवणेहि मे पसाहणम् । अत्ताणअं [प]साधइस्सम् । (घ) (इति प्रसाधयन्ती स्थिता ।)

(प्रविश्य प्रवहणाधिरूढः)

**स्थावरकश्चेटः**—आण्णत्तम्हि लाअशालअशंठाणेण—'थावलआ ... गेण्हिअ पुप्फकलण्डअं जिण्णुज्जाणं तुलिदं आअच्छोणं भेदि' भोदु । तहिं ज्जेव गच्छामि । वहध बइल्ला, वहध । (परिक्रम्य। ... क्य च ।) कधं गामशअलेहिं लुद्धे मग्गे । किं दाणिं एत्थ कलइश्शम् । (साटोपम् ।) अले ले, ओशलध ओशलध । (आकर्ण्य ।) किं भणाध—'एशे कश्शकेलके पवहणे' त्ति । एशे लाअशालअशंठाणकेलके पवहणे त्ति । ता शिग्घं ओशलध । (अवलोक्य ।) कधम्, एशे अवले शहिअं विअ मं पेक्खिअ शहश ज्जेव जूदपलाइदे विअ जूदिअले ओहालिअ अत्ताणअं अण्णदो अवक्कन्ते । ता को उण एशे । अधवा किं मम एदिणा । तुलिदं

(क) चेटि, तिष्ठतु मुहूर्तकम् । यावदहमात्मानं प्रसाधयामि ।

(ख) वर्धमानक, तिष्ठ मुहूर्तकम् । यावदार्यात्मानं प्रसाधयति ।

(ग) ही ही भोः, मयापि यानास्तरणं विस्मृतम् । तद्यावद्गृहीत्वागच्छामि । एते नासिकारज्जुकटुका बलीवर्दाः । भवतु । प्रवहणेनैव गतागतिं करिष्यामि ।

(घ) चेटि उपनय मे प्रसाधनम् । आत्मानं प्रसाधयिष्यामि ।

निष्क्रान्ता ॥ उद्घाटितं पक्षद्वारकम् (?) ॥ ही ही इत्यकस्मात्स्मरणविषयेण । जाणत्थलके यानास्तरणकम् । णस्साकडुआ नासिकारज्ज्वा दुःसहाः । अतोऽतिक्रमः संभाव्यते । 'णस्साकडुआ' इत्यपि पाठः । तत्र नस्याकटुका इत्यर्थः । बइल्ला बलीवर्दाः ॥ द(घू)तपलायित इव द्यूतकरः सभिकमिव मां दृष्ट्वा प्रच्छादितश-

**दारकः**—रर्द्ा ले गामलुआ, ओशलध ओशलध। किं भ-
अज्जआ जणणी ळ्अं चिट्ठ। चक्कपलिवट्टिं देहि'त्ति। अले ले, लाअ-
**वसन्तसेना**केलके हग्गे शूले चक्कपलिवट्टि दइश्शम्। अघवा
(नाट्येनाभरणान्य तवश्शी। ता एव्वं कलेमि। एदं पवहणं अज्जचा-
गेण्ह एदं अ रुक्खवाडिआए पक्खदु आलए थावेमि। (इति प्रवहणं
**दारकः**) एशे म्हि आअदे। (क) (इति निष्क्रान्तः।)
**वसन्त**टी—भज्जए, णेमिसद्दो विअ सुणीअदि। ता आअदो पव-
कील। (
। (ख)
डिअम्
**वसन्तसेना**—हञ्जे, गच्छ। तुवरदि मे हिअअम्। ता आदे-
हि पक्खदुआरअम्। (ग)

**चेटी**—एदु एदु अज्जआ। (घ)

ण **वसन्तसेना**—(परिक्रम्य।) हञ्जे, वीसम तुमम्। (ङ)

---

(क) आज्ञप्तोऽस्मि राजश्यालकसंस्थानेन—'स्थावरक, प्रव ं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छ' इति। भवतु। तत्रैव गच्छामि। वहतं बलीवर्दाः, वहतम्। कथं ग्रामशकटै रुद्धो मार्गः। किमिदानीमत्र करिष्यामि। अरे रे, अपसरत अपसरत। किं भणथ—'एतत्कस्य प्रवहणम्' इति। एतद्राजश्यालकसंस्थानस्य प्रवहणमिति। तच्छीघ्रमपसरत। कथम्, एषोपरः सभिकमिव मां प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकरोऽपवार्यात्मानमन्यतोऽपक्रान्तः। त त्कः पुनरेषः। अथवा किं ममैतेन। त्वरितं गमिष्यामि। अरे रे ग्राम्याः, अपसरत अपसरत। किं भणथ—'मुहूर्तकं तिष्ठ। चक्रपरिवृत्तिं देहि' इति। अरे रे, राजश्यालकसंस्थानस्याहं शूरश्चक्रपरिवृत्तिं दास्यामि। अथवा एष एकाकी तपस्वी। तदेवं करोमि। एतत्प्रवहणमार्यचारुदत्तस्य वृक्षावाटिकायाः पक्षद्वारके स्थापयामि। एषोऽस्म्यागतः।

(ख) आर्ये, नेमिशब्द इव श्रूयते। तदागतं प्रवहणम्।

(ग) चेटि, गच्छ। त्वरयति मे हृदयम्। तदादिश पक्षद्वारम्।

(घ) एत्वेत्वार्या। (ङ) चेटि, विश्राम्य त्वम्।

---

रीरः। एतेनार्यकस्य पलायनमुपक्षिप्तम्। गामेलुआ ग्राम्याः। चक्कपरिवट्टिअं चक्रपरिवृत्तिम्। शूले शूरः। एआई तवस्सी एकाकी वराकः। एशे आअदे

**चेटी**—जं अज्जआ आणवेदि । (क) (इति निष्क्रान्ता ।)

**वसन्तसेना**—(दक्षिणाक्षिस्पन्दं सूचयित्वा प्रवहणमधिरुह्य च ।) किं ण्णेदं फुरदि दाहिणं लोअणम् । अधवा चारुदत्तस्स ज्जेव दंसणं अणिमित्तं पमज्जइस्सदि । (ख)

(प्रविश्य)

**स्थावरकश्चेटः**—ओशालिदा मए शअडा । ता जाव गच्छामि । (इति नाट्येनाधिरुह्य चालयित्वा । स्वगतम् ।) भालिके पवहणे । अधवा चक्कपलिवट्टिआए पलिश्शन्तश्श भालिके पवहणे पडिभाशेदि । भोदु । गमिश्शम् । जाध गोणा, जाध । (ग)

(नेपथ्ये ।)

अरे रे दोवारिआ, अप्पमत्ता सएसु सएसु गुम्मट्ठाणेसु होध । एसो अज्ज गोवालदारओ गुत्तिअं भञ्जिअ गुत्तिवालअं वावादिअ वन्धणं भेदिअ परिब्भट्टो अवक्कमदि । ता गेण्हध गेण्हध । (घ)

(प्रविश्यापटीक्षेपेण संभ्रान्त एकचरणलग्ननिगडोऽवगुण्ठित आर्यकः परिक्रामति ।)

**चेटः**—(स्वगतम् ।) महन्ते णअलीए शंभमे उप्पण्णे । ता तुलिदं तुलिदं गमिश्शम् । (ङ) (इति निष्क्रान्तः ।)

---

(क) यदार्याज्ञापति ।

(ख) किं न्विदं स्फुरति दक्षिणं लोचनम् । अथवा चारुदत्तस्यैव दर्शनमनिमित्तं प्रमार्जयिष्यति ।

(ग) अपसारिता मया शकटाः । तद्यावद्गच्छामि । भारवत्प्रवहणम् । अथवा चक्रपरिवर्तनेन परिश्रान्तस्य भारवत्प्रवहणं प्रतिभासते । भवतु । गमिष्यामि । यातं गावौ, यातम् ।

(घ) अरे रे दौवारिकाः, अप्रमत्ताः स्वेषु स्वेषु गुल्मस्थानेषु भवत । एषोऽद्य गोपालदारको गुप्तिं भङ्क्त्वा गुप्तिपालकं व्यापाद्य बंन्धनं भित्त्वा परिभ्रष्टोऽपक्रामति । तद्गृह्णीत गृह्णीत ।

(ङ) महान्नगर्यां संभ्रम उत्पन्नः । तत्त्वरितं त्वरितं गमिष्यामि ।

Police Station

---

इति चक्रपरिवृत्तिदानार्थम् एतेन शकारस्य काकनेत्रमुक्तम् (?) । अतोपि च शकारलाघवमुक्तमित्यवधेयम् ॥ भालिके भ(भा)रवत् । सभारमित्यर्थः । मत्वर्थीयः । गोणा गावः ॥ सकलानि यानि पदानि मश्वानि (?) । पत्रं प्रवहणादि । गुम्मष्ठाणेसु । लेपो जीमूतरव्यस्थाने (?) । परिब्भट्टो बन्धनभेदादपगतः । ता-

**आर्यकः**—

हित्वाहं नरपतिबन्धनापदेश-
व्यापत्तिव्यसनमहार्णवं महान्तम् ।
पादाग्रस्थितनिगडैकपाशकर्षी
प्रभ्रष्टो गज इव बन्धनाद्भ्रमामि ॥ १ ॥

भोः, अहं खलु सिद्धादेशजनितपरित्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढागारे बन्धनेन बद्धः । तस्माच्च प्रियसुहृच्छर्विलकप्रसादेन बन्धनात्परिभ्रष्टोऽस्मि । ( अश्रूणि विसृज्य । )

भाग्यानि मे यदि तदा मम कोऽपराधो
यद्बन्यनाग इव संयमितोऽस्मि तेन ।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या
गम्यो नृपो बलवता सह को विरोधः ॥ २ ॥

तत्कुत्र गच्छामि मन्दभाग्यः । (विलोक्य ।) इदं कस्यापि साधोरनावृतपक्षद्वारं गेहम् ।

इदं गृहं भिन्नमदत्तदण्डो विशीर्णसंधिश्च महाकपाटः ।
ध्रुवं कुटुम्बी व्यसनाभिभूतां दशां प्रपन्नो मम तुल्यभाग्यः ॥३॥

तदत्र तावत्प्रविश्य तिष्ठामि ।

(नेपथ्ये ।)

जाध गोणा, जाध । (क)

**आर्यकः**—( आकर्ण्य ।) अये, प्रवहणमित एवाभिवर्तते ।

भवेद्गोष्ठीयानं न च विषमशीलैरधिगतं
वधूसंयानं वा तदभिगमनोपस्थितमिदम् ।
बहिर्नेतव्यं वा प्रवरजनयोग्यं विधिवशा-
द्विविक्तत्वाच्छून्यं मम खलु भवेद्दैवविहितम् ॥ ४ ॥

---

(क) यातं गावौ, यातम् ।

---

गेण्हध ततो धारयत ॥ **हित्वेति** । व्यसनं महार्णवम् । संघाताजन्यत्वेन (?) संबन्धेन ॥ १ ॥ **भाग्यानीति** । गम्यो नृपः । सर्वेषां सेव्यो हि राजेत्यर्थः ॥ २ ॥ **इदमिति** ॥ ३ ॥ **भवेदिति** ॥ ४ ॥ सुवृत्तं सुव्य-

(ततः प्रवहणेन सह प्रविश्य)

**वर्धमानकश्चेटः**—हीमाणहे । आणीदे मए जाणत्थलके । लदणिए, णिवेदेहि अज्जआए वशन्तशेणाए—'अवत्थिदे शज्जे पवहणे अहिलुहिअ पुप्फकलण्डअं जिण्णुज्जाणं गच्छदु अज्जआ' । (क)

**आर्यकः**—(आकर्ण्य ।) गणिकाप्रवहणमिदम् । बहिर्यानं च । भवतु । अधिरोहामि । (इति स्वैरमुपसर्पति ।)

**चेटः**—(श्रुत्वा ।) कधं णेउलशद्दे । ता आअदा क्खु अज्जआ । अज्जए, इमे णश्शकड्डुआ बइल्ला । ता पिट्ठदो ज्जेव आलुहदु अज्जआ । (ख)

(आर्यकस्तथा करोति ।)

**चेटः**—पादुप्फालचालिदाणं णेउलाणं वीशन्तो शद्दो । भलक्कन्ते अ पवहणे । तथा तक्केमि शंपदं अज्जआए आलूढाए होदव्वम् । ता गच्छामि । जाध गोणा, जाध । (ग) (इति परिक्रामति ।)

captain of the town guard

(प्रविश्य ।)

**वीरकः**—अरे रे, अरे जअ-जअमाण-चन्दणअ-मङ्गल-फुल्लभद्दप्पमुहा,

किं अच्छध वीसद्धा जो सो गोवालदारओ बद्धो ।
भेत्तूण समं वच्चइ णरवइहिअअं अ बन्धणं चावि ॥ ५ ॥

अले, पुरत्थिमे पदोलीदुआरे चिट्ठ तुमम् । तुमं पि पच्छिमे, तुमं

---

(क) आश्चर्यम् । आनीतं मया यानास्तरणम् । रदनिके, निवेदयार्यायै वसन्तसेनायै—'अवस्थितं सज्जं प्रवहणमधिरुह्य पुष्पकरण्डकं जीर्णोद्यानं गच्छत्वार्या' ।

(ख) कथं नूपुरशब्दः । तदागता खल्वार्या । आर्ये, इमौ नासिकारज्जुकटुकौ बलीवर्दौ । तत्पृष्ठत एवारोहत्वार्या ।

(ग) पादोत्फालचालितानां नूपुराणां विश्रान्तः शब्दः । भाराक्रान्तं च प्रवहणम् । तथा तर्कयामि सांप्रतमार्ययारूढया भवितव्यम् । तद्गच्छामि । यातं गावौ, यातम् ।

---

क्तम् ॥ जय-जयमान-चन्दनक-मङ्गलक-पुण्योटकमुखाः । **किं अच्छधेत्यादि** । गाथा । किं तिष्ठत विश्वस्ता योऽसौ गोपालदारको बद्धः । भित्त्वा समं व्रजति नरपतिहृदयं च बन्धनं चापि ॥ ५ ॥ पुरत्थिमे पूर्वस्मिन् ॥ वीरक वि-

१३

पि दक्खिणे, तुमं पि उत्तरे । जो वि एसो पाआरखण्डो, एदं अहिरुहिअ चन्दणेण समं गदुअ अवलोएमि । एहि चन्दणअ, एहि । इदो दाव । (क)

(प्रविश्य संभ्रान्तः)

चन्दनकः—अरे रे वीरअ विसल्ल-भीमङ्गअ-दण्डकालअ-दण्ड-सूरप्पमुहा,

आअच्छध वीसत्था तुरिअं जत्तेह लहु करेज्जाह ।
लच्छी जेण ण रण्णोपहवइ गोत्तन्तरं गन्तुम् ॥ ६ ॥

अवि अ ।

उज्जाणेसु सहासु अ मग्गे णअरीअ आवणे घोसे ।
तं तं जोहह तुरिअं सङ्का वा जाअए जत्थ ॥ ७ ॥

रे रे वीरअ किं किं दरिसेसि भणाहि दाव वीसद्धम् ।
भेत्तूण अ बन्धणअं को सो गोवालदारअं हरइ ॥ ८ ॥

कस्सट्ठमो दिणअरो कस्स चउत्थो अ वट्टए चन्दो ।
छट्ठो अ भग्गवगहो भूमिसुओ पञ्चमो कस्स ॥ ९ ॥

---

(क) अरे रे, अरे जय-जयमान-चन्दनक-मङ्गल पुष्पभद्रप्रमुखाः,

किं स्थ विश्रब्धाः यः स गोपालदारको बद्धः ।
भित्त्वा समं व्रजति नरपतिहृदयं च बन्धनं चापि ॥

अरे, पुरस्तात्प्रतोलीद्वारे तिष्ठ त्वम् । त्वमपि पश्चिमे, त्वमपि दक्षिणे, त्वमप्युत्तरे । योऽप्येष प्राकारखण्डः, एतमधिरुह्य चन्दनेन समं गत्वावलोकयामि । एहि चन्दनक, एहि । इतस्तावत् ।

---

शल्य-भीमाङ्गद-दण्डकाल-दण्डशूरप्रमुखाः । **आअच्छधेति** । गाथापञ्चकम् । आगच्छत विश्वस्तास्त्वरितं यतत लघु कुरुत । लक्ष्मीर्येन । न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ॥ ६ ॥ उद्यानेषु सभासु च मार्गे नगर्या आपणे घोषे । तत्तद्योजयत त्वरिता शङ्का वा जायते यत्र ॥ ७ ॥ अरे रे वीरक किं किं दर्शयसि ब्रवी ( ब्रू ) हि तावद्विश्वस्तम् । मोचयित्वा बन्धनकं कोऽसौ गोपालकं हरति ॥ ८ ॥ कस्याष्टमो दिनकरः कस्य चतुर्थश्च वर्तते चन्द्रः । षष्ठश्च भार्ग-

भण कस्स जम्मछट्ठो जीवो णवमो तहेअ सूरसुओ ।
जीअन्ते चन्दणए को सो गोवालदारअं हरइ ॥ १० ॥ (क)

**वीरकः**—भड चन्दणआ,

अवहरइ कोवि तुरिअं चन्दणअ सवामि तुज्ज हिअएण ।
जह अद्धुइददिणअरे गोवालअदारओ खुडिदो ॥ ११ ॥ (ख)

---

(क) अरे रे वीरक-विशल्य-भीमाङ्गद-दण्डकाल-दण्डशूरप्रमुखाः,

आगच्छत विश्वस्तास्त्वरितं यतध्वं लघु कुरुत ।
लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ॥

अपि च ।

उद्यानेषु सभासु च मार्गे नगर्यामापणे घोषे ।
तं तमन्वेषयत त्वरितं शङ्का वा जायते यत्र ॥
रे रे वीरक किं किं दर्शयसि भणसि तावद्विश्रब्धम् ।
भित्त्वा च बन्धनकं कः स गोपालदारकं हरति ॥
कस्याष्टमो दिनकरः कस्य चतुर्थश्च वर्तते चन्द्रः ।
षष्ठश्च भार्गवग्रहो भूमिसुतः पञ्चमः कस्य ॥
भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः ।
जीवति चन्दनके कः स गोपालदारकं हरति ॥

(ख) भट चन्दनक,

अपहरति कोऽपि त्वरितं चन्दनक शपे तव हृदयेन ।
यथार्धोदितदिनकरे गोपालदारकः खुटितः ॥

---

वग्रहो भूमिसुतः पञ्चमः कस्य ॥ ९ ॥ भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः । जीवति चन्दनके कोऽसौ गोपालकं हरति ॥ १० ॥ 'रुक्त्रासौ चाष्टमस्थे भवन्ति (ति) सुवच (द) ना अद्यापि चलिते (न स्वापि वनिता)' इत्यष्टमरविफलम् । 'चतुर्थेऽविश्वासः शिशुलिन (खरिणि) भुजङ्गेन सदृशः' इति [ चतुर्थ] चन्द्रफलम् । 'षष्ठो भृगुः परिभव [स]रोगतापदः' [इति षष्ठभार्गवफलम्] । 'विष(रिपु)गदकोपभयानि पञ्चमे तनयकृताश्च शुचो महीसुते । क्षि(शु)तिरपि नाद्य(स्य) भवेच्चिरं(च्चिरं भवेत् ) स्थिरा शिरसि कपैरिव मालती कृता ॥' [इति पञ्चममङ्गलफलम् ] । 'जीवे जन्मन्यपश(ग) तधनीः (नधीः) स्थानभ्रंशो(भ्रष्टो) बहुकलहोद्युतः' [ इति जन्मस्थगुरुफलम् ] । 'न सश्री ( स्त्री ) वदनं तिलकोज्ज्वलं न वच (चव) नं शिखिकोकिलता (ना)दितम् । हरिणप्लुतसारस (शावविं) च्चित्रितं वि(रि) पुण (ग)ते मनसः मु(सु) खदं गुरौ ॥' [इति]षष्ठजीवफलम् । 'गच्छत्यध्वानं सप्तमे चाष्टमे व(च) हीनः स्त्रीपुत्रैः सूर्यजे दीन-

**चेटः**—जाध गोणा, जाध। (क)

**चन्दनकः**—(दृष्ट्वा।) अरे रे, पेक्ख पेक्ख।

ओहारिओ पवहणो वच्चइ मज्झेण राअमग्गस्स।
एदं दाव विआरह कस्स कहिं पवसिओ पवहणो त्ति॥१२॥(ख)

**वीरकः**—(अवलोक्य।) अरे पवहणवाहआ, मा दाव एवं पवहणं वाहेहि। कस्सकेरकं एदं पवहणम्। को वा इध आरूढो। कहिं वा वज्जइ। (ग)

**चेटः**—एशे क्खु पवहणे अज्जचालुदत्ताह केलके। इध अज्जआ वशन्तशेणा आलूढा पुप्फकरण्डअं जिण्णुज्जाणं कीलिदुं चालुदत्तश्श णीअदि। (घ)

**वीरकः**—(चन्दनमुपसृत्य।) एसो पवहणवाहओ भणादि—'अज्जचालुदत्तस्स पवहणम्। वशन्तशेणा आलूढा। पुप्फकरण्डअं जिण्णुज्जाणं णीअदि' त्ति (ङ)

---

(क) यातं गावौ, यातम्। (ख) अरे रे, पश्य पश्य।

covered अपवारितं प्रवहणं व्रजति मध्येन राजमार्गस्य।
एतत्तावद्विचारय कस्य कुत्र प्रोषितं प्रवहणमिति॥ gone

(ग) अरे प्रवहणवाहक, मा तावदेतत्प्रवहणं वाहय। कस्यैतत्प्रवहणम्। को वा इहारूढः। कुत्र वा व्रजति।

(घ) एतत्खलु प्रवहणमार्यचारुदत्तस्य। इहार्या वसन्तसेनारूढा। पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य नीयते।

(ङ) एष प्रवहणवाहको भणति—'आर्यचारुदत्तस्य प्रवहणम्। वसन्तसेनारूढा। पुष्पकरण्डकं जीर्णोद्यानं नीयते' इति।

---

चेष्टः। तद्वद्धर्मस्थे वरैक्क(ह)द्रोगवत्या(वन्धै)ध(र्ध)र्मोऽस्तु(प्यु)छिद्येत वैर्थ-(श्र)देवी क्रियाभ्यः(द्यः)॥' इति नवमशनैश्चरफलम्॥ भट चन्दनकेति संबोधनम्। **अवहरइ इत्यादि**। गाथा। अव(प)हरति कोऽपि त्वरितं चन्दनक शपे तव हृदयेन। यथार्थोदितदिनकरे गोपालदारकः खण्डितः॥ ११॥ **उहारिओ इत्यादि**। गाथा। उद्घाटितं प्रवहणं व्रजति मध्येन राजमार्गस्य। एवं तावद्विचारयत कस्य कुत्र वा प्रवसितं प्रवहणमिति॥ १२॥ यच्छ-

चन्दनकः—ता गच्छदु । (क)

वीरकः—अणवलोइदो ज्जेव । (ख)

चन्दनकः—अध इं । (ग)

वीरकः—कस्स पच्चएण । (घ)

चन्दनकः—अज्जचारुदत्तस्स । (ङ)

वीरकः—को अज्जचारुदत्तो, का वा वसन्तसेणा, जेण अणवलोइदं वज्जइ । (च)

चन्दनकः—अरे, अज्जचारुदत्तं ण जाणासि, ण वा वसन्तसेणिअम् । जइ अज्जचारुदत्तं वसन्तसेणिअं वा ण जाणासि, ता गअणे जोण्हासहिदं चन्दं पि तुमं ण जाणासि ।

को तं गुणारविन्दं सीलमिअङ्कं जणो ण जाणादि ।
आवण्णदुक्खमोक्खं चउसाअरसारअं रअणम् ॥ १३ ॥

दो ज्जेव पूअणीआ इह णअरीए तिलअभूदा अ ।
अज्जा वसन्तसेणा धम्मणिही चारुदत्तो अ ॥ १४ ॥ (छ)

---

(क) तद्गच्छतु । (ख) अनवलोकित एव । (ग) अथ किम् ।

(घ) कस्य प्रत्ययेन । (ङ) आर्यचारुदत्तस्य ।

(च) क आर्यचारुदत्तः, का वा वसन्तसेना, येनानवलोकितं व्रजति ।

(छ) अरे, आर्यचारुदत्तं न जानासि, न वा वसन्तसेनाम् । यद्यार्यचारुदत्तं वसन्तसेनां वा न जानासि, तदा गगने ज्योत्स्नासहितं चन्द्रमपि त्वं न जानासि ।

कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति ।
आपन्नदुःखमोक्षं चतुःसागरसारं रत्नम् ॥

द्वावेव पूजनीयाविह नगर्यां तिलकभूतौ च ।
आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च ॥

---

न्दसमिति यथाच्छन्दम् (?) । यथेष्टमित्यर्थः ॥ **को तमित्यादि** । गाथाद्वयम् । कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति । आपन्नदुःखस्य मोक्षो यतस्तं चतुःसागरसारकं रत्नम् ॥ १३ ॥ द्वावेव पूजनीयाविह नगर्यां तिलकभूतौ च ।

**वीरकः**—अरे चन्दणआ,

जाणामि चारुदत्तं वसन्तसेणं अ सुट्ठु जाणामि ।
पत्ते अ राअकज्जे पिदरं पि अहं ण जाणामि ॥ १५ ॥ (क)

**आर्यकः**—(स्वगतम् ।) अयं मे पूर्ववैरी । अयं मे पूर्वबन्धुः । यतः ।

एककार्यनियोगेऽपि नानयोस्तुल्यशीलता ।
विवाहे च चितायां च यथा हुतभुजोर्द्वयोः ॥ १६ ॥

**चन्दनकः**—तुमं तन्तिलो सेणावई रण्णो पच्चइदो । एदे धारिदा मए बइल्ला । अवलोएहि । (ख)

**वीरकः**—तुमं पि रण्णो पच्चइदो वलवई । ता तुमं ज्जेव अवलोएहि । (ग)

**चन्दनकः**—मए अवलोइदं तुए अवलोइदं भोदि । (घ)

**वीरकः**—जं तुए अवलोइदं तं रण्णा पालएण अवलोइदम् । (ङ)

**चन्दनकः**—अरे, उण्णामेहि धुरम् । (च)

(चेटस्तथा करोति ।)

**आर्यकः**—(स्वगतम् ।) अपि रक्षिणो मामवलोकयन्ति । अशस्त्रश्चास्मि मन्दभाग्यः । अथवा ।

---

(क) अरे चन्दनक,

जानामि चारुदत्तं वसन्तसेनां च सुष्ठु जानामि ।
प्राप्ते च राजकार्ये पितरमप्यहं न जानामि ॥

(ख) त्वं तन्त्रिलः सेनापती राज्ञः प्रत्ययितः । एतौ धारितौ मया बलीवर्दौ । अवलोकय ।

(ग) त्वमपि राज्ञः प्रत्ययितो बलपतिः । तस्मात्त्वमेवावलोकय ।

(घ) मयावलोकितं त्वयावलोकितं भवति ।

(ङ) यत्त्वयावलोकितं तद्राज्ञा पालकेनावलोकितम् ।

(च) अरे, उन्नामय धुरम् ।

---

आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च ॥ १४ ॥ **जानामीति** । गाथा । जानामि चारुदत्तं वसन्तसेनां च सुष्ठु जानामि । प्राप्ते च राजकार्ये पितरमप्यहं न जानामि । प्राप्ते चेति चकारः पुनरर्थे ॥ १५ ॥ **एकेति** ॥ १६ ॥

भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति ।
वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने ॥ १७ ॥

अथवा साहसस्य तावदनवसरः ।

(चन्दनको नाट्येन प्रवहणमारुह्यावलोकयति ।)

**आर्यकः**—शरणागतोऽस्मि ।

**चन्दनकः**—(संस्कृतमाश्रित्य ।) अभयं शरणागतस्य ।

**आर्यकः**—

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च ।
भवति च सदोपहास्यो यः खलु शरणागतं त्यजति ॥ १८ ॥

**चन्दनकः**—कधं अज्जओ गोवालदारओ सेणवित्तासिदो विअ पत्तरहो साउणिअस्स हत्थे णिवडिदो । (विचिन्त्य ।) एसो अणवराधो सरणाअदो अज्जचारुदत्तस्स पवहणं आरूढो, पाणप्पदस्स मे अज्जसव्विलअस्स मित्तम् । अण्णदो राअणिओओ । ता किं दाणिं एत्थ जुत्तं अणुचिट्ठिदुम् । अधवा जं भोदु तं भोदु । पढमं ज्जेव अभअं दिण्णम् ।

भीदाभअप्पदाणं दत्तस्स परोवआररसिअस्स ।
जइ होइ होउ णासो तहवि हु लोए गुणो ज्जेव ॥ १९ ॥

(सभयमवतीर्य ।) दिट्ठो अज्जो—(इत्यर्धोक्ते ।) ण, अज्जआ वसन्तसेणा । तदो एसा भणादि—'जुत्तं णेदम्, सरिसं णेदम्, जं अहं अज्जचारुदत्तं अहिसारिदुं गच्छन्ती राअमग्गे परिभूदा' । (क)

---

(क) कथमार्यको गोपालदारकः श्येनवित्रासित इव पत्त्ररथः शाकुनिकस्य हस्ते निपतितः । एषोऽनपराधः शरणागत आर्यचारुदत्तस्य प्रवहणमारूढः, प्राणप्रदस्य मे आर्यशर्विलकस्य मित्रम् । अन्यतो राजनियोगः ।

---

तन्तिलश्चिन्तापरः ॥ राज्ञा पालकनाम्ना ॥ **भीमस्येति** । व्यायच्छतः परपरिभवं कुर्वतः ॥ १७ ॥ **त्यजतीति** ॥ १८ ॥ पत्तरहो पत्त्ररथः पक्षी । शाकुनिकस्य पक्षिणां हन्तुः । त्वथनिमित्तजस्य चन्दनकस्य सापराधस्य चारभत्तेन कृता (?) । यदाह प्राणप्रदस्येति । **भीदाभएति** । गाथा । भीताभयप्रदानं ददतः परोपकाररसिकस्य । यदि भवति भवतु नाशस्तथापि खलु लोके गुण

**वीरकः**—चन्दणआ, एत्थ मह संसओ समुप्पण्णो । (क)

**चन्दनकः**—कधं दे संसओ । (ख)

**वीरकः**—

संभमघग्घरकण्ठो तुमं पि जादो सि जं तुए भणिदम् ।
दिट्ठो मए क्खु अज्जो पुणो वि अज्जा वसन्तसेणेत्ति ॥ २० ॥

एत्थ मे अप्पच्चयो । (ग)

**चन्दनकः**—अरे, को अप्पच्चओ तुह । वअं दक्खिणत्ता अवत्तभासिणो । खस-खत्ति-खडो-खडट्टोविलअ-कण्णाट-कण्ण-प्पावरणअ-दविड-चोल-चीण-वर्बर-खेर-खान-मुख-मधुघादपहुदाणं मिलिच्छजादीणं अणेअदेसभासाभिण्णा जहेट्ठं मन्तआम, दिट्ठो दिट्ठा वा अज्जो अज्जआ वा । (घ)

तत्किमिदानीमत्र युक्तमनुष्ठातुम् । अथवा यद्भवतु तद्भवतु । प्रथममेवाभयं दत्तम् ।

भीताभयप्रदानं ददतः परोपकाररसिकस्य ।
यदि भवति भवतु नाशस्तथापि खलु लोके गुण एव ॥

दृष्ट आर्यः—' न, आर्या वसन्तसेना । तदेषा भणति,—युक्तं नेदम्, सदृशं नेदम्, यदहमार्यचारुदत्तमभिसर्तुं गच्छन्ती राजमार्गे परिभूता' ।

(क) चन्दनक, अत्र मे संशयः समुत्पन्नः ।

(ख) कथं ते संशयः ।

(ग) संभ्रमघर्घरकण्ठस्त्वमपि जातोऽसि यत्त्वया भणितम् ।
दृष्टो मया खल्वार्यः पुनरप्यार्या वसन्तसेनेति ॥

अत्र मेऽप्रत्ययः ।

(घ) अरे, कोऽप्रत्ययस्तव । वयं दाक्षिणात्या अव्यक्तभाषिणः । खष-खत्ति-कड-कडट्ठोविल-कर्णाट-कर्ण-प्रावरण-द्राविड-चोल-चीन–बर्बर-खेर-खान-मुख-मधुघातप्रभृतीनां म्लेच्छजातीनामनेकदेशभाषाभिज्ञा यथेष्टं मन्त्रयामः, दृष्टो दृष्टा वा, आर्य आर्या वा ।

एव ॥ १९ ॥ **संभमेत्यादि** । गाथा । संभ्रमघर्घरकण्ठो यत्त्वं जातोऽसि यत्त्वया भणितम् । दृष्टो मयेह आर्यः पुनरपि वसन्तसेनेति ॥ २० ॥ खष-खत्ति-कड-कडट्ठोविल-कर्णाट-कर्ण-प्रावरण-द्राविड-चोल-चीन-बर्बर-विराट-बा-

**वीरकः**—णं अहं पि पलोएमि । राअअण्णा एसा । अहं रण्णो पच्चइदो । (क)

**चन्दनकः**—ता किं अहं अप्पच्चइदो संवुत्तो । (ख)

**वीरकः**—णं सामिणिओओ । (ग)

**चन्दनकः**—(स्वगतम् ।) अज्जगोवालदारओ अज्जचारुदत्तस्स पवहणं अहिरुहिअ अवक्कमदि त्ति जइ कहिज्जदि, तदो अज्जचारुदत्तो रण्णा सासिज्जइ । ता को एत्थ उवाओ । (विचिन्त्य ।) कण्णाटकलहप्पओअं कलेमि । (प्रकाशम् ।) अरे वीरअ, मए चन्दणकेण पलोइदं पुणो वि तुमं पलोएसि । को तुमम् । (घ)

**वीरकः**—अरे, तुमं पि को । (ङ)

**चन्दनकः**—पूइज्जन्तो माणिज्जन्तो तुमं अप्पणो जादिं ण सुमरेसि । (च)

**वीरकः**—(सक्रोधम् ।) अरे का मह जादी । (छ)

**चन्दनकः**—को भणउ (ज)

**वीरकः**—भणउ । (झ)

**चन्दनकः**—अहवा ण भणामि ।

---

(क) नन्वहमपि प्रलोकयामि । राजाज्ञैषा । अहं राज्ञः प्रत्ययितः ।

(ख) तत्किमहमप्रत्ययितः संवृत्तः ।

(ग) ननु स्वामिनियोगः ।

(घ) आर्यगोपालदारक आर्यचारुदत्तस्य प्रवहणमधिरुह्यापक्रामतीति यदि कथ्यते, तदार्यचारुदत्तो राज्ञा शास्यते । तत्कोऽत्रोपायः । कर्णाटकलहप्रयोगं करोमि । अरे वीरक, मया चन्दनकेन प्रलोकितं पुनरपि त्वं प्रलोकयसि । कस्त्वम् ।

(ङ) अरे, त्वमपि कः ।

(च) पूज्यमानो मान्यमानस्त्वमात्मनो जातिं न स्मरसि ।

(छ) अरे, का मम जातिः ।

(ज) को भणतु । (झ) भणतु ।

जाणन्तो वि हु जादिं तुज्झ अ ण भणामि सीलविहवेण ।
चिट्ठउ मह्च्चिअ मणे किं च कइत्थेण भग्गेण ॥ २१ ॥ (क)

**वीरकः**—णं भणउ । भणउ । (ख)

(चन्दनकः संज्ञां ददाति।)

**वीरकः**—अरे, किं णेदम् । (ग)

**चन्दनकः**—

सिण्णसिलाअलहत्थो पुरिसाणं कुच्चगण्ठिसंठवणो ।
कत्तरिवावुदहत्थो तुमं पि सेणावई जादो ॥ २२ ॥ (घ)

**वीरकः**—अरे चन्दणआ, तुमं पि माणिज्जन्तो अप्पणो केरिकं जादिं ण सुमरेसि । (ङ)

**चन्दनकः**—अरे, का मह चन्दणअस्स चन्दविसुद्धस्स जादी । (च)

**वीरकः**—को भणउ । (छ)

**चन्दनकः**—भणउ, भणउ । (ज)

(वीरको नाट्येन संज्ञां ददाति ।)

**चन्दनकः**—अरे, किं णेदम् । (झ)

---

(क) अथवा न भणामि ।

जानन्नपि खलु जातिं तव च न भणामि शीलविभवेन ।
तिष्ठतु ममैव मनसि किं च कपित्थेन भग्नेन ॥

(ख) ननु भणतु, भणतु । (ग) अरे, किं न्विदम् ।

(घ) शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसंस्थापनः ।
कर्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः ।

(ङ) अरे चन्दनक, त्वमपि मान्यमान, आत्मनो जातिं न स्मरसि ।

(च) अरे, का मम चन्दनकस्य चन्द्रविशुद्धस्य जातिः ।

(छ) को भणतु । (ज) भणतु, भणतु । (झ) अरे, किं न्विदम् ।

---

ल्हीक-लाट-खेर-खान-मुख-मधुघातप्रभृतीनाम् ॥ **जाणन्तो वीत्यादि** । गाथा । जानन्नपि खलु जातिं भणामि तव च न शीलविभवेन । तिष्ठतु ममैव मनसि किं च कपित्थेन भग्नेन ॥ २१ ॥ संज्ञां ददातीति जात्युचितक्रियाभिनयः ॥ **सिण्णेत्यादि** । गाथा । शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसं-

**वीरकः**—अरे, सुणाहि सुणाहि। (क)

जादी तुज्झ विसुद्धा मादा भेरी पिदा वि दे पडहो।
दुम्मुह करडअभादा तुमं पि सेणावई जादो॥ २३॥ (ख)

**चन्दनकः**—(सक्रोधम्।) अहं चन्दणओ, चम्मारओ, ता पलोएहि पवहणम्। (ग)

**वीरकः**—अरे पवहणवाहआ, पडिवत्तावेहि पवहणम्। पलोइस्सम्। (घ)

(चेटस्तथा करोति। वीरकः प्रवहणमारोढुमिच्छति। चन्दनकः सहसा केशेषु गृहीत्वा पातयति, पादेन ताडयति च।)

**वीरकः**—(सक्रोधमुत्थाय।) अरे, अहं तुए वीसत्थो राआणत्तिं करेन्तो सहसा केसेसु गेण्हिअ पादेन ताडिदो। ता सुणु रे, अहिअरणमज्झे जइ दे चउरङ्गं ण कप्पावेमि, तदो ण होमि वीरओ। (ङ)

**चन्दनकः**—अरे, राअउलं अहिअरणं वा वच्च। किं तुए सुणअसरिसेण। (च)

**वीरकः**—तथा (इति निष्क्रान्तः।)

**चन्दनकः**—(दिशोऽवलोक्य।) गच्छ रे पवहणवाहआ, गच्छ। जइ को वि पुच्छेदि तदो भणेसि—'चन्दणअवीरएहिं अवलोइदं

---

(क) अरे, शृणु शृणु।

(ख) जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः।
दुर्मुख करटकभ्राता त्वमपि सेनापतिर्जातः॥

(ग) अहं चन्दनकश्चर्मकारः, तत्प्रलोकय प्रवहणम्।

(घ) अरे प्रवहणवाहक परिवर्तय प्रवहणम्। प्रलोकयिष्यामि।

(ङ) अरे, अहं त्वया विश्वस्तो राजाज्ञप्तिं कुर्वन्सहसा केशेषु गृहीत्वा पादेन ताडितः। तच्छृणु रे, अधिकरणमध्ये यदि ते चतुरङ्गं न कल्पयामि, तदा न भवामि वीरकः।

(च) अरे, राजकुलमधिकरणं वा व्रज। किं त्वया शुनकसदृशेन।

---

स्थापनः। कर्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः॥ २२॥ **जादी तुज्झ विसुद्धेति**। गाथा। जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः।

पवहणं वच्चइ' । अज्जे वसन्तसेणे, इमं च अहिण्णाणं दे देमि । (क)
(इति खड्गं प्रयच्छति ।)

**आर्यकः**—(खड्गं गृहीत्वा सहर्षमात्मगतम् ।)

अये शस्त्रं मया प्राप्तं स्पन्दते दक्षिणो भुजः ।
अनुकूलं च सकलं हन्त संरक्षितो ह्यहम् ॥ २४ ॥

**चन्दनकः**—अज्जए,

एत्थ मए विण्णविदा पच्चइदा चन्दणं पि सुमरेसि ।
ण भणामि एस लुद्धो णेहस्स रसेण वोल्लामो ॥ २५ ॥ (ख)

**आर्यकः**—

चन्दनश्चन्द्रशीलाढ्यो दैवादद्य सुहृन्मम ।
चन्दनं भोः स्मरिष्यामि सिद्धादेशस्तथा यदि ॥ २६ ॥

**चन्दनकः**—

अभअं तुह देउ हरो विण्हू बम्हा रवी अ चन्दो अ ।
हत्तूण सत्तुवक्खं सुम्भणिसुम्भे जधा देवी ॥ २७ ॥ (ग)

---

(क) गच्छ रे प्रवहणवाहक, गच्छ । यदि कोऽपि पृच्छति तदा भण—'चन्दनकवीरकाभ्यामवलोकितं प्रवहणं व्रजति' । आर्ये वसन्तसेने, इदं चाभिज्ञानं ते ददामि ।

(ख) आर्ये,

अत्र मया विज्ञप्ता प्रत्ययिता चन्दनमपि स्मरसि ।
न भणाम्येष लुब्धः, स्नेहस्य रसेन ब्रूमः ।

(ग) अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च ।
हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी ॥

---

दुर्मुख करटकभ्राता त्वमपि सेनापतिर्जातः ॥ करटको वाद्यविशेषः ॥ २३ ॥ **अये इति** ॥ २४ ॥ **एत्थ इत्यादि** । गाथा । अत्र मया विज्ञप्ता परिज्ञापिता चन्दनकं च स्मरिष्यसि । न भणाम्येष लुब्धः स्नेहस्य वशेन ब्रूमः ॥२५॥ **चन्दन इति** । तथा यदीत्यादि । राज्यप्राप्तिरूपः ॥ २६ ॥ **अभअमित्यादि** । आर्या । अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च । हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा

(चेटः प्रवहणेन निष्क्रान्तः ।)

**चन्दनकः**—(नेपथ्याभिमुखमवलोक्य ।) अरे, णिक्कमन्तस्स मे पिअवअस्सो सव्विलओ पिट्ठदो ज्जेव अणुलग्गो गदो । भोदु । पधाणदण्डधारओ वीरओ राअपच्चअआरो विरोहिदो । ता जाव अहंपि पुत्तभादुपडिवुदो एदं ज्जेव अणुगच्छामि (क) (इति निष्क्रान्तः ।)

**इति प्रवहणविपर्ययो नाम षष्ठोऽङ्कः ।**

---

(क) अरे, निष्क्रमतो मम प्रियवयस्यः शर्विलकः पृष्ठत एवानुलग्नो गतः । भवतु । प्रधानदण्डधारको वीरको राजप्रत्ययकारो विरोधितः । तद्यावदहमपि पुत्रभ्रातृपरिवृत एतमेवानुगच्छामि ।

---

देवी ॥ २७॥ विरोहिदो विरोधितः । पुत्रभ्रातृप्रभृतिः सहितः । तमार्यकमेव ॥

इति प्रवहणविपर्यासो नाम षष्ठोऽङ्कः ।

(ततः प्रविशति चारुदत्तो विदूषकश्च ।)

**विदूषकः**—भो, पेक्ख पेक्ख पुप्फकरण्डअजिण्णुज्जाणस्स सस्सिरीअदाम् । (क)

**चारुदत्तः**—वयस्य एवमेतत् । तथाहि ।

वणिज इव भान्ति तरवः पण्यानीव स्थितानि कुसुमानि ।
शुल्कमिव साधयन्तो मधुकरपुरुषाः प्रविचरन्ति ॥ १ ॥

**विदूषकः**—भो, इमं असक्काररमणीअं सिलाअलं उवविसदु भवम् । (ख)

**चारुदत्तः**—(उपविश्य।) वयस्य, चिरयति वर्धमानकः ।

**विदूषकः**—भणिदो मए वड्ढमाणअ—'वसन्तसेणिअं गेण्हिअ लहुं लहुं आअच्छ'त्ति । (ग)

**चारुदत्तः**—तत्किं चिरयति ।

किं यात्यस्य पुरः शनैः प्रवहणं तस्यान्तरं मार्गते
भग्नेऽक्षे परिवर्तनं प्रकुरुते छिन्नोऽथ वा प्रग्रहः ।
कर्मान्तोज्झितदारुवारितगतिर्मार्गान्तरं याचते
स्वैरं प्रेरितगोयुगः किमथवा स्वच्छन्दमागच्छति ॥ २ ॥

(प्रविश्य गुप्तार्यकप्रवहणस्थः)

**चेटः**—जाध गोणा, जाध । (घ)

---

(क) भोः, पश्य पश्य पुष्पकरण्डकजीर्णोद्यानस्य सश्रीकताम् ।

(ख) भोः, इदमसंस्काररमणीयं शिलातलमुपविशतु भवान् ।

(ग) भणितो मया वर्धमानकः—'वसन्तसेनां गृहीत्वा लघु लघ्वागच्छ' इति । (घ) यातं गावौ, यातम् ।

---

**वणिज इति** । शुल्कं राजदेयम् ॥ १ ॥ असक्कारमिति । अकृत्रिमं स्वभावत एवेत्यर्थः ॥ **किमिति** । कर्मान्तो राजादीनां नियोगविशेषः । तत्संबन्धिनि

**आर्यकः**—(स्वगतम् ।)

नरपतिपुरुषाणां दर्शनाद्भीतभीतः
सनिगडचरणत्वात्सावशेषापसारः ।
अविदितमधिरूढो यामि साधोस्तु याने
परभृत इव नीडे रक्षितो वायसीभिः ॥ ३ ॥

अहो, नगरात्सुदूरमपक्रान्तोऽस्मि । तत्किमस्मात्प्रवहणादवतीर्य वृक्षवाटिकागहनं प्रविशामि । उताहो प्रवहणस्वामिनं पश्यामि । अथ वा कृतं वृक्षवाटिकागहनेन । अभ्युपपन्नवत्सलः खलु तत्रभवानार्यचारुदत्तः श्रूयते । तत्प्रत्यक्षीकृत्य गच्छामि ।

स तावदस्माद्व्यसनार्णवोत्थितं निरीक्ष्य साधुः समुपैति निर्वृतिम् ।
शरीरमेतद्गतमीदृशीं दशां धृतं मया तस्य महात्मनो गुणैः ॥ ४ ॥

**चेटः**—इमं तं उज्जाणम् । जाव उवशप्पामि । (उपसृत्य ।) अज्जमित्तेअ । (क)

**विदूषकः**—भो, पिअं दे णिवेदेमि । वड्ढमाणओ मन्तेदि । आगदाए वसन्तसेणाए होदव्वम् । (ख)

**चारुदत्तः**—प्रियं नः प्रियम् ।

**विदूषकः**—दासीए पुत्ता, किं चिरइदो सि । (ग)

**चेटः**—अज्जमित्तेअ, मा कुप्प । जाणत्थलके विशुमलिदे त्ति कदुअ गदागदिं कलेन्ते चिलइदेम्हि । (घ)

---

(क) इदं तदुद्यानम् । यावदुपसर्पामि । आर्यमैत्रेय ।

(ख) भोः, प्रियं ते निवेदयामि । वर्धमानको मन्त्रयति । आगतया वसन्तसेनया भवितव्यम् । (ग) दास्याः पुत्र, किं चिरायितोऽसि ।

(घ) आर्यमैत्रेय, मा कुप्य । यानास्तरणं विस्मृतमिति कृत्वा गतागतिं कुर्वंश्चिरायितोऽस्मि ।

---

धर्मे त्यक्तकाष्ठानि तैः प्रतिरुद्धगमनः ॥ २ ॥ **नरपतीति** । सावशेषः किंचिदवशिष्टः । कोकिलपक्षे नरपतिपुरुषाः शाकुनिकाः । सनिगड इव सनिगडो बाल्यान्मन्दगमनः । यानेऽधिरूढोऽनवस्थितः । काकस्त्रीरक्षितकोकिल उपमानम् ॥ ३ ॥ **स इति** । तस्य चारुदत्तस्य महात्मनो गुणैः । तत्प्रवहणस्थस्य

चारुदत्तः—वर्धमानक, परिवर्तय प्रवहणम् । सखे मैत्रेय, अवतारय वसन्तसेनाम् ।

विदूषकः—किं णिअडेण बद्धा से गोड्डा, जेण सअं ण ओदरेदि । (उत्थाय प्रवहणमुद्धाट्य ।) भो, ण वसन्तसेणा, वसन्तसेणो क्खु एसो । (क)

चारुदत्तः—वयस्य, अलं परिहासेन । न कालमपेक्षते स्नेहः । अथ वा स्वयमेवावतारयामि । (इत्युत्तिष्ठति ।)

आर्यकः—(दृष्ट्वा ।) अये, अयमेव प्रवहणस्वामी । न केवलं श्रुतिरमणीयो दृष्टिरमणीयोऽपि । हन्त, रक्षितोऽस्मि ।

चारुदत्तः—(प्रवहणमधिरुह्य दृष्ट्वा च ।) अये, तत्कोऽयम् ।

करिकरसमबाहुः सिंहपीनोन्नतांसः
　पृथुतरसमवक्षास्ताम्रलोलायताक्षः ।
कथमिदमसमानं प्राप्त एवंविधो यो
　वहति निगडमेकं पादलग्नं महात्मा ॥ ५ ॥

ततः को भवान् ।

आर्यकः—शरणागतो गोपालप्रकृतिरार्यकोऽस्मि ।

चारुदत्तः—किं घोषादानीय योऽसौ राज्ञा पालकेन बद्धः ।

आर्यकः—अथ किम् ।

चारुदत्तः—

विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः ।
अपि प्राणानहं जह्यां न तु त्वां शरणागतम् ॥ ६ ॥

(आर्यको हर्षं नाटयति ।)

चारुदत्तः—वर्धमानक, चरणान्निगडमपनय ।

---

(क) किं निगडेन बद्धावस्याः पादौ, येन स्वयं नावतरति । भोः, न वसन्तसेना, वसन्तसेनः खल्वेषः ।

---

चन्दनकेन रक्षितत्वात् ॥ ४ ॥ मा कुप्प मा क्रोधं कुरु ॥ गोड्डा पादौ ॥

चेटः—जं अज्जो आणवेदि। (तथा कृत्वा।) अज्ज, अवणीदाइं णिगलाइं। (क)

आर्यकः—स्नेहमयान्यन्यानि दृढतराणि दत्तानि।

विदूषकः—संगच्छेहि णिअडाइं। एसो वि मुक्को। संपदं अम्हे वच्चिस्सामो। (ख)

चारुदत्तः—धिक्शान्तम्।

आर्यकः—सखे चारुदत्त, अहमपि प्रणयेनेदं प्रवहणमारूढः। तत्क्षन्तव्यम्।

चारुदत्तः—अलंकृतोऽस्मि स्वयंग्राहप्रणयेन भवता।

आर्यकः—अभ्यनुज्ञातो भवता गन्तुमिच्छामि।

चारुदत्तः—गम्यताम्।

आर्यकः—भवतु अवतरामि।

चारुदत्तः—सखे, नावतरितव्यम्। प्रत्यग्रापनीतसंयमनस्य भवतोऽलघुसंचारा गतिः। सुलभपुरुषसंचारेऽस्मिन्प्रदेशे प्रवहणं विश्रम्भसमुत्पादयति। तत्प्रवहणेनैव गम्यताम्।

आर्यकः—यथाह भवान्।

चारुदत्तः—

क्षेमेण व्रज बान्धवान्।

आर्यकः—

ननु मया लब्धो भवान्बान्धवः

चारुदत्तः—

स्मर्तव्योऽस्मि कथान्तरेषु भवता

आर्यकः—

स्वात्मापि विस्मर्यते।

चारुदत्तः—

त्वां रक्षन्तु पथि प्रयान्तममराः

(क) यदार्य आज्ञापयति। आर्य, अपनीतानि निगडानि।

(ख) संगच्छस्व निगडानि। एषोऽपि मुक्तः। सांप्रतं वयं व्रजिष्यामः।

करीति ॥ ५ ॥ विधिनेति ॥६॥ अलघुर्मन्दः ॥ क्षेमेणेत्यादौ चारुदत्तार्य-

**आर्यकः**—

संरक्षितोऽहं त्वया

**चारुदत्तः**—

स्वैर्भाग्यैः परिरक्षितोऽसि

**आर्यकः**—

ननु हे तत्रापि हेतुर्भवान् ॥ ७ ॥

**चारुदत्तः**—यदुद्यते पालके महती रक्षा न वर्तते, तच्छीघ्रमपक्रामतु भवान् ।

**आर्यकः**—एवं पुनर्दर्शनाय । (इति निष्क्रान्तः ।)

**चारुदत्तः**—

कृत्वैवं मनुजपतेर्महद्व्यलीकं
स्थातुं हि क्षणमपि न प्रशस्तमस्मिन् ।
मैत्रेय क्षिप निगडं पुराणकूपे
पश्येयुः क्षितिपतयो हि चारदृष्ट्या ॥ ८ ॥

(वामाक्षिस्पन्दनं सूचयित्वा ।) सखे मैत्रेय, वसन्तसेनादर्शनोत्सुकोऽयं जनः । पश्य ।

अपश्यतोऽद्य तां कान्तां वामं स्फुरति लोचनम् ।
अकारणपरित्रस्तं हृदयं व्यथते मम ॥ ९ ॥

तदेहि । गच्छावः । (परिक्रम्य ।) कथमभिमुखमनाभ्युदयिकं श्रमणकदर्शनम् । (विचार्य ।) प्रविशत्वयमनेन पथा । वयमप्यनेनैव पथा गच्छामः । (इति निष्क्रान्तः ।)

**इत्यार्यकापहरणं नाम सप्तमोऽङ्कः ।**

---

क्योरुत्तरोत्तरेणाष्टखण्डः श्लोकः ॥ ७ ॥ पालके राजनि रक्षक एव वा । रक्षणे महानभिनिवेश इत्यर्थः ॥ **कृत्वेति** ॥ ८ ॥ **अपश्यत इति** ॥ ९ ॥ श्रमणको भिक्षुः अशकुनपरम्परा च चारुदत्तवसन्तसेनयोरनिष्टस्याग्रे भविष्यतः सूचनाय ॥

इत्यार्यकापवाहनो नाम सप्तमोऽङ्कः ।

( ततः प्रविशत्यार्द्रचीवरहस्तो भिक्षुः ।)

**भिक्षुः**—अज्ञा, कलेध धम्मशंचअम् ।

शंजम्मध णिअपोटं णिच्चं जग्गेध झाणपडहेण ।

विशमा इन्दिअचोला हलन्ति चिलशंचिदं धम्मम् ॥ १ ॥

अवि अ । अणिच्चदाए पेक्खिअ णवलं दाव धम्माणं शलणम्हि ।

पञ्चज्जण जेण मालिदा इत्थिअ मालिअ गाम लक्खिदे ।

अबल क चण्डाल मालिदे अवसं वि शे णल शग्ग गाहदि॥२॥

शिल मुण्डिद तुण्ड मुण्डिदे चित्त ण मुण्डिद कीश मुण्डिदे ।

जाह उण अ चित्त मुण्डिदे शाहु शुट्ठु शिल ताह मुण्डिदे ॥३॥

गिहिदकशाओदए एशे चीवले, जाव एदं लट्टिअशालकाहकेलके उज्जाणे पविशिअ पोक्खलिणीए पक्खालिअ लहुं लहुं अवक्कमिश्शम् । (क) (परिक्रम्य तथा करोति ।)

---

(क) अज्ञाः, कुरुत धर्मसंचयम् ।

संयच्छत निजोदरं नित्यं जागृत ध्यानपटहेन ।

विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम् ॥

अपि च । अनित्यतया प्रेक्ष्य केवलं तावद्धर्माणां शरणमस्मि ।

पञ्चजना येन मारिता अविद्यां मारयित्वा ग्रामो रक्षितः ।

अबलः क्व चण्डालो मारितोऽवश्यमपि स नरः स्वर्गं गाहते ॥

---

**शंजम्मधेति** । गाथा । क्वचिद्दृश्यते । संयच्छत निजकमुदरं नित्यं जागृत ध्यानपटहेन । विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम् ॥ १ ॥ **पञ्चज्जणेत्यादि** । वैतालीछन्दसा द्वयम् । पञ्चेति । ज्जणसंयोगात्पञ्चेति पञ्चशब्दो गुरुः । छन्दोनुरोधात् । पञ्चजनेति णकारः (?) । अबले केति केवलः ककारः, एकारश्च लघुः । अवसं वीत्यत्र सकारो न प्रविष्टः । अन्यथा अवस्सं वीति स्यात् । शे णले इत्येकारद्वयेऽन्यतरो न । गाहतीत्यत्र 'गा' इत्याकारस्य गुरुत्वम् । पञ्चजनाः पञ्चेन्द्रियाणि । इत्थिअ अविद्याम् । गाम शरीरम् । लक्खिदे रक्षितः । दुष्टत्वविकृतिपातात् । चण्डालोऽहंकारः । अबलोऽसहायः । अथवेन्द्रियादिविनाशात् । अवश्यं स नरः स्वर्गं गाहते ॥ २ ॥ शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं न संयत्तीकृतं किं मुण्डितम् । यस्य पुनश्चित्तं मुण्डितं सुष्ठु साधु शिरस्तस्य मुण्डितम् ॥ ३ ॥ लट्टिअशालकाहेति । राष्ट्रियश्यालकत्वेन च पुनः संयोगः

(नेपथ्ये ।)

**शकारः**—चिट्ठ ले दुट्टशमणका, चिट्ठ । (क)

**भिक्षुः**—(दृष्ट्वा सभयम् ।) ही अविद माणहे । एशे शे लाअशालशंठाणे आअदे । एक्केण भिक्खुणा अवलाहे किदे अण्णं पि जहिं जहिं भिक्खुं पेक्खदि, तहिं तहिं गोणं विअ णासं विन्धिअ ओवाहेदि । ता कहिं अशलणे शलणं गमिश्शम् । अधवा भट्टालके ज्जेव बुद्धे मे शलणे । (ख)

(प्रविश्य सखड्गेन विटेन सह)

**शकारः**—चिट्ठ ले दुट्टशमणका, चिट्ठ । आवाणअमज्झपविट्टश्श विअ लत्तमूलअश्श शीशं दे मोडइश्शम् । (ग) (इति ताडयति ।)

**विटः**—काणेलीमातः, न युक्तं निर्वेदधृतकषायं भिक्षुं ताडयितुम् । तत्किमनेन । इदं तावत्सुखोपगम्यमुद्यानं पश्यतु भवान् ।

अशरणशरणप्रमोदभूतैर्वनतरुभिः क्रियमाणचारुकर्म ।
हृदयमिव दुरात्मनामगुप्तं नवमिव राज्यमनिर्जितोपभोग्यम् ॥४॥

**भिक्षुः**—शाअदम् । पशीददु उवाशके । (घ)

---

शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं किमर्थं मुण्डितम् ।
यस्य पुनश्च चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम् ॥

गृहीतकषायोदकमेतच्चीवरम्, यावदेतद्राष्ट्रियश्यालकस्योद्याने प्रविश्य पुष्करिण्यां प्रक्षाल्य लघु लघ्वपक्रमिष्यामि ।

(क) तिष्ठ रे दुष्टश्रमणक, तिष्ठ ।

(ख) आश्चर्यम् । एष स राजश्यालसंस्थानक आगतः । एकेन भिक्षुणापराधे कृतेऽन्यमपि यत्र यत्र भिक्षुं पश्यति, तत्र तत्र गामिव नासिकां विद्ध्वापवाहयति । तत्कुत्राशरणः शरणं गमिष्यामि । अथवा भट्टारक एव बुद्धो मे शरणम् ।

(ग) तिष्ठ रे दुष्टश्रमणक, तिष्ठ । आपानकमध्यप्रविष्टस्येव रक्तमूलकस्य शीर्षं ते भङ्क्ष्यामि ।

(घ) स्वागतम् । प्रसीदतूपासकः ।

---

प्रकर्षख्यापनार्थः । अपूपौ द्वावितिवत् वा न पुनरुक्तम् ॥ ही अविद माणहे इति विस्मयखेदे । नासिकां भित्त्वापवाहयति । तत्कुत्राहमशरणः शरणं गमिष्यामीति ॥ आपानकं पानगोष्ठी । पिबन्त्यस्मिन्नित्यधिकरणे ल्युट् । रक्तमूलकस्य शीर्षमिव मध्यमा किं पत्रलकभागमपनीय (?) मूलकमुपदंशीकुर्वन्ति । **अशरणेति** । अनिर्जितमनात्मसात्कृतम् ॥ ४ ॥ णाविदे नापितः । स ह्युपासको दृष्ट इत्याशयः ।

**शकारः**—भावे, पेक्ख पेक्ख । आक्कोशदि मम् । (क)

**विटः**—किं ब्रवीति ।

**शकारः**—उवाशके त्ति मं भणादि । किं हग्गे णाविदे । (ख)

**विटः**—बुद्धोपासक इति भवन्तं स्तौति ।

**शकारः**—थुणु शमणका, थुणु । (ग)

**भिक्षुः**—तुमं धण्णे, तुमं पुण्णे । (घ)

**शकारः**—बावे, धण्णे पुण्णे त्ति मं भणादि । किं हग्गे शलावके कोश्टके कोम्भकले वा । (ङ)

**विटः**—काणेलीमातः, ननु 'धन्यस्त्वम्, पुण्यस्त्वम्' इति भवन्तं स्तौति ।

**शकारः**—भावे, ता कीश एशे इध आगदे । (च)

**भिक्षुः**—इदं चीवलं पक्खालिदुम् । (छ)

**शकारः**—अले दुट्टशमणका, एशे मम बहिणीवदिणा शव्वुज्जाणाणं पवले पुप्फकलण्डुज्जाणे दिण्णे, जहिं दाव शुणहका शिआला पाणिअं पिअन्ति । हग्गे वि पवलपुलिशे मणुश्शके ण ण्हाआमि । तहिं तुमं पुक्खलिणीए पुलाणकुलुत्थजूशशवण्णाइं उश्शगन्धिआइं चीवलाइं पक्खालेशि । ता तुमं एक्कपहालिअं कलेमि । (ज)

---

(क) भाव, पश्य पश्य । आक्रोशति माम् ।

(ख) उपासक इति मां भणति । किमहं नापितः ।

(ग) स्तुनु श्रमणक, स्तुनु ।  (घ) त्वं धन्यः, त्वं पुण्यः ।

(ङ) भाव, धन्यः पुण्य इति मां भणति । किमहं चार्वाकः कोष्ठकः कुम्भकारो वा ।

(च) भाव, तत्किमर्थमेष इहागतः ।  (छ) इदं चीवरं प्रक्षालयितुम् ।

(ज) अरे दुष्टश्रमणक, एतन्मम भगिनीपतिना सर्वोद्यानानां प्रवरं पुष्पकरण्डोद्यानं दत्तम्, यत्र तावच्छुनकाः शृगालाः पानीयं पिबन्ति । अहमपि प्रवरपुरुषो मनुष्यको न स्नामि । तत्र त्वं पुष्करिण्यां पुराणकुलित्थयूषसवर्णान्युग्रगन्धीनि चीवराणि प्रक्षालयसि । तत्त्वामेकप्रहारिकं करोमि ।

---

शलावकश्चार्वाकः । कोष्ठकमिष्टकादिरचितम् ॥ यत्र तावत्कुकु(कु) राः शृगाला जलं पिबन्ति । हगे वि अहमपि । त्वमपि पुराणकुलित्थयूषसवर्णान्युग्रगन्धीनि चीवराणि प्रक्षालयसि । एकप्रहारवन्तं करोमि । एकप्रहारेण मारणोक्तावयं प्रयोगः ॥

**विटः**—काणेलीमातः, तथा तर्कयामि यथानेनाचिरप्रव्रजितेन भवितव्यम् ।

**शकारः**—कधं भावे जाणादि । (क)

**विटः**—किमत्र ज्ञेयम् । पश्य ।

अद्याप्यस्य तथैव केशविरहाद्गौरी ललाटच्छविः
कालस्याल्पतया च चीवरकृतः स्कन्धे न जातः किणः ।
नाभ्यस्ता च कषायवस्त्ररचना दूरं निगूढान्तरं
वस्त्रान्तं च पटोच्छ्रयात्प्रशिथिलं स्कन्धे न संतिष्ठते ॥ ५ ॥

**भिक्षुः**—उवाशके, एव्वम् । अचिलपव्वजिदे हग्गे । (ख)

**शकारः**—ता कीशं तुमं जातमेत्तक ज्जेव ण पव्वजिदे । (ग)

(इति ताडयति ।)

**भिक्षुः**—णमो बुद्धश्श । (घ)

**विटः**—किमनेन ताडितेन तपस्विना । मुच्यताम् । गच्छतु ।

**शकारः**—अले, चिट्ठ दाव, जाव शंपधालेमि । (ङ)

**विटः**—केन सार्धम् ।

**शकारः**—अत्तणो हडक्केण । (च)

**विटः**—हन्त, न गतः ।

---

(क) कथं भावो जानाति ।

(ख) उपासक, एवम् । अचिरप्रव्रजितोऽहम् ।

(ग) तत्किमर्थं त्वं जातमात्र एव न प्रव्रजितः ।

(घ) नमो बुद्धाय । (ङ) अरे, तिष्ठ तावत्, यावत्संप्रधारयामि ।

(च) आत्मनो हृदयेन ।

---

**अद्यापीति** । गौरी ललाटे शोभा भवति । विरतस्य तस्यात्मनि स्वरूपगतिः(?)। किणः संघर्षजो व्रणान्तरः । वस्त्रकषायीकरणं न शीलितम् । वस्त्रान्तः स्कन्धे न तिष्ठते । नपुंसकत्वं चिन्त्यम् (?) । निगूढमवकाशो यस्य तत् । संकोचितप्रदेशमित्यर्थः । पटस्योच्छ्रयो विशालता । तस्माद्दुःखम् ॥ ५ ॥ जातमात्र एव न प्रव्रजितः ॥ तपस्विना वराकेण ॥ हडक्केन हृदयेन । न गतस्तर्हि न गमिष्यतीत्यर्थः ।

**शकारः**—पुत्तका हडक्का, भश्टके पुत्तके, एशे शमणके अवि णाम किं गच्छदु, किं चिश्टदु । (स्वगतम् ।) णावि गच्छदु, णावि चिश्टदु । (प्रकाशम् ।) भावे, शंपधालिदं मए हडक्केण शह । एशे मह हडक्के भणादि । (क)

**विटः**—किं ब्रवीति ।

**शकारः**—मावि गच्छदु, मावि चिश्टदु । मावि ऊशशदु, मावि णीशशदु । इध ज्जेव झत्ति पडिअ मलेदु । (ख)

**भिक्षुः**—णमो बुद्धश्श । शलणागदम्हि । (ग)

**विटः**—गच्छतु ।

**शकारः**—णं शमएण । (घ)

**विटः**—कीदृशः समयः ।

**शकारः**—तधा कद्दमं फेलदु, जधा पाणिअं पङ्काइलं ण होदि । अधवा पाणिअं पुञ्जीकदुअ कद्दमे फेलदु । (ङ)

**विटः**—अहो मूर्खता ।

विपर्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः ।
मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुंधरा ॥ ६ ॥

(भिक्षुर्नाट्येनाक्रोशति ।)

Body

२२ अप्रैल

**शकारः**—किं भणादि । (च)

**विटः**—स्तौति भवन्तम् ।

---

(क) पुत्रक हृदय, भट्टारक पुत्रक, एष श्रमणकोऽपि नाम किं गच्छतु, किं तिष्ठतु । नापि गच्छतु, नापि तिष्ठतु । भाव, संप्रधारितं मया हृदयेन सह । एतन्मम हृदयं भणति ।

(ख) मापि गच्छतु, मापि तिष्ठतु । माप्युच्छ्वसितु, मापि निश्वसितु । इहैव झटिति पतित्वा म्रियताम् ।

(ग) नमो बुद्धाय । शरणागतोऽस्मि । (घ) ननु समयेन ।

(ङ) तथा कर्दमं प्रक्षिपतु, यथा पानीयं पङ्काविलं न भवति । अथवा पानीयं पुञ्जीकृत्य कर्दमे क्षिपतु । (च) किं भणति ।

---

पुत्रक हृदय अदस्त्वं (?) । भट्टारकं दउतिटिति नम इति प्रस्तावात् (?) । विटोऽयमर्थ(?) ॥ पङ्काइलं पङ्काविलम् । कलुषमिति यावत् ॥ **विपर्यस्तमिति ।**

**शकारः**—थुणु थुणु । पुणो वि थुणु । (क)

(तथा कृत्वा निष्क्रान्तो भिक्षुः ।)

**विटः**—काणेलीमातः, पश्योद्यानस्य शोभाम् ।

अमी हि वृक्षाः फलपुष्पशोभिताः
कठोरनिष्पन्दलतोपवेष्टिताः ।
नृपाज्ञया रक्षिजनेन पालिता
नराः सदारा इव यान्ति निर्वृतिम् ॥ ७ ॥

**शकारः**—शुश्टु भावे भणादि ।

बहुकुशुमविचित्तिदा अ भूमी
कुशुमभलेण विणामिदा अ रुक्खा ।
दुमशिहललदाअलम्बमाणा
पणशफला विअ वाणला ललन्ति ॥ ८ ॥ (ख)

**विटः**—काणेलीमातः, इदं शिलातलमध्यास्यताम् ।

**शकारः**—एशे म्हि आशिदे । (इति विटेन सहोपविशति ।) भावे, अज्ज वि तं वशन्तशेणिअं शुमलामि । दुज्जणवअणं विअ हडक्कादो ण ओशलदि । (ग)

**विटः**—(स्वगतम् ।) तथा निरस्तोऽपि स्मरति ताम् । अथवा ।

स्त्रीभिर्विमानितानां कापुरुषाणां विवर्धते मदनः ।
सत्पुरुषस्य स एव तु भवति मृदुर्नैव वा भवति ॥ ९ ॥

**शकारः**—भावे, का वि वेला थावलकचेडश्श भणिदश्श 'पवहणं गेण्हिअ लहुं लहुं आअच्छे' त्ति । अज्ज वि ण आअ-

---

(क) स्तुनु स्तुनु । पुनरपि स्तुनु ।

(ख) सुष्ठु भावो भणति ।

बहुकुसुमविचित्रिता च भूमिः कुसुमभरेण विनामिताश्च वृक्षाः ।
द्रुमशिखरलतावलम्बमानाः पनसफलानीव वानरा ललन्ति ॥

(ग) एषोऽस्म्यासितः । भाव, अद्यापि तां वसन्तसेनां स्मरामि । दुर्जनवचनमिव हृदयान्नापसरति ।

---

विपर्यस्तं लोकविरुद्धम् ॥ ६ ॥ **अमी इति** ॥ ७ ॥ **बहुकुशुमेत्यादि** । पुष्पिताग्राच्छन्दः । रुक्खा वृक्षाः । ललन्ति विहरन्ति ॥ ८ ॥ **स्त्रीभिरि-**

च्छदि त्ति चिलम्हि बुभुक्खिदे । मज्झण्हे ण शक्कीअदि पादेहिं गन्तुम् । ता पेक्ख पेक्ख ।

णहमज्झगदे शूले दुप्पेक्खे कुविदवाणलशलिच्छे ।
भूमी दढशंतत्ता हदपुत्तशदेव्व गन्धाली ॥ १० ॥ (क)

विटः—एवमेतत् ।

छायासु प्रतिमुक्तशष्पकवलं निद्रायते गोकुलं
तृष्णार्तैश्च निपीयते वनमृगैरुष्णं पयः सारसम् ।
संतापादतिशङ्कितैर्न नगरीमार्गो नरैः सेव्यते
तप्तां भूमिमपास्य च प्रवहणं मन्ये क्वचित्संस्थितम् ॥ ११ ॥

शकारः—भावे,

शिलशि मम णिलीणे भाव शुज्जश्श पादे
शउणिखगविहङ्गा लुक्खशाहाशु लीणा ।
णलपुलिशमणुश्शा उण्हदीहं शशन्ता
घलशलणणिशण्णा आदवं णिव्वहन्ति ॥ १२ ॥

भावे, अज्ज वि शे चेडे णाअच्छदि । अत्तणो विणोदणणिमित्तं किंपि गाइश्शम् । (इति गायति ।) भावे भावे, शुदं तुए जं मए गाइदम् । (ख)

(क) भाव, कापि वेला स्थावरकचेटस्य भणितस्य 'प्रवहणं गृहीत्वा लघु लघ्वागच्छ' इति । अद्यापि नागच्छतीति चिरमस्मि बुभुक्षितः । मध्याह्ने न शक्यते पादाभ्यां गन्तुम् । तत्पश्य पश्य ।

नभोमध्यगतः सूर्यो दुःप्रेक्ष्यः कुपितवानरसदृक्षः ।
भूमिर्दृढसंतप्ता हतपुत्रशतेव गान्धारी ॥

(ख) भाव,

त्यादि । आर्या ॥ ९ ॥ बुभुक्षितो न शक्यते पादाभ्यां गन्तुम् । णहमज्झेत्यादि । गाथा । नभोमध्यगतः सूर्यो दुःप्रेक्षः कुपितवानरसदृशः । भूमिर्दृढसंतप्ता हतपुत्रशतेव गान्धारी ॥ गान्धारी दुर्योधनादिपुत्रशतमाता ॥ १० ॥ छायास्विति ॥ ११ ॥ शिलशीत्यादि । मालिन्याः श्लोकः । शिरसि मम निलीनो भाव सूर्यस्य पादः शकुनिखगविहङ्गा वृक्षशाखासु लीनाः । नरपुरुषमनुष्या उष्णदीर्घं श्वसन्तो गृहशरणनिषण्णा आतपं प्रेरयन्ति ॥ १२ ॥

विटः—किमुच्यते । गन्धर्वो भवान् ।

शकारः—कधं गन्धव्वे ण भविश्शम् ।

हिङ्गुज्जले जीलकभद्दमुश्ते वचाह गण्ठी शगुडा अ शुण्ठी ।
एशे मए शेविद गन्धजुत्ती कधं ण हग्गे मधुलश्शले त्ति ॥१३॥

भावे, पुणो वि दाव गाइश्शम् । (तथा करोति ।) भावे भावे, शुदं तुए जं मए गाइदम् । (क)

विटः—किमुच्यते । गन्धर्वो भवान् ।

शकारः—कधं गन्धव्वे ण भवामि ।

हिङ्गुज्जले दिण्णमरीचचुण्णे वग्घालिदे तेल्लघिएण मिश्शे ।
भुत्ते मए पालहुदीअमंशे कधं ण हग्गे मधुलश्शलेत्ति ॥ १४ ॥

भावे, अज्जवि चेडे णाअच्छदि । (ख)

---

शिरसि मम निलीनो भाव सूर्यस्य पादः
शकुनिखगविहङ्गा वृक्षशाखासु लीनाः ।
नरपुरुषमनुष्या उष्णदीर्घं श्वसन्तो
गृहशरणनिषण्णा आतपं निर्वहन्ति ॥

भाव, अद्यापि स चेटो नागच्छति । आत्मनो विनोदननिमित्तं किमपि गास्यामि । भाव भाव, श्रुतं त्वया यन्मया गीतम् ।

(क) कथं गन्धर्वो न भविष्यामि ।
हिङ्गूज्ज्वला जीरकभद्रमुस्ता वचाया ग्रन्थिः सगुडा च शुण्ठी ।
एषा मया सेविता गन्धयुक्तिः कथं नाहं मधुरस्वर इति ॥

भाव, पुनरपि तावद्गास्यामि । भाव भाव, श्रुतं त्वया यन्मया गीतम् ।

(ख) कथं गन्धर्वो न भवामि ।
हिङ्गूज्ज्वलं दत्तमरीचचूर्णं व्याघारितं तैलघृतेन मिश्रम् ।
भुक्तं मया पारभृतीयमांसं कथं नाहं मधुरस्वर इति ॥

भाव, अद्यापि चेटो नागच्छति ।

---

**हिङ्गुज्जेत्यादि** । उपजातिच्छन्दसा । हिङ्गूज्वलौ जीरकभद्रमुस्तकौ वचाया ग्र[illegible] सगुडा च शुण्ठी । एषा मया सेविता ग्रन्थयुक्तिः कथं नाहं मधुरस्वर इति ॥[illegible] । **हिङ्गुज्जले इति** । हिङ्गुज्ज्वलं दत्तमरीचचूर्णं व्याघारितं तैलघृतैर्मिश्रम् । भुक्तं रि-

**विटः**—स्वस्थो भवतु भवान् । संप्रत्येवागमिष्यति ।

(ततः प्रविशति प्रवहणाधिरूढा वसन्तसेना चेटश्च ।)

**चेटः**—भीदे क्खु हग्गे । मज्झण्हिके शुज्जे । मा दाणिं कुविदे लाअशालशंठाणे हुविश्शदि । ता तुलिदं वहामि । जाध गोणा, जाध । (क)

**वसन्तसेना**—हद्धी हद्धी । ण क्खु वड्ढमाणअस्स अअं सरसंजोओ । किं णेदम् । किं णु क्खु अज्जचारुदत्तेण वाहणपडिस्समं परिहरन्तेण अण्णो मणुस्सो अण्णं पवहणं पेसिदं भविस्सदि । फुरदि दाहिणं लोअणम् । वेवदि मे हिअअम् । सुण्णाओ दिसाओ । सव्वं ज्जेव विसंटुलं पेक्खामि । (ख)

**शकारः**—(नेमिघोषमाकर्ण्य ।) भावे भावे, आगदे पवहणे । (ग)

**विटः**—कथं जानासि ।

**शकारः**—किं ण पेक्खदि भावे । बुड्ढशूअले विअ घुलघुलाअमाणे लक्खीअदि । (घ)

**विटः**—(दृष्ट्वा ।) साधु लक्षितम् । अयमागतः ।

**शकारः**—पुत्तका थावलका चेडा, आगदे शि । (ङ)

**चेटः**—अध इं । (च)

---

(क) भीतः खल्वहम् । माध्याह्निकः सूर्यः । मेदानीं कुपितो राजश्यालसंस्थानको भविष्यति । तत्त्वरितं वहामि । यातं गावौ, यातम् ।

(ख) हा धिक् हा धिक् । न खलु वर्धमानकस्यायं स्वरसंयोगः । किं न्विदम् । किं नु खल्वार्यचारुदत्तेन वाहनपरिश्रमं परिहरतान्यो मनुष्योऽन्यत्प्रवहणं प्रेषितं भविष्यति । स्फुरति दक्षिणं लोचनम् । वेपते मे हृदयम् । शून्या दिशः । सर्वमेव विसंष्ठुलं पश्यामि ।

(ग) भाव भाव, आगतं प्रवहणम् ।

(घ) किं न पश्यति भावः । वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते ।

(ङ) पुत्रक स्थावरक चेट, आगतोऽसि । (च) अथ किम् ।

---

पारभृतीयं मांसं कथं नाहं मधुरस्वर इति ॥ १४ ॥ पलिपतिस्तहेणोधिकमांसेन(?) सह मया भुक्तं ततः कथं न मधुरस्वरोऽहम् । घनद्रवः कर्मणि यत् तः(?)॥ किं न प्रेक्षते भावः । वृद्धसूकर इव । घुरघुरेत्यव्यक्तशब्दानुकरणम् । अव्यक्तं शब्दं कुर्वाणो

शकारः—पवहणे वि आगदे। (क)

चेटः—अध इं। (ख)

शकारः—गोणा वि आगदे। (ग)

चेटः—अध इं। (घ)

शकारः—तुमं पि आगदे। (ङ)

चेटः—(सहासम्।) भट्टके, अहं पि आगदे। (च)

शकारः—ता पवेशेहि पवहणम्। (छ)

चेटः—कदलेण मग्गेण। (ज)

शकारः—एदेण ज्जेव पगालखण्डेण। (झ)

चेटः—भट्टके, गोणा मलेन्ति। पवहणे वि भज्जेदि। हग्गे वि चेडे मलामि। (ञ)

शकारः—अले, लाअशालके हग्गे। गोणा मले, अवले कीणिश्शम्। पवहणे भग्गे, अवलं घडाइश्शम्। तुमं मले, अण्णे पवहणवाहके हुविश्शदि। (ट)

चेटः—शव्वं उववण्णं हुविश्शदि। हग्गे अत्तणकेलके ण हुविश्शम्। (ठ)

शकारः—अले, शव्वं पि णश्शदु। पगालखण्डेण पवेशेहि पवहणम्। (ड)

---

(क) प्रवहणमप्यागतम्। (ख) अथ किम्। (ग) गावावप्यागतौ।

(घ) अथ किम्। (ङ) त्वमप्यागतः।

(च) भट्टारक, अहमप्यागतः।

(छ) तत्प्रवेशय प्रवहणम्। (ज) कतरेण मार्गेण।

(झ) एतेनैव प्राकारखण्डेन।

(ञ) भट्टारक, वृषभौ म्रियेते। प्रवहणमपि भज्यते। अहमपि चेटो म्रिये।

(ट) अरे, राजश्यालकोऽहम्। वृषभौ मृतौ, अपरौ क्रेष्यामि। प्रवहणं भग्नम्, अपरं कारयिष्यामि। त्वं मृतः, अन्यः प्रवहणवाहको भविष्यति।

(ठ) सर्वमुपपन्नं भविष्यति। अहमात्मीयो न भविष्यामि।

(ड) अरे, सर्वमपि नश्यतु। प्राकारखण्डेन प्रवेशय प्रवहणम्।

---

लक्ष्यते॥ पगालखण्डेण प्राकारखण्डपथेनैव प्रवेशय॥ दैवगत्या तु न भग्नं प्रवह-

**चेटः**—विभज्ज ले पवहण, शमं शामिणा विभज्ज । अण्णे पवहणे भोदु । भट्टके गदुअ णिवेदेमि । (प्रविश्य ।) कधं ण भग्गे । भट्टके, एशे उवत्थिदे पवहणे । (क)

**शकारः**—ण छिण्णा गोणा । ण मला लज्ज । तुमं पि ण मले । (ख)

**चेटः**—अध इं । (ग)

**शकारः**—भाव, आअच्छ । पवहणं पेक्खामो । भावे, तुमं पि मे गुलु पलमगुलु । पेक्खीअशि शादलके अब्भन्तलकेत्ति पुलक्कलणीएत्ति तुमं दाव पवहणं अग्गदो अहिलुह । (घ)

**विटः**—एवं भवतु । (इत्यारोहति ।)

**शकारः**—अधवा चिश्ट तुमम् । तुह बप्पकेलके पवहणे, जेण तुमं अग्गदो अहिलुहशि । हग्गे पवहणशामी । अग्गदो पवहणं अहिलुहामि । (ङ)

**विटः**—भवानेवं ब्रवीति ।

---

(क) विभञ्ज रे प्रवहण, समं स्वामिना विभञ्ज । अन्यत्प्रवहणं भवतु । भट्टारकं गत्वा निवेदयामि । कथं न भग्नम् । भट्टारक, एतदुपस्थितं प्रवहणम् ।

(ख) न छिन्नौ वृषभौ । न मृता रज्जवः । त्वमपि न मृतः ।

(ग) अथ किम् ।

(घ) भाव, आगच्छ । प्रवहणं पश्यावः । भाव, त्वमपि मम गुरुः परमगुरुः । प्रेक्ष्यसे सादरकोऽभ्यन्तरक इति पुरस्करणीय इति त्वं तावत्प्रवहणमग्रतोऽधिरोह ।

(ङ) अथवा तिष्ठ त्वम् । तव पितृसंबन्धि प्रवहणम्, येन त्वमग्रतोऽधिरोहसि । अहं प्रवहणस्वामी । अग्रतः प्रवहणमधिरोहामि ।

---

..मित्याह—कथं न भग्न इति ॥ ण छिण्णा लज्जू, ण मला गोणा इति वक्तव्ये शकारोक्तत्वाद्भ्रमणम् । मम गुरुः । गुरुरित्यतिमान्यत्वपरम् । एवं त्वं प्रेक्षसे । सावरं महतकृत्वा (?) । पुलक्कलिलीए पुष्पतणीयः (?) । पुष्कलिनी । 'एकार्यन्वयग्रच्छनीय इत्यनेन गुरुत्वमेव द्रढयति' इति प्राचीनटीका(?) । त्वं तावत्प्रवहणमग्रत आरोह ॥ अथवा तिष्ठ त्वम् । तव पित्र्यं प्रवहणम् । अहं प्रवहणस्वामी ।

**शकारः**—जइ वि हग्गे एव्वं भणामि, तधा वि तुह एशे आदले 'अहिलुह भश्टके'त्ति भणिदुम् । (क)

**विटः**—आरोहतु भवान् ।

**शकारः**—एशे शंपदं अहिलुहामि । पुत्तका थावलका चेडा, पलिवत्तावेहि पवहणम् । (ख)

**चेटः**—(परावर्त्य ।) अहिलुहदु भट्टालके । (ग)

**शकारः**—(अधिरुह्यावलोक्य च शङ्कां नाटयित्वा त्वरितमवतीर्य विटं कण्ठेऽवलम्ब्य ।) भावे भावे, मलेशि मलेशि । पवहणाधिलूढा लक्खशी चोले वा पडिवशदि । ता जइ लक्खशी, तदो उभे वि मूशे । अध चोले, तदो उभे वि खज्जे । (घ)

**विटः**—न भेतव्यम् । कुतोऽत्र वृषभयाने राक्षस्याः संचारः । मा नाम ते मध्याह्नार्कतापच्छिन्नदृष्टेः स्थावरकस्य सकञ्चुकां छायां दृष्ट्वा भ्रान्तिरुत्पन्ना ।

**शकारः**—पुत्तका थावलका चेडा, जीवेशि । (ङ)

**चेटः**—अध इं । (च)

**शकारः**—भावे, पवहणाधिलूढा इत्थिआ पडिवशदि । ता अवलोएहि । (छ)

**विटः**—कथं स्त्री ।

---

(क) यद्यप्यहमेवं भणामि, तथापि तवैष आचारः 'अधिरोह भट्टारक' इति भणितुम् ।

(ख) एष सांप्रतमधिरोहामि । पुत्रक स्थावरक चेट, परिवर्तय प्रवहणम् ।

(ग) अधिरोहतु भट्टारकः ।

(घ) भाव भाव, मृतोऽसि मृतोऽसि । प्रवहणाधिरूढा राक्षसी चौरो वा प्रतिवसति । तद्यदि राक्षसी, तदोभावपि मुषितौ । अथ चौरः तदोभावपि खादितौ । (ङ) पुत्रक स्थावरक चेट, जीवसि । (च) अथ किम् ।

(छ) भाव, प्रवहणाधिरूढा स्त्री प्रतिवसति । तदवलोकय ।

---

अग्रतः प्रवहणमधिरोहामि ॥ यद्यप्यहमेवं ब्रवीमि, तथापि तवैष आचारः 'अधिरोह भट्टारक' इति भणितुम् ॥ प्रवहणे राक्षसी चौरो वा प्रतिवसति । मूशे खज्जे इति

अवनतशिरसः प्रयाम शीघ्रं पथि वृषभा इव वर्षताडिताक्षाः ।
मम हि सदसि गौरवप्रियस्य कुलजनदर्शनकातरं हि चक्षुः ॥ १५ ॥

**वसन्तसेना**—(सविस्मयमात्मगतम् ।) कधं मम णअणाणं आआसअरो ज्जेव राअसालओ । ता संसइदम्हि मन्दभाआ । एसो दाणिं मम मन्दभाइणीए ऊसरक्खेत्तपडिदो विअ बीअमुट्ठी णिप्फलो इध आगमणो संवुत्तो । ता किं एत्थ करइस्सम् । (क)

**शकारः**—कादले क्खु एशे वुड्ढचेडे पवहणं णावलोएदि । भावे, आलोएहि पवहणम् । (ख)

**विटः**—को दोषः । भवतु । एवं तावत् ।

**शकारः**—कधम्, शिआला उड्डेन्ति, वाअशा वचेन्ति । ता जाव भावे अक्खीहिं भक्खीअदि, दन्तेहिं पेक्खीअदि, ताव हग्गे पलाइश्शम् । (ग)

**विटः**—(वसन्तसेनां दृष्ट्वा । सविषादमात्मगतम् ।) कथमये, मृगी व्याघ्रमनुसरति । भोः, कष्टम् ।

शरच्चन्द्रप्रतीकाशं पुलिनान्तरशायिनम् ।
हंसी हंसं परित्यज्य वायसं समुपस्थिता ॥ १६ ॥

(जनान्तिकम् ।) वसन्तसेने, न युक्तमिदम्, नापि सदृशमिदम् ।

पूर्वं मानादवज्ञाय द्रव्यार्थे जननीवशात् ।

---

(क) कथं मम नयनयोरायासकर एव राजश्यालः । तत्संशयितास्मि मन्दभाग्या । एतदिदानीं मम मन्दभागिन्या ऊषरक्षेत्रपतित इव बीजमुष्टिर्निष्फलमिहागमनं संवृत्तम् । तत्किमत्र करिष्यामि ।

(ख) कातरः खल्वेष वृद्धचेटः प्रवहणं नावलोकयति । भाव, आलोकय प्रवहणम् ।

(ग) कथम्, शृगाला उड्डीयन्ते, वायसा व्रजन्ति । तद्यावद्भावोऽक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते, तावदहं पलायिष्ये ।

---

विपरीतोक्तिः शकारवाक्यत्वात् ॥ **[अ]वनतेत्यादि** । पुष्पिताग्रा । प्रयाम इति लोटौ मस(?) । गौरवमात्मनि बहुमानः ॥ १५ ॥ वुड्ढचेडे निन्दितश्रोतः । 'वृद्धश्वोन्नेषांह्म इत्यावाचकः । अकारणात्' इति पूर्वटीका(?) ॥ कथम् । शृगाला उड्डीयन्ते । वायसा धावन्ति । तद्यावद्भावोऽक्षिभ्यां भक्ष्यते दन्तैः प्रेक्ष(क्ष्य)ते । शकारवाक्यत्वाद्विपरीतोक्तिः । तावदहं पलाये । अन्यथा वापन्यात् (?) । लाघवनायाति कातरं विदुःखं काकादने भीरुः (?) । **शरदिति** ॥ १६ ॥ **पूर्व-**

**वसन्तसेना**—ण। (क) (इति शिरश्चालयति।)

**विटः**—

अशौण्डीर्यस्वभावेन वेशभावेन मन्यते ॥ १७ ॥

ननूक्तमेव मया भवतीं प्रति—'सममुपचर भद्रे सुप्रियं चाप्रियं च।'

**वसन्तसेना**—पवहणविपज्जासेण आगदा। सरणागदम्हि। (ख)

**विटः**—न भेतव्यं न भेतव्यम्। भवतु। एनं वञ्चयामि। (शकारमुपगम्य।) काणेलीमातः, सत्यं राक्षस्येवात्र प्रतिवसति।

**शकारः**—भावे भावे, जइ लक्खशी पडिवशदि, ता कीश ण तुमं मूशेदि। अध चोले, ता किं तुमं ण भक्खिदे। (ग)

**विटः**—किमनेन निरूपितेन। यदि पुनरुद्यानपरम्परया पञ्चामेव नगरीमुज्जयिनीं प्रविशावः, तदा को दोषः स्यात्।

**शकारः**—एव्वं किदे तिं भोदि। (घ)

**विटः**—एवं कृते व्यायामः सेवितो धुर्याणां च परिश्रमः परिहृतो भवति।

**शकारः**—एवं भोदु। थावलआ चेडा, णेह पवहणम्। अधवा चिश्ट चिश्ट। देवदाणं बम्भणाणं च अग्गदो चलणेण गच्छामि। णहि णहि। पवहणं अहिलुहिअ गच्छामि, जेण दूलदो मं पेक्खिअ भणिश्शन्ति—'एशे शे लश्टिअशाले भश्टालके गच्छदि'। (ङ)

---

(क) न। (ख) प्रवहणविपर्यासेनागता। शरणागतास्मि।

(ग) भाव भाव, यदि राक्षसी प्रतिवसति, तत्कथं न त्वां मुष्णाति। अथ चौरः, तदा किं त्वं न भक्षितः। (घ) एवं कृते किं भवति।

(ङ) एवं भवतु। स्थावरक चेट, नय प्रवहणम्। अथवा तिष्ठ तिष्ठ। देवतानां ब्राह्मणानां चाग्रतश्चरणेन गच्छामि। नहि नहि। प्रवहणमधिरुह्य गच्छामि, येन दूरतो मां प्रेक्ष्य भणिष्यन्ति—'एष स राष्ट्रियश्यालो भट्टारको गच्छति'।

---

मिति। वेशभावेन (?) ॥ १७ ॥ नाम्पश इति न्यन्तात् कर्मणि लकारः। मोक्षयति (?)। भक्खिदे भक्षितः। विपरीतोक्तिः पूर्ववत् ॥ अथवेत्यतलस्योक्तिः। शृगाला उड्डीयन्तीत्यादि चतुष्टयमपक्रमम्। देवदाणं बम्भणाणं अग्गदो चलणेण गच्छामि। नहि नहीति न्यायविरु-

**विटः**—(स्वगतम् ।) दुष्करं विषमौषधीकर्तुम् । भवतु । एवं तावत् । (प्रकाशम् ।) काणेलीमातः, एषा वसन्तसेना भवन्तमभिसारयितुमागता ।

**वसन्तसेना**—सन्तं पावम् । सन्तं पावम् । (क)

**शकारः**—(सहर्षम् ।) भावे भावे, मं पवलपुलिशं मणुश्शं वाशुदेवकम् । (ख)

**विटः**—अथ किम् ।

**शकारः**—तेण हि अपुव्वा शिली शमाशादिदा । तश्शिं काले मए लोशाविदा, शंपदं पादेशुं पडिअ पशादेमि । (ग)

**विटः**—साध्वभिहितम् ।

**शकारः**—एशे पादेशुं पडेमि । (इति वसन्तसेनामुपसृत्य ।) अत्तिके, अम्बिके शुणु मम विण्णत्तिम् । (घ)

एशे पडामि चलणेशु विशालणेत्ते
हश्तञ्जलिं दशणहे तव शुद्धदन्ति ।
जं तं मए अवकिदं मदणातुलेण
तं खम्मिदाशि वलगत्ति तव म्हि दाशे ॥ १८ ॥ (ङ)

**वसन्तसेना**—(सक्रोधम् ।) अवेहि । अणज्जं मन्तेसि । (च) (इति पादेन ताडयति ।)

---

(क) शान्तं पापम् । शान्तं पापम् ।

(ख) भाव भाव, मां प्रवरपुरुषं मनुष्यं वासुदेवकम् ।

(ग) तेन ह्यपूर्वा श्रीः समासादिता । तस्मिन्काले मया रोषिता, सांप्रतं पादयोः पतित्वा प्रसादयामि ।

(घ) एष पादयोः पतामि । मातः, अम्बिके, शृणु मम विज्ञप्तिम् ।

(ङ) एष पतामि चरणयोर्विशालनेत्रे हस्ताञ्जलिं दशनखे तव शुद्धदन्ति । यत्तव मयापकृतं मदनातुरेण तत्क्षामितासि वरगात्रि तवास्मि दासः ॥

(च) अपेहि । अनार्यं मन्त्रयसि ।

---

द्धम् ॥ तेन ह्यपूर्वा श्रीः समासादिता । लोशाविदा रोषिता ॥ हे अत्तिके हे अम्बिके । **एसे पडामि इत्यादि** । वसन्ततिलकम् । एष पतामि चरणयोर्विशालनेत्रे हस्ताञ्जलिं दशनखे तव शुद्धदन्ति । यत्तव मयापकृतं मदनातुरेण

**शकारः**—(सक्रोधम् ।)

जे चुम्बिदे अम्बिकमादुकेहिं गदे ण देवाणं वि जे पणामम् ।
शे पाडिदे पादतलेण मुण्डे वणे शिआलेण जधा मुदङ्गे ॥ १९ ॥

अले थावलआ चेडा, कहिं तुए एशा शमाशादिदा । (क)

**चेटः**—भश्टके, गामशअलेहिं लुद्धे लाअमग्गे । तदो चालुदत्तश्श लुक्खवाडिआए पवहणं थाविअ तहिं ओदलिअ जाव चक्कपलिवट्टिअं कलेमि, ताव एशा पवइणविपज्जाशेण इह आलूढे त्ति तक्केमि । (ख)

**शकारः**—कधं पवहणविपज्जाशेण आगदा । ण मं अहिशालिदुम् । ता ओदल ओदल ममकेलकादो पवहणादो । तुमं तं दलिद्दशत्थवाहपुत्तकं अहिशालेशि । ममकेलकाइं गोणाइं बाहेशि । ता ओदल ओदल गब्भदाशि, ओदल ओदल । (ग)

**वसन्तसेना**—तं अज्जचारुदत्तं अहिसारेसि त्ति जं सच्चम्, अलंकिदम्हि इमिणा वअणेण । संपदं जं भोदु तं भोदु । (घ)

---

(ग) यच्चुम्बितमम्बिकामातृकाभिर्गतं न देवानामपि यत्प्रणामम् ।
तत्पातितं पादतलेन मुण्डं वने शृगालेन यथा मृताङ्गम् ॥

अरे स्थावरक चेट, कुत्र त्वयैषा समासादिता ।

(ख) भट्टक, ग्रामशकटै रुद्धो राजमार्गः । तदा चारुदत्तस्य वृक्षवाटिकायां प्रवहणं स्थापयित्वा तत्रावतीर्य यावच्चक्रपरिवृत्तिं करोमि, तावदेषा प्रवहणविपर्यासेनेहारूढेति तर्कयामि ।

(ग) कथं प्रवहणविपर्यासेनागता । न मामभिसारयितुम् । तदवतरावतर मदीयात्प्रवहणात् । त्वं तं दरिद्रसार्थवाहपुत्रकमभिसारयसि । मदीयौ गावौ वाहयसि । तदवतरावतर गर्भदासि, अवतरावतर ।

(घ) तमार्यचारुदत्तमभिसारयसीति यत्सत्यम्, अलंकृतास्म्यमुना वचनेन । सांप्रतं यद्भवतु तद्भवतु ।

---

तत्क्षमस्वेदानीं वरगात्रि तवास्मि दासः ॥१८॥ **जे चुम्बिदे इति ।** उपजात्या । ये चुम्बिदा मातृकाम्बिकाभिर्गता न देवानामपि ये प्रमाणम्(प्रणामम्) । ते पातिताः पादतलेन मुण्डा वने शृगालेन यथा मृदङ्गाः ॥ मातृका इति स्वार्थे

**शकारः**—

एदेहिं दे दशणहुप्पलमण्डलेहिं
हत्थेहिं चाडुशदताडणलम्पडेहिं ।
कट्टामि दे वलतणुं णिअजाणकादो
केशेशु वालिदइअं वि जहा जडाऊ ॥ २० ॥ (क)

**विटः**—

अग्राह्या मूर्धजेष्वेताः स्त्रियो गुणसमन्विताः ।
न लताः पल्लवच्छेदमर्हन्त्युपवनोद्भवाः ॥ २१ ॥

तदुत्तिष्ठ त्वम् । अहमेनामवतारयामि । वसन्तसेने, अवतीर्यताम् ।

(वसन्तसेनावतीर्यैकान्ते स्थिता ।)

**शकारः**—(स्वगतम् ।) जे शे मम वअणावमाणेण तदा लोशग्गी शंधुक्खिदे, अज्ज एदाए पादप्पहालेण अणेण पज्जलिदे । तं शंपदं मालेमि णम् । भोदु । एव्वं दाव । (प्रकाशम् ।) भावे भावे,

जदिच्छशे लम्बदशाविशालं पावालअं शुत्तशदेहिं जुत्तम् ।
मंशं च खादुं तह तुश्टि कादुं चुहू चुहू चुक्कु चुहू चुहूत्ति॥२२॥(ख)

---

(क) एताभ्यां ते दशनखोत्पलमण्डलाभ्यां
हस्ताभ्यां चाटुशतताडनलम्पटाभ्याम् ।
कर्षामि ते वरतनुं निजयानका-
त्केशेषु वालिदयितामिव यथा जटायुः ॥

(ख) यः स मम वचनावमानेन तदा रोषाग्निः संधुक्षितः, अद्यैतस्याः पादप्रहारेणानेन प्रज्वलितः । तत्सांप्रतं मारयाम्येनाम् । भवतु । एवं तावत् । भाव भाव,

यदीच्छसि लम्बदशाविशालं प्रावारकं सूत्रशतैर्युक्तम् ।
मांसं च खादितुं तथा तुष्टिं कर्तुं चुहू चुहू चुक्कु चुहू चुहू इति ॥

---

कः । मुण्डा इति बहुवचनमप्यनर्थकम् ॥ १९ ॥ **एदेहिं इत्यादि** । वसन्ततिलकच्छन्दसा । सबिन्दोः पाक्षिकगुरुत्वात् एदेहिं हत्थेहिं इत्यनयोर्लघुत्वम् । एताभ्यां तव दशनखोत्पलमण्डलाभ्यां हस्ताभ्यां चाटुशतताडनलम्पटाभ्याम् । कर्षयामि दे त्वाम् । वरतनुं मम (निज) यानकात्केशेषु वालिदयितामिव यथा केशेषु जटायुराकृष्टवान् । पाठान्तरे हनूमानित्यर्थः । व्याहतोपमं चेदम् ॥ २० ॥ **अग्राह्या इति** ॥ २१ ॥ योऽसौ वच्च(च)नावमानेन तदा रोषाग्निः संधुक्षितः । सोऽद्यैतस्याः पादप्रहारेणानेन प्रज्वलितः । ततः सांप्रतं मारयाम्येनाम् । **जदिच्छसे इत्यादि** । उपजातिच्छन्दसा । यदीच्छसि लम्बदशाविशालं प्रावारकं प्रच्छदं सूत्रशतैर्ग्रथितम् । मत्स्यं च खादितुं तथा तुष्टिं कर्तुम् । चुहू चुहू

**विटः**—ततः किम् ।

**शकारः**—मम पिअं कलेहि । (क)

**विटः**—बाढं करोमि वर्जयित्वा त्वकार्यम् ।

**शकारः**—भावे, अकज्जाह गन्धे वि णत्थि । लक्खशी कावि णत्थि । (ख)

**विटः**—उच्यतां तर्हि ।

**शकारः**—मालेहि वसन्तशेणिअम् । (ग)

**विटः**—(कर्णौ पिधाय ।)

बालां स्त्रियं च नगरस्य विभूषणं च
वेश्यामवेशसदृशप्रणयोपचाराम् ।
एनामनागसमहं यदि घातयामि
केनोडुपेन परलोकनदीं तरिष्ये ॥ २३ ॥

**शकारः**—अहं ते भेडकं दइश्शम् । अण्णं च । विवित्ते उज्जाणे इध मालन्तं को तुमं पेक्खिश्शदि । (घ)

**विटः**—

पश्यन्ति मां दशदिशो वनदेवताश्च
चन्द्रश्च दीप्तकिरणश्च दिवाकरोऽयम् ।
धर्मानिलौ च गगनं च तथान्तरात्मा
भूमिस्तथा सुकृतदुष्कृतसाक्षिभूता ॥ २४ ॥

**शकारः**—तेण हि पडन्तोवालिदं कदुअ मालेहि । (ङ)

**विटः**—मूर्ख, अपध्वस्तोऽसि ।

(क) मम प्रियं कुरु ।

(ख) भाव अकार्यस्य गन्धोऽपि नास्ति । राक्षसी कापि नास्ति ।

(ग) मारय वसन्तसेनाम् ।

(घ) अहं त उडुपं दास्यामि । अन्यच्च विविक्ते उद्यान इह मारयन्तं कस्त्वां प्रेक्षिष्यते । (ङ) तेन हि पटान्तापवारितां कृत्वा मारय ।

चुक्कु चुट्ट चुट्टूत्ति इत्यनुकरणम् ॥ २२ ॥ निक्षिकेऽन्योन्यार्थावेतौ (?) ॥ **बालामिति** । अवेशसदृशेति । अवेश्यापाटकोचितं कृत्तिमम् (?) ॥ २३ ॥ विविक्ते विजने । पटान्तापवारितां कृत्वा ॥ **पश्यन्तीति** ॥ २४ ॥ अपध्वस्तो

शकारः—अधम्मभीलू एशे वुड्ढकोले । भोदु । थावलअं चेडं अणुणेमि । पुत्तका थावलका चेडा, शोवण्णखण्डुआइं दइश्शम् । (क)

चेटः—अहं पि पहिलिश्शम् । (ख)

शकारः—शोवण्णं दे पीढके कालइश्शम् । (ग)

चेटः—अहं पि उवविशिश्शम् । (घ)

शकारः—शव्वं दे उच्छिश्टअं दइश्शम् । (ङ)

चेटः—अहं पि खाइश्शम् । (च)

शकारः—शव्वचेडाणं महत्तलकं कलइश्शम् । (छ)

चेटः—भट्टके, हुविश्शम् । (ज)

शकारः—ता मण्णेहि मम वअणम् । (झ)

चेटः—भट्टके, शव्वं कलेमि वज्जिअ अकज्जम् । (ञ)

शकारः—अकज्जाह गन्धे वि णत्थि । (ट)

चेटः—भणादु भट्टके । (ठ)

शकारः—एणं वशन्तशेणिअं मालेहि । (ड)

चेटः—पशीददु भट्टके । इअं मए अणज्जेण अज्जा पवहणपलिवत्तणेण आणीदा । (ढ)

---

(क) अधर्मभीरुरेष वृद्धकोलः । भवतु । स्थावरकं चेटमनुनयामि । पुत्रक स्थावरक चेट, सुवर्णकटकानि दास्यामि ।

(ख) अहमपि परिधास्यामि । (ग) सौवर्णं ते पीठकं कारयिष्यामि ।

(घ) अहमप्युपवेक्ष्यामि । (ङ) सर्वं त उच्छिष्टं दास्यामि ।

(च) अहमपि खादिष्यामि ।

(छ) सर्वचेटानां महत्तरकं कारयिष्यामि ।

(ज) भट्टक, भविष्यामि । (झ) तन्मन्यस्व मम वचनम् ।

(ञ) भट्टक, सर्वं करोमि वर्जयित्वाकार्यम् ।

(ट) अकार्यस्य गन्धोऽपि नास्ति । (ठ) भणतु भट्टकः ।

(ड) एनां वसन्तसेनां मारय ।

(ढ) प्रसीदतु भट्टकः । इयं मयानार्येणार्या प्रवहणपरिवर्तनेनानीता ।

---

धिकृतः ॥ खण्डुआइं बाहुवलय[वि]शेषान् ॥ पहिलिस्सं परिधास्ये ॥ पीढके पीठम् ॥ उवविसिस्सं उपवेक्ष्यामि ॥ तंवहिहिसिधोष्टासि (?) उच्छिश्टअं भोजनाव-

**शकारः**—अले चेडा, तवावि ण पहवामि। (क)

**चेटः**—पहवदि भट्टके शलीलाह, ण चालित्ताह। ता पशीददु पशीददु भट्टके। भाआमि क्खु अहम्। (ख)

**शकारः**—तुमं मम चेडे भविअ कश्श भाआशि। (ग)

**चेटः**—भट्टके, पललोअश्श। (घ)

**शकारः**—के शे पललोए। (ङ)

**चेटः**—भट्टके, शुकिददुक्किदश्श पलिणामे। (च)

**शकारः**—केलिशे शुकिदश्श पलिणामे। (छ)

**चेटः**—जादिशे भट्टके बहुशोवण्णमण्डिदे। (ज)

**शकारः**—दुक्किदश्श केलिशे। (झ)

**चेटः**—जादिशे हग्गे पलपिण्डभक्खके भूदे। ता अकज्जं ण कलइश्शम्। (ञ)

**शकारः**—अले, ण मालिश्शशि। (ट) (इति बहुविधं ताडयति।)

**चेटः**—पिट्टयदु भट्टके, मालेदु भट्टके, अकज्जं ण कलइश्शम्।

---

(क) अरे चेट, तवापि न प्रभवामि।

(ख) प्रभवति भट्टकः शरीरस्य, न चारित्रस्य। तत्प्रसीदतु प्रसीदतु भट्टकः। बिभेमि खल्वहम्।

(ग) त्वं मम चेटो भूत्वा कस्माद्बिभेषि।

(घ) भट्टक, परलोकात्। (ङ) कः स परलोकः।

(च) भट्टक, सुकृतदुष्कृतस्य परिणामः।

(छ) कीदृशः सुकृतस्य परिणामः।

(ज) यादृशो भट्टको बहुसुवर्णमण्डितः। (झ) दुष्कृतस्य कीदृशः।

(ञ) यादृशोऽहं परपिण्डभक्षको भूतः। तदकार्यं न करिष्यामि।

(ट) अरे, न मारयिष्यसि।

---

शिष्टम्॥ प्रभवति मम भट्टारकः शरीरस्य, न चारित्र्यस्य॥ परपिण्डभक्षको भूतः॥

जेण म्हि गब्भदाशे विणिम्मिदे भाअधेअदोशेहिं ।
अहिअं च ण कीणिश्शं तेण अकज्जं पलिहलामि ॥ २५ ॥ (क)

**वसन्तसेना**—भाव, शरणागद म्हि । (ख)

**विटः**—काणेलीमातः, मर्षय मर्षय । साधु स्थावरक, साधु ।

अप्येष नाम परिभूतदशो दरिद्रः
प्रेष्यः परत्र फलमिच्छति, नास्य भर्ता ।
तस्मादमी कथमिवाद्य न यान्ति नाशं
ये वर्धयन्त्यसदृशं सदृशं त्यजन्ति ॥ २६ ॥

अपि च ।

रन्ध्रानुसारी विषमः कृतान्तो यदस्य दास्यं तव चेश्वरत्वम् ।
श्रियं त्वदीयां यदयं न भुङ्क्ते यदेतदाज्ञां न भवान्करोति ॥ २७ ॥

**शकारः**—(स्वगतम् ।) अधम्मभिलुए वुड्ढखोडे, पललोअभिलू एशे गब्भदाशे । हग्गे लट्टिअशाले कश्श भाआमि वलपुलिशमणुश्शे । (प्रकाशम् ।) अले गब्भदाशे चेडे, गच्छ तुमम् । ओवलके पविशिअ वीशन्ते एअन्ते चिश्ट । (ग)

**चेटः**—जं भट्टके आणवेदि । (वसन्तसेनामुपसृत्य ।) अज्जए, एत्तिके मे विहवे । (घ) (इति निष्क्रान्तः ।)

**शकारः**—(परिकरं बध्नन् ।) चिश्ट वसन्तशेणिए, चिश्ट । मालइश्शम् । (ङ)

---

(क) ताडयतु भट्टकः, मारयतु भटकः, अकार्यं न करिष्यामि ।
येनास्मि गर्भदासो विनिर्मितो भागधेयदोषैः ।
अधिकं च न क्रीणिष्यामि तेनाकार्यं परिहरामि ॥

(ख) भाव, शरणागतास्मि ।

(ग) अधर्मभीरुको वृद्धश्रृगालः, परलोकभीरुरेष गर्भदासः । अहं राष्ट्रियश्यालः कस्माद्बिभेमि वरपुरुषमनुष्यः । अरे गर्भदास चेट, गच्छ त्वम् । अपवारके प्रविश्य विश्रान्त एकान्ते तिष्ठ ।

(घ) यद्भटक आज्ञापति । आर्ये, एतावान्मे विभवः ।

(ङ) तिष्ठ वसन्तसेने, तिष्ठ । मारयिष्यामि ।

---

पिट्टयतु ताडयतु मारयतु वा । **जेण म्हीत्यादि** । गाथा । येनास्मि गर्भदासो विनिर्मितो भागधेयदोषेण । अधिकं च न क्रीणि(क्रे)ष्यामि तेनाहमकार्यं परिहरामि ॥ २५ ॥ **अपीति** ॥ २६ ॥ **रन्ध्रेति** ॥ २७ ॥ कस्स भाआमि क-

**विटः**—आः, ममाग्रतो व्यापादयिष्यसि । (इति गले गृह्णाति ।)

**शकारः**—(भूमौ पतति ।) भावे भट्टकं मालेदि । (इति मोहं नाटयति । चेतनां लब्ध्वा ।)

शव्वकालं मए पुश्टे मंशेण अ घिएण अ ।
अज्ज कज्जे शमुप्पण्णे जादे मे वैलिए कधम् ॥ २८ ॥

(विचिन्त्य) भोदु । लद्धे मए उवाए । दिण्णा वुड्ढखोडेण शिलश्चालणशण्णा । ता एदं पेशिअ वशन्तशेणिअं मालइश्शम् । एव्वं दाव । (प्रकाशम् ।) भावे, जं तुमं मए भणिदे, तं कधं हग्गे एव्वं वड्ढकेहिं मल्लकप्पमाणेहिं कुलेहिं जादे अकज्जं कलेमि । एव्वं एदं अङ्गीकलावेदुं मए भणिदम् । (क)

**विटः**—

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ २९ ॥

**शकारः**—भावे, एशा तव अग्गदो लज्जाअदि, ण मं अङ्गी-

---

(क) भावो भट्टकं मारयति ।

सर्वकालं मया पुष्टो मांसेन च घृतेन च ।
अद्य कार्ये समुत्पन्ने जातो मे वैरिकः कथम् ॥

भवतु । लब्धो मयोपायः । दत्ता वृद्धशृगालेन शिरश्चालनसंज्ञा । तदेतं प्रेष्य वसन्तसेनां मारयिष्यामि । एवं तावत् । भाव, यत्त्वं मया भणितः, तत्कथमहमेवं बृहत्तरैः मल्लकप्रमाणैः कुलैर्जातोऽकार्यं करोमि । एवमेतदङ्गीकारयितुं मया भणितम् ।

---

(स्मात्)स्य बिभेमि । अपि तु न कस्यापीत्यर्थः॥ ओवलिके अपवारके। गृहविशेष इत्यर्थः ॥ परिकरं काछ इति प्रसिद्धम् ॥ **सर्वकालमित्यादि** । अर्थस्तु—सर्वकालं मया पुष्टो मांसेन च घृतेन च । अद्य कार्ये समुत्पन्ने जातो मे वैरिकः कथम् ॥ वैरिको वैरी । स्वार्थे कः ॥ २८ ॥ लब्धो मयोपायः । दत्ता वृद्धखोडेन शण्णा उपदेशः । एदं विटम् । भाव, यत्त्वं मया भणितः । सर्वः समम् (?) । कथमहं एवं बृहतो मल्लकप्रमाणात् । समुद्रप्रमाणादिति वक्तव्ये मो(मौ)र्ख्यान्मल्लकप्रमाणतया कुलमुपमिनोति । 'मल्लिका पत्रपुटिका तया कुलस्य महत्त्वं मौर्ख्यादुपमिनोति' इति प्राचीनटीका। जातोऽकार्यं करोमि ।एवमेतदङ्गीकारयितुं मया भणि-

कलेदि। ता गच्छ। थावलअचेडे मए पिश्टिदे गदे वि। एशे पलाइअ गच्छदि। ता तं गेण्हिअ आअच्छदु भावे। (क)

**विटः**—(स्वगतम्।)

अस्मत्समक्षं हि वसन्तसेना शौण्डीर्यभावान्न भजेत मूर्खम्।
तस्मात्करोम्येष विविक्तमस्या विविक्तविश्रम्भरसो हि कामः ३०

(प्रकाशम्।) एवं भवतु। गच्छामि।

**वसन्तसेना**—(पटान्ते गृहीत्वा।) णं भणामि शरणागदम्हि। (ख)

**विटः**—वसन्तसेने, न भेतव्यं न भेतव्यम्। काणेलीमातः, वसन्तसेना तव हस्ते न्यासः।

**शकारः**—एव्वम्। मम हश्ते एशा णाशेण चिश्टदु (ग)

**विटः**—सत्यम्।

**शकारः**—शच्चम्। (घ)

**विटः**—(किंचिद्गत्वा।) अथवा मयि गते नृशंसो हन्यादेनाम्। तदपवारितशरीरः पश्यामि तावदस्य चिकीर्षितम्। (इत्येकान्ते स्थितः।)

**शकारः**—भोदु। मालइश्शम्। अधवा कवडकावडिके एशे बम्हणे वुड्ढखोडे कदावि ओवालिदशलीले गडिअ शिआले भविअ हुलुभुलिं कलेदि। ता एदश्श वञ्चणाणिमित्तं एव्वं दाव कलइश्शम्। (कुसुमावचयं कुर्वन्नात्मानं मण्डयति।) वाशू वाशू वशन्तशेणिए, एहि। (ङ)

---

(क) भाव, एषा तवाग्रतो लज्जते, न मामङ्गीकरोति। तद्गच्छ। स्थावरकचेटो मया ताडितो गतोऽपि। एष प्रपलाय्य गच्छति। तस्मात्तं गृहीत्वागच्छतु भावः।

(ख) ननु भणामि शरणागतास्मि।

(ग) एवम्। मम हस्त एषा न्यासेन तिष्ठतु।

(घ) सत्यम्।

(ङ) भवतु। मारयिष्यामि। अथवा कपटकापटिक एष ब्राह्मणो वृद्धशृगालः कदाचिदपवारितशरीरो गत्वा शृगालो भूत्वा कपटं करोति। तदेतस्य वञ्चनानिमित्तमेवं तावत्करिष्यामि। बाले बाले वसन्तसेने, एहि।

---

तम्॥ **किं कुलेनेति**॥ २९॥ **अस्मदिति**॥३०॥ णासेण न्यासेन, विनाशेन च॥ अथवा कपटकापटिको ब्राह्मणः वृद्धखोडः कदाचिदपवारितस्तिष्ठति शृगालः॥

**विटः**—अये, कामी संवृत्तः । हन्त, निर्वृतोऽस्मि । गच्छामि । (इति निष्क्रान्तः ।)

**शकारः**—

शुवण्णअं देमि पिअं वदेमि पडेमि शीशेण शवेश्टणेण ।
तधा वि मं णेच्छशि शुद्धदन्ति किं शेवअं कश्टमआ मणुश्शा॥३१॥(क)

**वसन्तसेना**—को एत्थ संदेहो । (अवनतमुखी 'खलचरित' इत्यादि श्लोकद्वयं पठति ।)

खलचरित निकृष्ट जातदोषः
कथमिह मां परिलोभसे धनेन ।
सुचरितचरितं विशुद्धदेहं
न हि कमलं मधुपाः परित्यजन्ति ॥ ३२ ॥

यत्नेन सेवितव्यः पुरुषः कुलशीलवान्दरिद्रोऽपि ।
शोभा हि पणस्त्रीणां सदृशजनसमाश्रयः कामः ॥ ३३ ॥

अवि अ । सहआरपादवं सेविअ ण पलासपादवं अङ्गीकरिस्सम् । (ख)

**शकारः**—दाशीए धीए, दलिद्दचालुदत्ताके शहआलपादवे कडे, हग्गे उण पलाशे भणिदे, किंशुके वि ण कडे । एव्वं तुमं मे गालिं देन्ती अज्जवि तं ज्जेव चालुदत्ताकं शुमलेशि । (ग)

---

(क) सुवर्णकं ददामि प्रियं वदामि पतामि शीर्षेण सवेष्टनेन ।
तथापि मां नेच्छसि शुद्धदन्ति किं सेवकं कष्टमया मनुष्याः ॥

(ख) कोऽत्र संदेहः । अपि च । सहकारपादपं सेवित्वा न पलाशपादपमङ्गीकरिष्यामि ।

(ग) दास्याः पुत्रि, दरिद्रचारुदत्तकः सहकारपादपः कृतः, अहं पुनः पलाशो भणितः, किंशुकोऽपि न कृतः । एवं त्वं मह्यं गालीं ददत्यद्यापि तमेव चारुदत्तकं स्मरसि ।

---

**सुवण्णकमिति** । उपजातिः सुवर्णकं ददामि, प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन सोष्णीषेण । तेन नूनं वेश्नी इति प्रसिद्धम् (?) । तथापि मां नेच्छसि शुद्धदन्ति किं सेवका कष्टमया मनुष्याः ॥३१॥ **'खलचरित' 'यत्नेन' [इति]** । प्रतीकपाठो दृश्यते । तत्र 'इत्यादि' इत्यध्याहार्यः। इत्यादि श्लोकद्वयं पठतीत्यर्थः । खलचरितेति निकृष्टेति च संबोधनद्वयम् ॥३२॥३३॥ पलाशपदेन राक्षसोऽप्यभिधीयते । गालिं

**वसन्तसेना**—हिअअगदो ज्जेव किंत्ति न सुमरीअदि । (क)

**शकारः**—अज्ज वि दे हिअअगदं तुमं च शमं ज्जेव मोडेमि । ता दलिद्दशत्थवाहअमणुश्शकामुकिणि, चिश्ट चिश्ट । (ख)

**वसन्तसेना**—भण भण पुणो वि भण सलाहणिआइं एदाइं अक्खराइं । (ग)

**शकारः**—पलित्ताअदु दाशीए पुत्ते दलिद्दचालुदत्ताके तुमम् । (घ)

**वसन्तसेना**—परित्ताअदि जदि मं पेक्खदि । (ङ)

**शकारः**—

किं शे शक्के वालिपुत्ते महिन्दे लम्भापुत्ते कालणेमी शुबन्धू ।
लुद्दे लाआ दोणपुत्ते जडाऊ चाणक्के वा धुन्धुमाले तिशङ्कू ॥३४॥

अथवा, एदे वि दे ण लक्खन्ति ।

चाणक्केण जधा शीदा मालिदा भालदे जुए ।
एव्वं दे मोडइश्शामि जडाऊ विअ दोव्वदिम् ॥३५॥ (च)

(इति ताडयितुमुद्यतः ।)

---

(क) हृदयगत एव किमिति न स्मर्यते ।

(ख) अद्यापि ते हृदयगतं त्वां च सममेव मोटयामि । तद्दरिद्रसार्थवाहकमनुष्यकामुकिनि, तिष्ठ तिष्ठ ।

(ग) भण भण पुनरपि भण श्लाघनीयान्येतान्यक्षराणि ।

(घ) परित्रायतां दास्याः पुत्रो दरिद्रचारुदत्तकस्त्वाम् ।

(ङ) परित्रायते यदि मां प्रेक्षते ।

(च) किं स शक्रो वालिपुत्रो महेन्द्रो रम्भापुत्रः कालनेमिः सुबन्धुः ।
रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कुः ॥

---

देती (न्ती)साक्षेपं वदन्ती इति देशीति चिरंतनटीका ॥ **किं शे शक्के इति ।** शक्करीविशेषच्छन्दसा श्लोकः । किमसौ [शक्रो] वालिपुत्रो महेन्द्रो रम्भापुत्रः कालनेमिः सुबन्धुः । रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कुः ॥ कालनेमिरसुरः । सुबन्धुः कविविशेषः । धुन्धुरसुरभेदः ॥३४॥ अथ वा, एतेऽपि त्वां न रक्षन्ति । **चाणक्येनेत्यादि** । अर्थस्तु—चाणक्येन यथा सीता मारिता भारते युगे भारतावच्छिन्ने समये । एवं त्वां मारयिष्यामि जटायुरिव द्रौपदीम् ॥ ३५ ॥

**वसन्तसेना**—हा अत्ते, कहिं सि । हा अज्जचारुदत्त, एसो जणो असंपुण्णमणोरधो ज्जेव विवज्जदि । ता उद्धं अक्कन्दइस्सम् । अधवा वसन्तसेणा उद्धं अक्कन्ददि त्ति लज्जणीअं क्खु एदम् । णमो अज्जचारुदत्तस्स । (क)

**शकारः**—अज्जवि गब्भदाशी तश्श ज्जेव पावस्स णामं गेण्हदि (इति कण्ठे पीडयन् ।) शुमल गब्भदाशि, शुमल । (ख)

**वसन्तसेना**—णमो अज्जचारुदत्तस्स । (ग)

**शकारः**—मल गब्भदाशि, मल । (घ) ( नाट्येन कण्ठे निपीडयन्मारयति ।)

(वसन्तसेना मूर्च्छिता निश्चेष्टा पतति ।)

**शकारः**—(सहर्षम् ।)

एदं दोशकलण्डिअं अविणअश्शावासभूदं खलं
लत्तं तश्श किलागदश्श लमणे कालागदं आअदम् ।
किं एशे शमुदाहलामि णिअअं बाहूण शूलत्तणं
णीशाशे वि मलेइ अम्ब शुमला शीदा जधा भालदे ॥३६॥

---

अथवा, एतेऽपि त्वां न रक्षन्ति ।

चाणाक्येन यथा सीता मारिता भारते युगे ।
एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥

(क) हा मातः, कुत्रासि । हा आर्यचारुदत्त, एष जनोऽसंपूर्णमनोरथ एव विपद्यते । तदूर्ध्वमाक्रन्दयिष्यामि । अथवा वसन्तसेनोर्ध्वमाक्रन्दतीति लज्जनीयं खल्वेतत् । नम आर्यचारुदत्ताय ।

(ख) अद्यापि गर्भदासी तस्यैव पापस्य नाम गृह्णाति । स्मर गर्भदासि, स्मर । (ग) नम आर्यचारुदत्ताय ।

(घ) म्रियतां गर्भदासि, म्रियताम् ।

---

ऊर्ध्वमुच्चैस्तराम् ॥ शुमल स्मर ॥ मल म्रियस्व । **एदं दोशकलण्डिअमित्यादि** । शार्दूलेन श्लोकद्वयम् । एतां दोषकरण्डिकामविनयस्यावासभूतां खलां दुर्जनस्वभावाम् । रक्तां तस्य चारुदत्तस्य किलागतस्य रमणे संभोगनिमित्तं कालागतामागताम् । कालां कृष्णाम् । किमेष समुदाहरामि निजकं बाह्वोः शूरत्वम् । निश्वासापि म्रियते

इच्छन्तं मम णेच्छति त्ति गणिआ लोशेण मे मालिदा
 शुण्णे पुप्फकलण्डके त्ति शहशा पाशेण उत्ताशिदा ।
शेवावञ्चिद भादुके मम पिदा मादेव शा दोप्पदी
 जे शे पेक्खदि णेदिशं ववशिदं पुत्ताह शूलत्तणम् ॥ ३७ ॥

भोदु । संपदं वुड्ढखोडे आगमिश्शदि त्ति । ता ओशलिअ चिश्टामि । (क) (तथा करोति ।)

(प्रविश्य चेटेन सह ।)

**विटः**—अनुनीतो मया स्थावरकश्चेटः । तद्यावत्काणेलीमातरं पश्यामि । (परिक्रम्यावलोक्य च ।) अये, मार्ग एव पादपो निपतितः । अनेन च पतता स्त्री व्यापादिता । भोः पाप, किमिदमकार्यमनुष्ठितं त्वया । तवापि पापिनः पतनात्स्त्रीवधदर्शनेनातीव पातिता वयम् । अनिमित्तमेतत्, यत्सत्यं वसन्तसेनां प्रति शङ्कितं मे मनः । सर्वथा देवताः स्वस्ति करिष्यन्ति । ( शकारमुपसृत्य । ) काणेलीमातः, एवं मयानुनीतः स्थावरकश्चेटः ।

---

(क) एतां दोषकरण्डिकामविनयस्यावासभूतां खलां
 रक्तां तस्य किलागतस्य रमणे कालागतामागताम् ।
किमेष समुदाहरामि निजकं बाह्वोः शूरत्वं
 निःश्वासापि म्रियतेऽम्बा, सुमृता सीता तथा भारते ॥
इच्छन्तं मां नेच्छतीति गणिका रोषेण मया मारिता
 शून्ये पुष्पकरण्डक इति सहसा पाशेनोत्रासिता ।
सेवावञ्चितो भ्राता मम पिता मातेव सा द्रौपदी
 योऽसौ पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम् ॥

भवतु । सांप्रतं वृद्धशृगाल आगमिष्यतीति । ततोऽपसृत्य तिष्ठामि ।

---

अम्बा सुमृता सीता यथा भारते ॥ ३६ ॥ इच्छन्तं मां नेच्छतीति गणिका रोषेण मया मारिता शून्ये पुष्पकरण्डके इति सहसा पाशेनोत्रासिता । मया रोषेण मारिता [इति] विपर्यस्य योजना । सेवावञ्चितो भ्राता मम पिता माता च सा द्रौपदी । पाठान्तरे तु प्रमांतः पतिः (?) । या सा पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम् ॥ ३७ ॥ ता ततः । अपसृत्य तिष्ठामि ॥ पाप इति वृक्षं संबोधयति । अनिमित्तमसंकुलम् ॥ पिट्ठदो पृष्ठतः ॥ दक्षिणदिग्गतत्वं मृतत्वमपि ।

**शकारः**—भावे, शाअदं दे । पुश्तका थावलका चेडा, तवावि शाअदम् । (क)

**चेटः**—अध इं । (ख)

**विटः**—मदीयं न्यासमुपनय ।

**शकारः**—कीदिशे णाशे । (ग)

**विटः**—वसन्तसेना ।

**शकारः**—गडा । (घ)

**विटः**—क ।

**शकारः**—भावश्य ज्जेव पिश्टदो । (ङ)

**विटः**—(सवितर्कम् ।) न गता खलु सा तया दिशा ।

**शकारः**—तुमं कदमाए दिशाए गडे । (च)

**विटः**—पूर्वया दिशा ।

**शकारः**—शा वि दक्खिणाए गडा । (छ)

**विटः**—अहं दक्षिणया ।

**शकारः**—शा वि उत्तलाए । (ज)

**विटः**— अत्याकुलं कथयसि । न शुध्यति मेऽन्तरात्मा । तत्कथय सत्यम् ।

**शकारः**—शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं । ता शंठावेहि हिअअम् । एशा मए मालिदा । (झ)

**विटः**—(सविषादम्) सत्यं त्वया व्यापादिता ।

---

(क) भाव, स्वागतं ते । पुत्रक स्थावरक चेट, तवापि स्वागतम् ।
(ख) अथ किम् । (ग) कीदृशो न्यासः ।
(घ) गता । (ङ) भावस्यैव पृष्ठतः ।
(च) त्वं कतमया दिशा गतः । (छ) सापि दक्षिणया गता ।
(ज) साप्युत्तरया ।
(झ) शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम् । ततः संस्थापय हृदयम् । एषा मया मारिता ।

---

शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम् । संस्थापय हृदयम् । एषा मया मारिता ॥ यदि मम न प्रत्येषि पराक्रमे, ततः प्रेक्षस्व राष्ट्रिक(य)श्यालस्य शूरत्वम् ।

**शकारः**—जइ मम वअणे न पत्तिआअशि, ता पेक्ख पढमं लश्टिअशालशंठाणाह शूलत्तणम् । (क) (इति दर्शयति ।)

**विटः**—हा, हतोऽस्मि मन्दभाग्यः । (इति मूर्छितः पतति ।)

**शकारः**—ही ही । उवलदे भावे । (ख)

**चेटः**—शमश्शशदु शमश्शशदु भावे । अविचालिअं पवहणं आणन्तेण ज्जेव मए पढमं मालिदा । (ग)

**विटः**—(समाश्वस्य सकरुणम् ।) हा वसन्तसेने,

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति-
र्हा हालंकृतभूषणे सुवदने क्रीडारसोद्भासिनि ।
हा सौजन्यनदि प्रहासपुलिने हा मादृशामाश्रये
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः ॥३८॥

(सास्रम् ।) कष्टं भोः, कष्टम् ।

किं नु नाम भवेत्कार्यमिदं येन त्वया कृतम् ।
अपापा पापकल्पेन नगरश्रीर्निपातिता ॥ ३९ ॥

(स्वगतम् ।) अये, कदाचिदयं पाप इदमकार्यं मयि संक्रामयेत् । भवतु । इतो गच्छामि । (इति परिक्रामति ।)

(शकार उपगम्य धारयति ।)

**विटः**—पाप, मा मा स्प्राक्षीः । अलं त्वया । गच्छाम्यहम् ।

**शकारः**—अले, वशन्तशेणिअं शअं ज्जेव मालिअ मं दूशिअ कहिं पलाअशि । शंपदं ईदिशे हग्गे अणाधे पाविदे । (घ)

**विटः**—अपध्वस्तोऽसि ।

---

(क) यदि मम वचने न प्रत्ययसे, तत्पश्य प्रथमं राष्ट्रियश्यालसंस्थानस्य शूरत्वम् । (ख) ही ही । उपरतो भावः ।

(ग) समाश्वसितु समाश्वसितु भावः । अविचारितं प्रवहणमानयतैव मया प्रथमं मारिता ।

(घ) अरे, वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे । सांप्रतमीदृशोऽहमनाथः प्राप्तः ।

---

उवलदे उपरतः **दाक्षिण्येति** ॥ ३८ ॥ **किं न्विति** ॥ ३९ ॥ हे पाप

**शकारः**—

अत्थं शदं देमि शुवण्णअं दे
कहावणं देमि शवोडिअं दे ।
एशे दुशट्ठाण पलक्कमे मे
शामाण्णए भोदु मणुश्शआणम् ॥ ४० ॥ (क)

**विटः**—धिक्, तवैवास्तु ।

**चेटः**— शन्तं पावम् । (ख)

(शकारो हसति ।)

**विटः**—

अप्रीतिर्भवतु विमुच्यतां हि हासो
धिक्प्रीतिं परिभवकारिकामनार्याम् ।
मा भूच्च त्वयि मम संगतं कदाचि-
दाच्छिन्नं धनुरिव निर्गुणं त्यजामि ॥ ४१ ॥

**शकारः**—भावे, पशीद पशीद । एहि । णलिणीए पविशिअ कीलेम्ह । (ग)

**विटः**—

अपतितमपि तावत्सेवमानं भवन्तं
पतितमिव जनोऽयं मन्यते मामनार्यम् ।
कथमहमनुयायां त्वां हतस्त्रीकमेनं
पुनरपि नगरस्त्रीशङ्कितार्धाक्षिदृष्टम् ॥ ४२ ॥

(क) अर्थं शतं ददामि सुवर्णकं ते कार्षापणं ददामि सवोडिणं ते ।
एष दोषस्थानं पराक्रमो मे सामान्यको भवतु मनुष्यकाणाम् ॥
(ख) शान्तं पापम् ।
(ग) भाव, प्रसीद प्रसीद । एहि । नलिन्यां प्रविश्य क्रीडावः ।

हे पापसंकल्प ॥ **अत्थं शदमिति** । अर्थं शतं ददामि सुवर्णकं ते कार्षापणं ददामि सवोडिकं ते । वोडी विंशतिकपर्दका(कः) गौडे प्रसिद्धः । तच्चतुष्टयं पणः । ते षोडश कार्षापणः कहावण इत्येके । एष दोषस्थानं पराक्रमो मे साधारणो भवतु मनुष्याणाम् ॥ ४० ॥ **अप्रीतिरिति** ॥ ४१ ॥ **अप-**

( सकरुणम् ) वसन्तसेने,

अन्यस्यामपि जातौ मा वेश्या भूस्त्वं हि सुन्दरि ।
चारित्र्यगुणसंपन्ने जायेथा विमले कुले ॥ ४३ ॥

**शकारः**—ममकेलके पुप्फकलण्डकजिण्णुज्जाणे वशन्तशेणिअं मालिअ कहिं पलाअशि एहि । मम आवुत्तश्श अग्गदो ववहालं देहि । (क) (इति धारयति ।)

**विटः**—आः, तिष्ठ जाल्म । (इति खड्गमाकर्षति ।)

**शकारः**—(सभयमपसृत्य ।) किं ले, भीदेशि । ता गच्छ । (ख)

**विटः**—(स्वगतम् ।) न युक्तमवस्थातुम् । भवतु । यत्रार्यशर्विलकचन्दनकप्रभृतयः सन्ति, तत्र गच्छामि । (इति निष्क्रान्तः ।)

**शकारः**—णिधणं गच्छ । अले थावलका पुत्तका, कीलिशे मए कडे । (ग)

**चेटः**—भट्टके, महन्ते अकज्जे कडे । (घ)

**शकारः**—अले चेडे, किं भणाशि अकज्जे कडेत्ति । भोदु । एव्वं दाव । (नानाभरणान्यवतार्य ।) गेण्ह एदं अलंकारअम् । मए ताव दिण्णे । जेत्तिके वेले अलंकलेमि तेत्तिकं वेलं मम । अण्णं तव । (ङ)

---

(क) मदीये पुष्पककरण्डजीर्णोद्याने वसन्तसेनां मारयित्वा कुत्र पलायसे । एहि । मम आवुत्तस्याग्रतो व्यवहारं देहि ।

(ख) किं रे, भीतोऽसि । तद्गच्छ ।

(ग) निधनं गच्छ । अरे स्थावरक पुत्रक, कीदृशं मया कृतम् ।

(घ) भट्टक, महदकार्यं कृतम् ।

(ङ) अरे चेट, किं भणस्यकार्यं कृतमिति । भवतु । एवं तावत् । गृहाणेममलंकारम् । मया तावद्दत्तम् । यावत्यां वेलायामलंकरोमि तावतीं वेलां मम । आज्ञा (अन्यदा ?) तव ।

---

**तितमिति** ॥ ४२ ॥ **अन्यस्यामिति** ॥ ४३ ॥ आउ(वु)त्तश्श भगिनीपतेः । व्यवहार(रं) विचारम् ॥ निधनं गच्छ त्विति(त्वमिति) ॥ चेटं प्रति ब्रूते । यस्यां वेलायामलंकलेमीति अलंकरोमीति वक्तव्ये इति पुरातनटीका (?) ॥

**चेटः**—भट्टके ज्जेव एदे शोहन्ति । किं मम एदेहिं । **(क)**

**शकारः**—ता गच्छ । एदाइं गोणाइं गेण्हिअ ममकेलकाए पाशादबालग्गपदोलिकाए चिश्ट । जाव हग्गे आअच्छामि । **(ख)**

**चेटः**—जं भट्टके आणवेदि । **(ग)** (इति निष्क्रान्तः ।)

**शकारः**—अत्तपलित्ताणे भावे गदे अदंशणम् । चेडं वि- पाशादबालग्गपदोलिकाए णिगलपूलिदं कदुअ थावइश्शम् । एव्वं मन्ते लक्खिदे भोदि । ता गच्छामि । अधवा पेक्खामि दाव एदम् । किं एशा मला आदु पुणो वि मालइश्शम् । (अवलोक्य ।) कधं शुमला । भोदु । एदिणा पावालएण पच्छादेमि णम् । अधवा णामङ्किदे एशे । ता के वि अज्जपुलिशे पच्चहिजाणेदि । भोदु । एदिणा वादालीपुञ्जिदेण शुक्खपण्णपुडेण पच्छादेमि । (तथा कृत्वा विचिन्त्य ।) भोदु । एव्वं दाव । संपदं अधिअलणं गच्छिअ ववहालं लिहावेमि, जहा अत्थश्श कालणादो शत्थवाहचालुदत्ताकेण ममकेलकं पुप्फकलण्डकं जिण्णुज्जाणं पवेशिअ वशन्तशेणिआ वावादिदे त्ति ।

चालुदत्तविणाशाय कलेमि कवडं णवम् ।
णअलीए विशुद्धाए पशुघादं व्व दालुणम् ॥ ४४ ॥

भोदु । गच्छामि । (इति निष्क्रम्य दृष्ट्वा सभयम् ।) अविद मादिके । जेण जेण गच्छामि मग्गेण, तेण ज्जेव एशे दुश्टशमणके गहिदकशाओ-

---

(क) भट्टक एवैते शोभन्ते । किं ममैतैः ।

(ख) तद्गच्छ । एतौ वृषभौ गृहीत्वा मदीयायां प्रासादबालाग्रप्रतोलिकायां तिष्ठ । यावदहमागच्छामि । (ग) यद्भट्टक आज्ञापयति ।

---

पासादबालग्गपडोलिआए । प्रासादोपरिगृहविशेष इति पश्चाद्याख्यातम् ॥ अत्तपलित्ताणे आत्मरक्षार्थम् । निगलपूरितं अतिगुरुबन्धनोक्तिरियम् । एवं मन्त्रोऽभिरक्षितो भवति । प्रावारेण प्रच्छदपटेन । णामङ्किदे नामाङ्कितः । वसन्तसेनाया इति शकारस्य वेति लिखिताक्षरः । शुक्खपण्णउडेण शुष्कपर्णपुटेन तथा कृत्वा । पूर्वोक्तेन स्थगितां कृत्वेत्यर्थः । अत्थश्श । अर्थस्येत्यर्थः । **चालुदत्तेति** । चारुदत्तविनाशाय करोमि कपटं नवम् । नगर्यां विशुद्धायां पशुघातमिव दारुणम् ॥ ४४ ॥ अविद मादिके सभयविस्मये । नश्तिय नासारज्ज्वा बाधितः (?) । कदवेले

दकं चीवलं गेण्हिअ आअच्छदि । एशे मए णशिं च्छिदिअ वाहिदे किदवेले कदावि मं पेक्खिअ एदेण मालिदे त्ति पआशइश्शदि । ता कधं गच्छामि । (अवलोक्य ।) भोदु । एदं अद्धपडिदं पाआलखण्डं उल्लङ्घिअ गच्छामि ।

एशे म्हि तुलिदतुलिदे लङ्काणअलीए गअणे गच्छन्ते ।
भूमीए पाआले हणूमशिहले विअ महेन्दे ॥ ४५ ॥ (क)

(इति निष्क्रान्तः ।)

(प्रविश्यापटीक्षेपेण)

**संवाहको भिक्षुः**—पक्खालिदे एशे मए चीवलखण्डे । किं

---

(क) आत्मपरित्राणे भावो गतोऽदर्शनम् । चेटमपि प्रासादबालाग्रप्रतोलिकायां निगडपूरितं कृत्वा स्थापयिष्यामि । एवं मन्त्रो रक्षितो भवति । तद्गच्छामि । अथवा पश्यामि तावदेनाम् । किमेषा मृता, अथवा पुनरपि मारयिष्यामि । कथं सुमृता । भवतु । एतेन प्रावारकेण प्रच्छादयाम्येनाम् । अथवा नामाङ्कित एषः । तत्कोऽप्यार्यपुरुषः प्रत्यभिज्ञास्यति । भवतु । एतेन वातालीपुञ्जितेन शुष्कपर्णपुटेन प्रच्छादयामि । भवतु एवं तावत् । सांप्रतमधिकरणं गत्वा व्यवहारं लेखयामि, यथार्थस्य कारणात्सार्थवाहकचारुदत्तकेन मदीयं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य वसन्तसेना व्यापादितेति ।

चारुदत्तविनाशाय करोमि कपटं नवम् ।
नगर्यां विशुद्धायां पशुघातमिव दारुणम् ॥

भवतु । गच्छामि । अविद मादिके । येन येन गच्छामि मार्गेण, तेनैवैष दुष्टश्रमणको गृहीतकषायोदकं चीवरं गृहीत्वागच्छति । एष मया नासां छित्त्वा वाहितः कृतवैरः कदापि मां प्रेक्ष्यैतेन मारितेति प्रकाशयिष्यति । तत्कथं गच्छामि । भवतु । एतमर्धपतितं प्राकारखण्डमुल्लङ्घ्य गच्छामि ।

एषोऽस्मि त्वरितत्वरितो लङ्कानगर्यां गगने गच्छन् ।
भूम्यां पाताले हनूमच्छिखरे इव महेन्द्रः ॥

---

कृतवैरः । **एशे म्हि इत्यादि** । गाथा । एषोऽहं त्वरितत्वरितो लङ्कानगर्यां गगने गच्छन् । भूमौ पाताले हनूमच्छिखरादिव महेन्द्रः ॥ महेन्द्रशिखरादिव हनूमानिति वक्तव्ये शकारोक्तत्वाद्विपरीतम् । 'अअट्ट' इति पाठे अष्टकशिखरादित्यर्थः । व्याहतोपममिदं तावत् ॥ ४५ ॥ तथेति प्रसार्य । भवतु । धर्माक्ष-

णु क्खु शाहाए शुक्खावइश्शम् । इध वाणला विलुप्पन्ति । किं णु क्खु भूमीए । धूलीदोशे होदि । ता कहिं पशालिअ शुक्खावइश्शम् । (दृष्ट्वा ।) भोदु । इध वादालीपुञ्जिदे शुक्खवत्तसंचए पशालइश्शम् । (तथा कृत्वा ।) णमो बुद्धश्श । (इत्युपविशति ।) भोदु । धम्मक्खलाइं उदाहलामि । ('पञ्चजण जेण मालिदा' (८।२)इत्यादि पूर्वोक्तं पठति ।) अधवा अलं मम एदेण शग्गेण । जाव ताए वसन्तशेणिआए बुद्धोवाशिआए पच्चुवकालं ण कलेमि, जाए दशाणं शुवण्णकाणं किदे जूदिकलेहिं णिक्कीदे, तदो पहुदि ताए कीदं विअ अत्ताणअं अवगच्छामि । (दृष्ट्वा ।) किं णु क्खु पण्णोदले शमुश्शशदि । अधवा ।

वादादवेण तत्ता चीवलतोएण तिम्मिदा पत्ता ।
एदे विथिण्णपत्ता मण्णे पत्ता विअ फुलन्ति ॥ ४६ ॥ (क)

(वसन्तसेना संज्ञां लब्ध्वा हस्तं दर्शयति ।)

**भिक्षुः**—हा हा, शुद्धालंकालभूशिदे इत्थिआहत्थे णिक्कमदि ।

---

(क) प्रक्षालितमेतन्मया चीवरखण्डम् । किं नु खलु शाखायां शुष्कं करिष्यामि । इह वानरा विलुम्पन्ति । किं नु खलु भूम्याम् । धूलीदोषो भवति । तत्कुत्र प्रसार्य शुष्कं करिष्यामि । भवतु । इह वातालीपुञ्जिते शुष्कपत्रसंचये प्रसारयिष्यामि । नमो बुद्धाय । भवतु धर्माक्षराण्युदाहरामि । अथवालं ममैतेन स्वर्गेण । यावत्तस्या वसन्तसेनाया बुद्धोपासिकायाः प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृते द्यूतकराभ्यां निष्क्रीतः, ततः प्रभृति तया क्रीतमिवात्मानमवगच्छामि । किं नु खलु पर्णोदरे समुच्छ्वसिति । अथवा ।

वातातपेन तप्तानि चीवरतोयेन स्तिमितानि पत्राणि ।
एतानि विस्तीर्णपत्राणि मन्ये पत्राणीव स्फुरन्ति ॥

---

राणि सग्गेण स्वर्गेण । यावत्तस्या वसन्तसेनायाः द्यूतकराभ्यां सकाशाद्दशसुवर्णानां कृते निःक्रीतः । तदो पहुदि निःक्रयप्रभृति । तया क्रीतमात्मानमवगच्छामि । **वादादवेति** । गाथा । वातातपेन तप्तानि चीवरतोयेन तिम्मितत्वमार्द्रत्वं प्राप्तानि । तिम्मिता इति भावप्रधानो निर्देशः । एतानि विस्तीर्णं प्राप्तं प्रसारितं यत्र (?) तानि मन्ये पत्राण्येव विजृम्भन्ते ॥ ४६ ॥ शुद्धेति ।

कधम् । दुदिए वि हत्थे । (बहुविधं निर्वर्ण्य ।) पच्चभिआणामि विअ एदं हत्थम् । अधवा, किं विचालेण । शच्चं शे ज्जेव हत्थे जेण मे अभअं दिण्णम् । भोदु । पेक्खिश्शम् । (नाट्येनोद्घाट्य दृष्ट्वा प्रत्यभिज्ञाय च ।) शा ज्जेव बुद्धोवाशिआ । (क)

(वसन्तसेना पानीयमाकाङ्क्षति ।)

भिक्षुः—कधम् । उदअं मग्गेदि । दूले च दिग्घिआ । किं दाणिं एत्थ कलइश्शम् । भोदु । एदं चीवलं शे उवलि गालइश्शम् । (ख) (तथा करोति ।)

(वसन्तसेना संज्ञां लब्ध्वोत्तिष्ठति । भिक्षुः पटान्तेन वीजयति ।)

वसन्तसेना—अज्ज, को तुमम् । (ग)

भिक्षुः—किं मं ण शुमलेदि बुद्धोवाशिआ दशशुवण्णणिक्कीदम् । (घ)

वसन्तसेना—सुमरामि । ण उण जधा अज्जो भणादि । वरं अहं उवरदा ज्जेव । (ङ)

भिक्षुः—बुद्धोवाशिए, किं ण्णेदम् । (च)

वसन्तसेना—(सनिर्वेदम् ।) जं सरिसं वेसभावस्स । (छ)

---

(क) हा हा, शुद्धालंकारभूषितः स्त्रीहस्तो निष्क्रामति । कथम् । द्वितीयोऽपि हस्तः । प्रत्यभिजानामीवैतं हस्तम् । अथवा, किं विचारेण । सत्यं स एव हस्तो येन मेऽभयं दत्तम् । भवतु । पश्यामि । सैव बुद्धोपासिका ।

(ख) कथम् । उदकं याचते । दूरे च दीर्घिका । किमिदानीमत्र करिष्यामि । भवतु । एतच्चीवरमस्या उपरि गालयिष्यामि ।

(ग) आर्य, कस्त्वम् ।

(घ) किं मां न स्मरति बुद्धोपासिका दशसुवर्णनिष्क्रीतम् ।

(ङ) स्मरामि । न पुनर्यथार्यो भणति । वरमहमुपरतैव ।

(च) बुद्धोपासिके, किं न्विदम् । (छ) यत्सदृशं वेशभावस्य ।

---

शुद्धं केवलं कटकादि न स्वभाव एवालंकरणं यत्र सः । दुदिए द्वितीयः । शे

**भिक्षुः**—उट्ठेदु उट्ठेदु । बुद्धोवाशिआ एदं पादवसमीवजादं लदं ओलम्बिअ । (क) (इति लतां नामयति ।)

(वसन्तसेना गृहीत्वोत्तिष्ठति ।)

**भिक्षुः**—एदश्शिं विहाले मम धम्मबहिणिआ चिट्ठदि । तहिं शमश्शशिदमणा भविअ उवाशिआ गेहं गमिश्शदि । ता शेणं शेणं गच्छदु बुद्धोवाशिआ । (इति परिक्रामति । दृष्ट्वा ।) ओशलध अज्जा, ओशलध । एशा तलुणी इत्थिआ, एशो भिक्खु त्ति शुद्धे मम एशे धम्मे ।

हत्थशंजदो मुहशंजदो इन्दियशंजदो शे क्खु माणुशे ।
किं कलेदि लाअउले तश्श पललोओ हत्थे णिच्चले ॥४७॥(ख)

(इति निष्क्रान्ताः ।)

**इति वसन्तसेनामोटनो नामाष्टमोऽङ्कः ।**

---

(क) उत्तिष्ठतूत्तिष्ठतु बुद्धोपासिकैतां पादपसमीपजातां लतामवलम्ब्य ।

(ख) एतस्मिन्विहारे मम धर्मभगिनी तिष्ठति । तत्र समाश्वस्तमना भूत्वोपासिका गेहं गमिष्यति । तच्छनैः शनैर्गच्छतु बुद्धोपासिका । अपसरत आर्याः, अपसरत । एषा तरुणी स्त्री, एष भिक्षुरिति शुद्धो ममैष धर्मः ।

हस्तसंयतो मुखसंयत इन्द्रियसंयतः स खलु मनुष्यः ।
किं करोति राजकुलं तस्य परलोको हस्ते निश्चलः ॥

---

क्खु स एव ॥ से अस्याः ॥ वरं मनागिष्टम् ॥ ओलम्बिअ अवलम्ब्य ॥ तत्र समाश्वस्तमना भूत्वा ।

इति मोटनो नामाष्टमोऽङ्कः ॥ ८ ॥

Court peon

( ततः प्रविशति शोधनकः ।)

Judges

**शोधनकः**—आणत्तम्हि अधिअरणभोइएहिं—'अरे सोहणआ, ववहारमण्डवं गदुअ आसणाइं सज्जीकरेहिं' त्ति । ता जाव अधिअरणमण्डवं सज्जिदुं गच्छामि (परिक्रम्यावलोक्य च ।) एदं अधिअरणमण्डवम् । एस पविसामि । (प्रविश्य संमार्ज्यासनमाधाय ।) विवित्तं कारिदं मए अधिअरणमण्डवम् । विरइदा मए आसणा । ता जाव अधिअरणिआणं उण णिवेदेमि । (परिक्रम्यावलोक्य च ।) कधम्, एसो रट्टिअस्सालो दुट्टदुज्जणमणुस्सो इदो एव्व आअच्छदि । ता दिट्ठिपधं परिहरिअ गमिस्सम् । **(क)** (इत्येकान्ते स्थितः।)

(ततः प्रविशत्युज्ज्वलवेषधारी शकारः ।)

**शकारः**—

ण्हादेहं शलिलजलेहिं पाणिएहिं
उज्जाणे उववणकाणणे णिशण्णे ।
णालीहिं शह जुवदीहिं इश्तिआहिं
गन्धव्वेहिं शुविहिदएहिं अङ्गकेहिं ॥ १ ॥

---

Judges   Court

**(क)** आज्ञप्तोऽस्म्यधिकरणभोजकैः—' अरे शोधनक, व्यवहारमण्डपं गत्वासनानि सज्जीकुरु ' इति । तद्यावदधिकरणमण्डपं सज्जितुं गच्छामि। एषोऽधिकरणमण्डपः । एष प्रविशामि । विविक्तः कारितो मयाधिकरणमण्डपः। विरचितानि मयासनानि । तद्यावदधिकरणिकानां पुनर्निवेदयामि । कथम्, एष राष्ट्रियश्यालो दुष्टदुर्जनमनुष्य इत एवागच्छति । तद्दृष्टिपथं परिहृत्य गमिष्यामि ।

---

अधिकरणे न्यायविवादविषये नियुक्तत्वात्तदेषामस्ति । ' अत इनिठनौ' इति ठन् । अपवादो दोषवाच्येति यावत् । **ण्हादेहमिति** । प्रहर्षिणीछन्दसा । जलेहिं जुवदीहिं शुविहिदएहिं इत्यत्र सानुस्वाराणामप्यन्त्याक्षराणां लाघवम् । छन्दोनुरोधात् । स्नातोऽहं सलिलजलैः स्वच्छैः । पाठान्तरे 'पानीयैः'। नारीभिर्युवतीभिः स्त्रीभिः सह उद्याने उपवनकानने निषण्ण इति विपर्यस्य योजना । गन्धर्व इव सुविहितैरङ्गकैर्लक्षितः । 'गन्धव्वेहिं' इति पाठे तृतीया प्रथमार्थे । रूपकं

खणेण गण्ठी खणजूलके मे खणेण बाला खलकुन्तले वा ।
खणेण मुक्के खण उद्धचूडे चित्ते विचित्ते हगे लाअशाले ॥ २ ॥

अवि अ । विशगण्ठिगब्भपविश्टेण विअ कीडएण अन्तलं मग्गमाणेण पाविदं मए महदन्तलम् । ता कश्श एदं किविणचेश्टिअं पाडइश्शम् । (स्मृत्वा ।) आं, शुमलिदं मए । दलिद्दचालुदत्तश्श एदं किविणचेश्टिअं पाडइश्शम् । अण्णं च । दलिद्दे क्खु शे । तश्श शव्वं शंभावीअदि । भोदु । अधिअलणमण्डवं गदुअ अग्गदो ववहालं लिहावइश्शम्, जधा चालुदत्ताकेण वशन्तशेणिआ मोडिअ मालिदा । ता जाव अधिअलणमण्डवं ज्जेव्व गच्छामि । (परिक्रम्यावलोक्य च ।) एदं तं अधिअलणमण्डवम् । एत्थ पविशामि । (प्रविश्यावलोक्य च ।) कधम्, आशणाइं दिण्णाइं चिश्टन्ति । जाव आअश्शन्ति अधिअलणभोइआ, दाव एदश्शिं दुव्वचत्तले मुहुत्तअं उवविशिअ पडिवालइश्शम् । (क) (तथा स्थितः ।)

---

(क) स्नातोऽहं सलिलजलैः पानीयैरुद्यान उपवनकानने निषण्णः ।
नारीभिः सह युवतीभिः स्त्रीभिर्गन्धर्वैः सुविहितैरङ्गकैः ॥
क्षणेन ग्रन्थिः क्षणजूलिका मे क्षणेन बाला क्षणकुन्तला वा ।
क्षणेन मुक्ताः क्षणमूर्ध्वचूडाश्चित्रो विचित्रोऽहं राजश्यालः ॥

अपि च । विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम् । तत्कस्येदं कृपणचेष्टितं पातयिष्यामि । आं, स्मृतं मया । दरिद्रचारुदत्तस्येदं कृपणचेष्टितं पातयिष्यामि । अन्यच्च । दरिद्रः खलु सः । तस्य सर्वं संभाव्यते । भवतु । अधिकरणमण्डपं गत्वाग्रतो व्यवहारं लेखयिष्यामि, यथा चारुदत्तेन वसन्तसेना मोटयित्वा मारिता । तद्यावदधिकरणमण्डपमेव गच्छामि । एष सोऽधिकरणमण्डपः । अत्र प्रविशामि । कथम्, आसनानि

---

च (?) । पौनरुक्त्यादि शकारोक्तत्वात् ॥ १ ॥ **खणेनेति** । उपेन्द्रवज्रया । हगे इत्यत्र एकारस्य लघुत्वम् । छन्दोनुरोधात् । एतच्छत्रकमुष्टिकं पावालबन्ध इत्येके (?) । क्षणेन ग्रन्थिः । पाठान्तरे 'घृष्टिका' । क्षणेन ग्रन्थिः क्षणजूलिका मे क्षणेन बालाः क्षणकुन्तला वा । क्षणेन मुक्ताः क्षणमूर्ध्वचूडाः जनिकाज्वलिकयोर्विशेषः (?) । चित्रो विचित्रः । हगे अहम् । राजश्यालः । 'चित्ते ण चित्तो' इति पाठे चित्रं न चित्रम्, यतोऽहं राजश्याल इति व्याख्येयम् । राज-

**शोधनकः**—(अन्यतः परिक्रम्य पुरो दृष्ट्वा ।) एदे अधिअरणिआ आअच्छन्ति । ता जाव उवसप्पामि । (क) (इत्युपसर्पति ।)

(ततः प्रविशति श्रेष्ठिकायस्थादिपरिवृतोऽधिकरणिकः ।)

**अधिकरणिकः**—भो भोः श्रेष्ठिकायस्थौ ।

**श्रेष्ठिकायस्थौ**—आणवेदु अज्जो । (ख)

**अधिकरणिकः**—अहो, व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः ।

छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ३ ॥

अपि च ।

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान्दोषान्कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम् ।
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्वते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ४ ॥

यतः । अधिकरणिकः खलु

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः ।
क्लीबान्पालयिता शठान्व्यथयिता धर्म्यो न लोभान्वितो
द्वार्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥ ५ ॥

---

दत्तानि तिष्ठन्ति । यावदागच्छन्त्यधिकरणभोजकाः, तावदेतस्मिन्दूर्वाचत्वरे मुहूर्तमुपविश्य प्रतिपालयिष्यामि ।

(क) एतेऽधिकरणिका आगच्छन्ति । तद्यावदुपसर्पामि ।

(ख) आज्ञापयत्वार्यः ।

---

श्यालत्वेन मयि सर्वं संभाव्यत इति भावः ॥ २ ॥ किमिणचिट्ठिअं [ कृपणचेष्टितम् ] ॥ **छन्नमिति** ॥ ३ ॥ **छन्नमिति** ॥ ४ ॥ **शास्त्रज्ञ इति** ॥ ५ ॥

**श्रेष्ठिकायस्थौ**—अज्जस्स वि णाम गुणे दोसो त्ति वुच्चदि। जइ एव्वम्, ता चन्दालोए वि अन्धआरो त्ति वुच्चदि। (क)

**अधिकरणिकः**—भद्र शोधनक, अधिकरणमण्डपस्य मार्गमादेशय।

**शोधनकः**—एदु एदु अधिअरणभोइओ, एदु। (ख)

(इति परिक्रामन्ति।)

**शोधनकः**—एदं अधिअरणमण्डवम्। ता पविसन्तु अधिअरणभोइआ। (ग)

(सर्वे च प्रविशन्ति।)

**अधिकरणिकः**—भद्र शोधनक, बहिर्निष्क्रम्य ज्ञायताम्—'कः कः कार्यार्थी' इति।

**शोधनकः**—जं अज्जो आणवेदि। (इति निष्क्रम्य।) अज्जा, अधिअरणिआ भणन्ति—'को को इध कज्जत्थी' त्ति। (घ)

**शकारः**—(सहर्षम्।) उवत्थिए अधिअलणिए। (साटोपं परिक्रम्य।) हग्गे वलपुलिशे मणुश्शे वाशुदेवे लश्टिअशाले लाअशाले कज्जत्थी। (ङ)

**शोधनकः**—(ससंभ्रमम्।) हीमादिके, पढमं ज्जेव रट्ठिअसालो कज्जत्थी। भोदु। अज्ज, मुहुत्तं चिट्ठ। दाव अधिअरणिआणं णिवेदेमि। (उपगम्य।) अज्जा, एसो क्खु रट्ठिअसालो कज्जत्थी ववहारं उवत्थिदो। (च)

---

(क) आर्यस्यापि नाम गुणे दोष इत्युच्यते। यद्येवम्, तदा चन्द्रालोकेऽप्यन्धकार इत्युच्यते। (ख) एत्वेत्वधिकरणभोजक, एतु।

(ग) अयमधिकरणमण्डपः, तत्प्रविशन्त्वधिकरणभोजकाः।

(घ) यदार्य आज्ञापयति। आर्याः, अधिकरणिका भणन्ति—'कः क इह कार्यार्थी' इति।

(ङ) उपस्थिता अधिकरणिकाः। अहं वरपुरुषो मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्यालः कार्यार्थी।

(च) हन्त, प्रथममेव राष्ट्रियश्यालः कार्यार्थी। भवतु। आर्य, मुहूर्तं तिष्ठ। तावदधिकरणिकानां निवेदयामि। आर्याः, एष खलु राष्ट्रियश्यालः कार्यार्थी व्यवहारमुपस्थितः।

**अधिकरणिकः**—कथम्। प्रथममेव राष्ट्रियश्यालः कार्यार्थी। यथा सूर्योदय उपरागो महापुरुषनिपातमेव कथयति। शोधनक, व्याकुलेनाद्य व्यवहारेण भवितव्यम्। भद्र, निष्क्रम्योच्यताम्—'गच्छाद्य। न दृश्यते तव व्यवहारः' इति।

**शोधनकः**—जं अज्जो आणवेदि त्ति। (निष्क्रम्य शकारमुपगम्य।) अज्ज, अधिअरणिआ भणन्ति—'अज्ज, गच्छ। ण दीशदि तव ववहारो'। (क)

**शकारः**—(सक्रोधम्।) आः, किं ण दीशदि मम ववहाले। जइ ण दीशदि, तदो आवुत्तं लाआणं पालअं बहिणीवदिं विण्णविअ बहिणिं अत्तिकं च विण्णविअ एदं अधिअलणिअं दूले फेलिअ एत्थ अण्णं अधिअलणिअं ठावइश्शम्। (ख) (इति गन्तुमिच्छति।)

**शोधनकः**—अज्ज रट्ठिअशालअ, मुहुत्तअं चिट्ठ। दाव अधिअरणिआणं णिवेदेमि। (अधिकरणिकमुपगम्य।) एसो रट्ठिअशालो कुविदो भणादि। (ग) (इति तदुक्तं भणति।)

**अधिकरणिकः**—सर्वमस्य मूर्खस्य संभाव्यते। भद्र, उच्यताम्—'आगच्छ, दृश्यते तव व्यवहारः'।

**शोधनकः**—(शकारमुपगम्य।) अज्ज, अधिअरणिआ भणन्ति—'आअच्छ। दीसदि तव ववहारो। ता पविसदु अज्जो। (घ)

---

(क) यदार्य आज्ञापयतीति। आर्य, अधिकरणिका भणन्ति—'अद्य गच्छ। न दृश्यते तव व्यवहारः'।

(ख) आः, किं न दृश्यते मम व्यवहारः। यदि न दृश्यते, तदावुत्तं राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीं मातरं च विज्ञाप्यैतमधिकरणिकं दूरीकृत्यात्रान्यमधिकरणिकं स्थापयिष्यामि।

(ग) आर्य राष्ट्रियश्याल, मुहूर्तं तिष्ठ। तावदधिकरणिकानां निवेदयामि। करण राष्ट्रियश्यालः कुपितो भणति।

(घ) आर्य, अधिकरणिका भणन्ति—'आगच्छ। दृश्यते तव व्यवहारः।' तत्प्रविशत्वार्यः।

---

आः क्रोधे। लाआणं राजानम्। आवुत्तं भगिनीपतिम्। पुनर्भगिनीपतिमिति

**शकारः**—पढमं भणन्ति ण दीशदि, संपदं दीशदि त्ति। ता णाम भीदभीदा अधिअलणभोइआ। जेत्तिअं हग्गे भणिश्शं तेत्तिअं पत्तिआवइश्शम्। भोदु। पविशामि। (प्रविश्योपसृत्य।) शुशुहं अम्हाणम्, तुम्हाणं पि शुहं देमि ण देमि अ। (क)

**अधिकरणिकः**—(स्वगतम्।) अहो, स्थिरसंस्कारता व्यवहारार्थिनः। (प्रकाशम्।) उपविश्यताम्।

**शकारः**—आं, अत्तणकेलका शे भूमी। ता जहिं मे रोअदि तहिं उवविशामि। (श्रेष्ठिनं प्रति।) एश उवविशामि। (शोधनकं प्रति।) णं एत्थ उवविशामि। (इत्यधिकरणिकमस्तके हस्तं दत्त्वा।) एश उवविशामि। (ख) (इति भूमावुपविशति।)

**अधिकरणिकः**—भवान्कार्यार्थी।

**शकारः**—अध इं। (ग)

**अधिकरणिकः**—तत्कार्यं कथय।

**शकारः**—कण्णे कज्जं कधइश्शम्। एव्वं वड्ढके मल्लकप्पमाणाह कुडे हग्गे जादे।

लाअशशुले मम पिदा लाआ तादश्श होइ जामादा।
लाअशिआले हग्गे ममावि बहिणीवदी लाआ॥ ६॥ (घ)

---

(क) प्रथमं भणन्ति न दृश्यते, सांप्रतं दृश्यत इति। तन्नाम भीतभीता अधिकरणभोजकाः। यद्यदहं भणिष्यामि तत्तत्प्रत्याययिष्यामि। भवतु। प्रविशामि। सुसुखमस्माकम्, युष्माकमपि सुखं ददामि न ददामि च।

(ख) आं, आत्मीयैषा भूमिः। तद्यत्र मह्यं रोचते तत्रोपविशामि। एष उपविशामि। नन्वत्रोपविशामि। एष उपविशामि।

(ग) अथ किम्।

(घ) कर्णे कार्यं कथयिष्यामि। एवं बृहति मल्लकर्प्रमाणस्य कुलेऽहं जातः।

राजश्वशुरो मम पिता राजा तातस्य भवति जामाता।
राजश्यालोऽहं ममापि भगिनीपती राजा॥

---

पुनरुक्तम्। 'अत्तिका भगिनीं ज्येष्ठाम्'॥ युष्माकं सुखं ददामि न ददामीति शकारोक्तेर्व्याकुलता॥ **लाअशशुले इत्यादि**। गाथा। राजश्वशुरो मम पिता राजा तातस्य भवति जामाता। राजश्यालकः खल्वहं ममापि भगिनीपती

**अधिकरणिकः**—सर्वं ज्ञायते ।

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ ७ ॥

तदुच्यतां कार्यम् ।

**शकारः**—एव्वं भणामि, अवलद्धाह वि ण अ मे किं पि कलइश्शदि, तदो तेण बहिणीवदिणा परितुश्टेण मे कीलिदुं लक्खिदु शव्वुज्जाणाणं पवले पुप्फकलण्डकजिण्णुज्जाणे दिण्णे । तहिं च पेक्खिदुं अणुदिअहं शोशावेदुं शोधावेदुं पोत्थावेदुं लुणावेदुं गच्छामि । देव्वजोएण पेक्खामि, ण पेक्खामि वा, इत्थिआशलीलं णिवडिदम् । (क)

**अधिकरणिकः**—अथ ज्ञायते का स्त्री विपन्नेति ।

**शकारः**—हंहो अधिअलणभोइआ, किंत्ति ण जाणामि । तं तादिशिं णअलमण्डणं कच्चणशदभूशणिअं केण वि कुपुत्तेण अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फकलण्डकजिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण वशन्तशेणिआ मालिदा । ण मए । (ख)
( इत्यर्धोक्ते मुखमावृणोति ।)

**अधिकरणिकः**—अहो नगररक्षिणां प्रमादः । भोः श्रेष्ठिकायस्थौ, न मयेति व्यवहारपदं प्रथममभिलिख्यताम् ।

---

(क) एवं भणामि, अपराद्धस्यापि न च मे किमपि करिष्यति, ततस्तेन भगिनीपतिना परितुष्टेन मे क्रीडितुं रक्षितुं सर्वोद्यानानां प्रवरं पुष्पकरण्डकजीर्णोद्यानं दत्तम् । तत्र च प्रेक्षितुमनुदिवसं शुष्कं कारयितुं शोधयितुं पुष्टं कारयितुं लूनं कारयितुं गच्छामि । दैवयोगेन पश्यामि, न पश्यामि वा, स्त्रीशरीरं निपतितम् ।

(ख) अहो अधिकरणभोजकाः, किमिति न जानामि । तां तादृशीं नगरमण्डनं काञ्चनशतभूषणां केनापि कुपुत्रेणार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता । न मया ।

---

राजा ॥ एतेन यदुक्तं भवति तदाह—अपराद्धस्यापि न मे किमपि करिष्यति । क्रीडितुं रक्षितुम् । जीर्णेति विशेषणं विजनत्वख्यापनार्थम् । तत्र च प्रेक्षितुम् तत्रेति करणाधिकरणत्वेन विवक्षितत्वात्तदित्येवार्थः (?) । तत्र दैवयोगेन

**कायस्थः**—जं अज्जो आणवेदि । (तथा कृत्वा) अज्ज, लिहिदम् ) । (क)

**शकारः**—(स्वगतम्) हीमादिके । उत्तलान्तेण विअ पाअशपिण्डालकेण अज्ज मए अत्ता एव्व णिण्णाशिदो । भोदु । एव्वं दाव । (प्रकाशम् ।) अहो अधिअलणभोईआ, णं भणामि, मए ज्जेव दिट्ठा । किं कोलाहलं कलेध । (ख) (इति पादेन लिखितं प्रोञ्छति ।)

**अधिकरणिकः**—कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं बाहुपाशेन व्यापादिता ।

**शकारः**—हंहो, णूणं पडिशूणाए मोघट्ठाणाए गीवालिआए णिशुवण्णकेहिं आहलणट्ठाणेहिं तक्केमि । (ग)

**श्रेष्ठिकायस्थौ**—जुज्जदि विअ । (घ)

**शकारः**—(स्वगतम् ।) दिश्टिआ पच्चुज्जीविदम्हि । अविद मादिके । (ङ)

**श्रेष्ठिकायस्थौ**—भो, कं एसो ववहारो अवलम्बदि । (च)

**अधिकरणिकः**—इह हि द्विविधो व्यवहारः ।

**श्रेष्ठिकायस्थौ**—केरिसो । (छ)

**अधिकरणिकः**—वाक्यानुसारेण, अर्थानुसारेण च । यस्ताव-

---

(क) यदार्य आज्ञापयति । आर्य, लिखितम् ।

(ख) आश्चर्यम् । त्वरां कुर्वाणेनेव पायसपिण्डारकेणाद्य मयात्मैव निर्नाशितः । भवतु । एवं तावत् । अहो अधिकरणभोजकाः, ननु भणामि, मयैव दृष्टा । किं कोलाहलं कुरुत ।

(ग) हंहो, नूनं परिशून्यया मोघस्थानया ग्रीवालिकया निःसुवर्णकैराभरणस्थानैस्तर्कयामि । (घ) युज्यत इव ।

(ङ) दिष्ट्या प्रत्युज्जीवितोऽस्मि । अविद मादिके ।

(च) भोः, कमेष व्यवहारोऽवलम्बते । (छ) कीदृशः ।

---

पश्यामि न वेत्यर्थः ॥ न मयेति तस्य बोध्यत्वेन व्यवहारपदम् ॥ परिशून्यया ग्रीवया । बाहुपाशेन मारितेति शून्यैवाति (?) । अर्थनिमित्तमिति ज्ञातुम् । मना-

द्वाक्यानुसारेण, स खल्वर्थिप्रत्यर्थिभ्यः। यश्चार्थानुसारेण स चाधिकरणिकबुद्धिनिष्पाद्यः।

**श्रेष्ठिकायस्थौ**—ता वसन्तसेणामादरं अवलम्बदि ववहारो। (क)

**अधिकरणिकः**—एवमिदम्। भद्र शोधनक, वसन्तसेनामातरमनुद्वेजयन्नाह्वय।

**शोधनकः**—तथा। (इति निष्क्रम्य गणिकामात्रा सह प्रविश्य।) एदु एदु अज्जा। (ख)

**वृद्धा**—गदा मे दारिआ मित्तघरअं अत्तणो जोव्वणं अनुभविदुम्। एसो उण दीहाऊ भणादि—'आअच्छ। अधिअरणिओ सद्दावेदि। ता मोहपरवसं विअ अत्ताणअं अवगच्छामि। हिअअं मे थरथरेदि। अज्ज, आदेसेहि मे अधिअरणमण्डवस्स मग्गम्। (ग)

**शोधनकः**—एदु एदु अज्जा। (घ)

(उभौ परिक्रामतः।)

**शोधनकः**—एदं अधिअरणमण्डवम्। एत्थ पविसदु अज्जा। (ङ)

(इत्युभौ प्रविशतः।)

**वृद्धा**—(उपसृत्य।) सुहं तुम्हाणं भोदु भावमिस्साणम्। (च)

**अधिकरणिकः**—भद्रे, स्वागतम्। आस्यताम्।

**वृद्धा**—तधा। (छ) (इत्युपविष्टा।)

---

(क) तद्वसन्तसेनामातरमवलम्बते व्यवहारः।

(ख) तथा। एत्वेत्वार्या।

(ग) गता मे दारिका मित्रगृहमात्मनो यौवनमनुभवितुम्। एष पुनर्दीर्घायुर्भणति—'आगच्छ। अधिकरणिक आह्वयति। तन्मोहपरवशमिवात्मानमवगच्छामि। हृदयं मे प्रकम्पते। आर्य, आदिश मह्यमधिकरणमण्डपस्य मार्गम्। (घ) एत्वेत्वार्या।

(ङ) एषोऽधिकरणमण्डपः। अत्र प्रविशत्वार्या।

(च) सुखं युष्माकं भवतु भावमिश्राणाम्। (छ) तथा।

---

कथत्वमन्ये मां सूचयन्ति (?)। अनेनैव वसन्तसेना मारितेति सूचनाकारः॥ गुप्तेनापि उत्तराचरणेन ततोस्त्मै(त आत्मै)व विनाशितः॥ मित्तघरअं मित्रगृ-

**शकारः**—(साक्षेपम् ।) आगदाशि बुड्ढकुट्टणि, आगदाशि । (क)

**अधिकरणिकः**—अये, त्वं किल वसन्तसेनाया माता ।

**वृद्धा**—अध इं । (ख)

**अधिकरणिकः**—अथेदानीं वसन्तसेना क गता ।

**वृद्धा**—मित्तघरअम् । (ग)

**अधिकरणिकः**—किंनामधेयं तस्या मित्रम् ।

**वृद्धा**—(स्वगतम् ।) हद्धी हद्धी । अदिलज्जणीअं क्खु एदम् । (प्रकाशम् ।) जणस्स पुच्छणीओ अअं अत्थो, ण उण अधिअरणिअस्स । (घ)

**अधिकरणिकः**—अलं लज्जया । व्यवहारस्त्वां पृच्छति ।

**श्रेष्ठिकायस्थौ**—ववहारो पुच्छदि । णत्थि दोसो । कधेहि । (ङ)

**वृद्धा**—कधं ववहारो । जइ एव्वम्, ता सुणन्तु अज्जमिस्सा । सो क्खु सत्थवाहविणअदत्तस्स णत्तिओ, साअरदत्तस्स तणओ, सुगहिदणामहेओ अज्जचारुदत्तो णाम, सेट्ठिचत्तरे पडिवसदि । तहिं मे दारिआ जोव्वणसुहं अणुभवदि । (च)

**शकारः**—शुदं अज्जेहिं । लिहीअन्दु एदे अक्खला । चालुदत्तेण शह मम विवादे । (छ)

---

(क) आगतासि वृद्धकुट्टनि, आगतासि ।

(ख) अथ किम् । (ग) मित्रगृहम् ।

(घ) हा धिक् हा धिक् । अतिलज्जनीयं खल्विदम् । जनस्य पृच्छनीयोऽयमर्थः, न पुनरधिकरणिकस्य ।

(ङ) व्यवहारः पृच्छति । नास्ति दोषः । कथय ।

(च) कथं व्यवहारः । यद्येवम्, तदा शृण्वन्त्वार्यमिश्राः । स खलु सार्थवाहविनयदत्तस्य नप्ता, सागरदत्तस्य तनयः, सुगृहीतनामधेय आर्यचारुदत्तो नाम, श्रेष्ठिचत्वरे प्रतिवसति । तत्र मे दारिका यौवनसुखमनुभवति ।

(छ) श्रुतमार्यैः । लिख्यन्तामेतान्यक्षराणि । चारुदत्तेन सह मम विवादः ।

---

हम् प्रस्तावाचारुदत्तस्य गृहम् ॥ अर्थो न पुनरधिकरणिकानामिति वेश्यापतिरूपतया ज्ञानेन शिष्टानां लज्जाकरत्वादिति भावः ॥ विनयदत्तस्य नप्ता ॥ धनद-

**श्रेष्ठिकायस्थौ**—चारुदत्तो मित्तो त्ति णत्थि दोसो । (क)

**अधिकरणिकः**—व्यवहारोऽयं चारुदत्तमवलम्बते ।

**श्रेष्ठिकायस्थौ**—एव्वं विअ । (ख)

**अधिकरणिकः**—धनदत्त, वसन्तसेनार्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः । कथम् । आर्यचारुदत्तोऽप्यस्माभिराह्वाययितव्यः । अथवा व्यवहारस्तमाह्वयति । भद्र शोधनक, गच्छ । आर्यचारुदत्तं स्वैरमसंभ्रान्तमनुद्विग्नं सादरमाहूय प्रस्तावेन—'अधिकरणिकस्त्वां द्रष्टुमिच्छति' इति ।

**शोधनकः**—जं अज्जो आणवेदि । (इति निष्क्रान्तः । चारुदत्तेन सह प्रविश्य च ।) एदु यदु अज्जो । (ग)

**चारुदत्तः**—(विचिन्त्य ।)

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च ।
यत्सत्यमिदमाह्वानमवस्थामभिशङ्कते ॥ ८ ॥

(सवितर्कं स्वगतम् ।)

ज्ञातो हि किं नु खलु बन्धनविप्रयुक्तो
मार्गागतः प्रवहणेन मयापनीतः ।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा
येनाहमेवमभियुक्त इव प्रयामि ॥ ९ ॥

अथवा किं विचारितेन । अधिकरणमण्डपमेव गच्छामि । भद्र शोधनक, अधिकरणस्य मार्गमादेशय ।

**शोधनकः**—एदु एदु अज्जो । (घ)

(इति परिक्रामतः ।)

**चारुदत्तः**—(सशङ्कम् ।) तत्किमपरम् ।

---

(क) चारुदत्तो मित्रमिति नास्ति दोषः ।     (ख) एवमिव ।
(ग) यदार्य आज्ञापयति । एत्वेत्वार्यः ।     (घ) एत्वेत्वार्यः ।

---

तेति कायस्थसंबोधनम् । स्वैरं स्वच्छन्दम् । असंभ्रान्तं संभ्रमशून्यम् ॥ परीति । अवस्थामीदृशीं दशाम् ॥ ८ ॥ ज्ञात इति । मार्गागत आर्यकः ॥ ९ ॥

रुक्षस्वरं वाशति वायसोऽय-
समात्यभृत्या मुहुराह्वयन्ति ।
सव्यं च नेत्रं स्फुरति प्रसह्य
ममानिमित्तानि हि खेदयन्ति ॥ १० ॥

**शोधनकः**—एदु एदु अज्जो सैरं असंभन्तम् । (क)

**चारुदत्तः**—(परिक्रम्याग्रतोऽवलोक्य च ।)

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
मयि चोदयते वामं चक्षुर्घोरमसंशयम् ॥ ११ ॥

(पुनरन्यतोऽवलोक्य ।) अये, कथमयं सर्पः ।

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः
स्फुरितविततजिह्वः शुक्लदंष्ट्राचतुष्कः ।
अभिपतति सरोषो जिह्मिताध्मातकुक्षि-
र्भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः ॥ १२ ॥

अपि च इदम् ।

स्खलति चरणं भूमौ न्यस्तं न चार्द्रतमा मही
स्फुरति नयनं वामो बाहुर्मुहुश्च विकम्पते ।
शकुनिरपरश्चायं तावद्विरौति हि नैकशः
कथयति महाघोरं मृत्युं न चात्र विचारणा ॥ १३ ॥

सर्वथा देवताः स्वस्ति करिष्यन्ति ।

**शोधनकः**—एदु एदु अज्जो । इमं अधिअरणमण्डवं पविसदु अज्जो । (ख)

---

(क) एत्वेत्वार्यः स्वैरमसंभ्रान्तम् ।

(ख) एत्वेत्वार्यः । इममधिकरणमण्डपं प्रविशत्वार्यः ।

---

**रुक्षेति** । 'शास्ट वास्ट शब्दे' भ्वादिरात्मनेपदी । रेहादेरात्मनेपदानित्यत्वाच्च परस्मैपदम् । 'वरास्ट शब्दे' इति तुदादिस्तालव्यान्तः । आत्मनेपदी (?) ॥१०॥ **शुष्केति** ॥ ११ ॥ **मयीति** ॥ १२ ॥ **स्खलतीति** । आर्द्रतमायां हि भुवि चरणस्खलनं युज्यते ॥ १३ ॥ जृम्भितो दीर्घात्मातोऽतिस्थल' (?) ॥

**चारुदत्तः**—(प्रविश्य समन्तादवलोक्य ।) अहो, अधिकरणमण्डपस्य परा श्रीः । इह हि

चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं
पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंस्राश्रयम् ।
नानावाशककङ्कपक्षिरचितं कायस्थसर्पास्पदं
नीतिक्षुण्णतटं च राजकरणं हिंस्रैः समुद्रायते ॥ १४ ॥

भवतु । (प्रविशञ्छिरोघातमभिनीय सवितर्कम् ।) अहह, इदमपरम्

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा ।
पन्थाः सर्पेण रुद्धोयं स्वस्ति चास्मासु दैवतः ॥ १५ ॥

तावत्प्रविशामि । (इति प्रविशति ।)

**अधिकरणिकः**—अयमसौ चारुदत्तः । य एषः

घोणोन्नतं मुखमपाङ्गविशालनेत्रं
नैतद्धि भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु
नह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥ १६ ॥

**चारुदत्तः**—भोः, अधिकृतेभ्यः स्वस्ति । हंहो नियुक्ताः, अपि कुशलं भवताम् ।

**अधिकरणिकः**—(ससंभ्रमम् ।) स्वागतमार्यस्य । भद्र शोधनक, आर्यस्यासनमुपनय ।

**शोधनकः**—(आसनमुपनीय ।) एदं आसनम् । एत्थ उवविसदु अज्जो । (क)

(चारुदत्त उपविशति ।)

---

(क) इदमासनम् । अत्रोपविशत्वार्यः ।

---

**चिन्तासक्के[ति ।]** चिन्तामार्गे निमग्ना एव मन्त्रिणः सलिलानि यत्र । दूत आह्वायको गतागतनियुक्तो वीरश्च गृहपुरुषः । नागाश्व सतारकार्थे (?) । नाना बहुप्रकाराः शब्दं कुर्वन्तो ये कङ्कपक्षिणस्तै रचितं व्याप्तम् । अशुभसूचकत्वेन तेषां समवधानमुक्तम् । अब्धिपक्षे तु व्यक्तमेव । 'पक्ष' इति पाठे तेषां पक्षाणां रचितम् । नानाक्रमणिकया निर्मितभेदो यत्रेत्यर्थः । कङ्को मांसादः पक्षिविशेषः ॥ १४ ॥ **सव्यमिति** ॥ १५ ॥ **घोणेति** । घोणा उन्नता यत्र, घोणया वा उन्नतमुत्कृष्टम् । अपाङ्गो विशालो यत्र । एतेन

**शकारः**—(सक्रोधम् ।) आगदेशि ले इश्थिआघादआ, आगदेशि । अहो णाए ववहाले, अहो धम्मे ववहाले; जं एदाह इश्थिआघादकाह आशणे दीअदि । (सगर्वम् ।) भोदु । णं दीअदु । (क)

**अधिकरणिकः**—आर्य चारुदत्त, अस्ति भवतोऽस्या आर्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा ।

**चारुदत्तः**—कस्याः ।

**अधिकरणिकः**—अस्याः । (इति वसन्तसेनामातरं दर्शयति ।)

**चारुदत्तः**—(उत्थाय ।) आर्ये, अभिवादये ।

**वृद्धा**—जाद, चिरं मे जीव । (स्वगतम् ।) अअं सो चारुदत्तो । सुणिक्खित्तं क्खु दारिआए जोव्वणम् । (ख)

**अधिकरणिकः**—आर्य, गणिका तव मित्रम् ।

(चारुदत्तो लज्जां नाटयति ।)

**शकारः**—

लज्जाए भीलुदाए वा
चालित्तं अलिए णिगूहिदुम् ।
शअं मालिअ अत्थकालणा
दाणिं गूहदि ण तं हि भश्टके ॥ १७ ॥ (ग)

---

(क) आगतोऽसि रे स्त्रीघातक, आगतोऽसि । अहो न्याय्यो व्यवहारः, अहो धर्म्यो व्यवहारः, यदेतस्मै स्त्रीघातकायासनं दीयते । भवतु । ननु दीयताम् ।

(ख) जात, चिरं मे जीव । अयं स चारुदत्तः । सुनिक्षिप्तं खलु दारिकया यौवनम् ।

(ग) लज्जया भीरुतया वा चारित्रमलीकं निगूहितुम् ।
स्वयं मारयित्वार्थकारणादिदानीं गूहति न तद्धि भट्टकः ॥

---

नेत्रविशालत्वमुक्तम् ॥ १६ ॥ प्रसक्त(क्तिः) प्रणयो रागानुबन्धः प्रीतिर्वेति । प्रीतिः स्नेहमात्रम् ॥ **लज्जाए इत्यादि** । वैतालीयम् । एइं इति सबिन्दुचिकारो लघुः छन्दोनुरोधात् । लज्जया भीरुकतया च लक्षितः । त्वमित्यर्थात् । किमर्थमलीके स्त्रीवधादौ दरिद्रमावरणं निग्रही(गूहि)तुम् (?) । कुत एवमित्याह—स्वयं मारयित्वार्थनिमित्तमिदानीं गूहति न नष्टके । अपि तु नष्ट

**श्रेष्ठिकायस्थौ**—अज्जचारुदत्त, भणाहि । अलं लज्जाए । ववहारो क्खु एसो । (क)

**चारुदत्तः**—(सलज्जम् ।) भो अधिकृताः, मया कथमीदृशं वक्तव्यम्, यथा गणिका मम मित्रमिति । अथवा यौवनमत्रापराध्यति, न चारित्र्यम् ।

**अधिकरणिकः**—

व्यवहारः सविघ्नोऽयं त्यज लज्जां हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्यं छलमत्र न गृह्यते ॥ १८ ॥

अलं लज्जया । व्यवहारस्त्वां पृच्छति ।

**चारुदत्तः**—अधिकृत, केन सह मम व्यवहारः ।

**शकारः**—(साटोपम् ।) अले, मए शह ववहाले । (ख)

**चारुदत्तः**—त्वया सह मम व्यवहारः सुदुःसहः ।

**शकारः**—अले इश्थिआघादआ, तं तादिशिं लअणशदभूशणिअं वशन्तशेणिअं मालिअ, शंपदं कवडकावडिके भविअ णिगूहेशि । (ग)

**चारुदत्तः**—असंबद्धः खल्वसि ।

**अधिकरणिकः**—आर्यचारुदत्त, अलमनेन । ब्रूहि सत्यम् । अपि गणिका तव मित्रम् ।

**चारुदत्तः**—एवमेव ।

**अधिकरणिकः**—आर्य, वसन्तसेना क्व ।

**चारुदत्तः**—गृहं गता ।

---

(क) आर्यचारुदत्त, भण । अलं लज्जया । व्यवहारः खल्वेषः ।

(ख) अरे, मया सह व्यवहारः ।

(ग) अरे स्त्रीघातक, तां तादृशीं रत्नशतभूषणां वसन्तसेनां मारयित्वा, सांप्रतं कपटकापटिको भूत्वा, निगूहसि ।

---

एव । 'नष्टके' इत्यपि पाठः (?) ॥ १७ ॥ **व्यवहार इति** । छलपरिहारार्थं चिरं

**श्रेष्ठिकायस्थौ**—कधं गदा, कदा गदा, गच्छन्ती वा केण अणुगदा। (क)

**चारुदत्तः**—(स्वगतम्) किं प्रच्छन्नं गतेति ब्रवीमि।

**श्रेष्ठिकायस्थौ**—अज्ज, कधेहि। (ख)

**चारुदत्तः**—गृहं गता। किमन्यद्ब्रवीमि।

**शकारः**—ममकेलकं पुप्फकलण्डकजिण्णुज्जाणं पवेशिअ अत्थणिमित्तं बाहुपाशबलक्कालेण मालिदा। अए, शंपदं वदशि घलं गदे त्ति। (ग)

**चारुदत्तः**—आः असंबद्धप्रलापिन्,

अभ्युक्षितोऽसि सलिलैर्न बलाहकानां
चाषाग्रपक्षसदृशं भृशमन्तराले।
मिथ्यैतदाननमिदं भवतस्तथाहि
हेमन्तपद्ममिव निष्प्रभतामुपैति ॥ १९ ॥

**अधिकरणिकः**—(जनान्तिकम्।)

तुलनं चाद्रिराजस्य समुद्रस्य च तारणम्।
ग्रहणं चानिलस्येव चारुदत्तस्य दूषणम् ॥ २० ॥

(प्रकाशम्।) आर्यचारुदत्तः खल्वसौ कथमिदमकार्यं करिष्यति। ('घोणा-' (९।१६) इत्यादि पठति।)

**शकारः**—किं पक्खवादेण ववहाले दीशदि। (घ)

---

(क) कथं गता, कदा गता, गच्छन्ती वा केनानुगता।

(ख) आर्य, कथय।

(ग) मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्यार्थनिमित्तं बाहुपाशबलात्कारेण मारिता। अये, सांप्रतं वदसि गृहं गतेति।

(घ) किं पक्षपातेन व्यवहारो दृश्यते।

---

समीक्ष्यत इत्याशङ्क्याह—छलमत्र नेति ॥ १८ ॥ **अभ्युक्षितेति।** पक्षः केशविशेषः। भृशमत्यर्थम्। अन्तरा[ले] एतद्वचनमध्ये। मेघजलसिक्तनाशाखे जलबिन्दुर्युयुत इति कर्मवशामेकं मिथ्यात्मसूचकमिति (?)

**अधिकरणिकः**—अपेहि मूर्ख,

वेदार्थान्प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता
मध्याह्ने वीक्षसेऽर्कं न तव सहसा दृष्टिर्विचलिता ।
दीप्ताग्नौ पाणिमन्तः क्षिपसि स च ते दग्धो भवति नो
चारित्र्याच्चारुदत्तं चलयसि न ते देहं हरति भूः ॥ २१ ॥

आर्यचारुदत्तः कथमकार्यं करिष्यति ।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं
दत्तानि येन हि धनान्यनपेक्षितानि ।
स श्रेयसां कथमिवैकनिधिर्महात्मा
पापं करिष्यति धनार्थमवैरिजुष्टम् ॥ २२ ॥

**वृद्धा**—हदास, जो तदाणिं णासीकिदं सुवण्णभण्डअं रत्तिं चोरेहिं अवहिदं त्ति तस्स कारणादो चदुस्समुद्दसारभूदं रअणावलिं देदि, सो दाणिं अत्थकल्लवत्तस्स कारणादो इमं अकज्जं करेदि । हा जादे, एहि मे पुत्ति । (क) (इति रोदिति ।)

**अधिकरणिकः**—आर्य चारुदत्त, किमसौ पद्भ्यां गता, उत प्रवहणेनेति ।

**चारुदत्तः**—ननु मम प्रत्यक्षं न गता । तन्न जाने किं पद्भ्यां गता, उत प्रवहणेनेति ।

(प्रविश्य सामर्षः ।)

**वीरकः**—

पादप्पहारपरिभवविमाणणाबद्धगरुअवेरस्स ।
अणुसोअन्तस्स इअं कधं पि रत्ती पभादा मे ॥ २३ ॥

(क) हताश, यस्तदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति तस्य कारणाच्चतुःसमुद्रसारभूतां रत्नावलीं ददाति, स इदानीमर्थकल्यवर्तस्य कारणादिदमकार्यं करोति । हा जाते, एहि मे पुत्रि ।

॥ १९ ॥ **तुलनमिति** ॥ २० ॥ **वेदार्थानित्यादि** । अतिधृतिजातिः । वेदार्थविरोधिनो वचने जिह्वापातो युज्यते ॥ २१ ॥ **कृत्वेति** । अनपेक्षितानि । अपेक्षा योग्यतामप्यपेक्षा तेषां न कृतेत्यर्थः (?) ॥ २२ ॥ **पादप्पहारेति** । गाथा । पादप्रहारेण परिभव आक्रमः स एव विमानना तया बद्धगुरुकवैरस्य । अनुशोचमानस्येयं कथमपि रात्रिः प्रभातापगता मम ॥ २३ ॥

ता जाव अधिअरणमण्डवं उवसप्पामि । (प्रवेष्टकेन ।) सुहं अज्जमिस्साणम् । (क)

**अधिकरणिकः**—अये, नगररक्षाधिकृतो वीरकः । वीरक, किमागमनप्रयोजनम् ।

**वीरकः**—ही, बन्धणभेअणसंभमे अज्जकं अण्णेसन्तो, ओवाडिदं पवहणं वच्चदि त्ति विआरं करन्तो अण्णेसन्तो, 'अरे, तुए वि आलोइदे, मए वि आलोइदव्वो' त्ति भणन्तो ज्जेव चन्दणमहत्तरएण पादेण ताडिदो म्हि । एदं सुणिअ अज्जमिस्सा पमाणम् । (ख)

**अधिकरणिकः**—भद्र, जानीषे कस्य तत्प्रवहणमिति ।

**वीरकः**—इमस्स अज्जचारुदत्तस्स । वसन्तसेणा आरूढा पुप्फकरण्डकजिण्णुज्जाणं कीलिदं णीअदि त्ति पवहणवाहएण कहिदम् । (ग)

**शकारः**—पुणो वि शुदं अज्जेहिं । (घ)

**अधिकरणिकः**—

एष भो निर्मलज्योत्स्नो राहुणा ग्रस्यते शशी ।
जलं कूलावपातेन प्रसन्नं कलुषायते ॥ २४ ॥

वीरक, पश्चादिह भवतो न्यायं द्रक्ष्यामः । य एषोऽधिकरणद्वार्यश्वस्तिष्ठति, तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानम्, दृश्यतामस्ति तत्र काचिद्विपन्ना स्त्री न वेति ।

---

(क) पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य ।
अनुशोचत इयं कथमपि रात्रिः प्रभाता मे ॥
तद्यावदधिकरणमण्डपमुपसर्पामि । सुखमार्यमिश्राणाम् ।

(ख) ही, बन्धनभेदनसंभ्रम आर्यकमन्वेषयन्, अपवारितं प्रवहणं व्रजतीति विचारं कुर्वन्नन्वेषयन्, 'अरे, त्वयाप्यालोकितम्, मयाप्यालोकितव्यम्' इति भणन्नेव चन्दनमहत्तरकेण पादेन ताडितोऽस्मि । एतच्छ्रुत्वार्यमिश्राः प्रमाणम् ।

(ग) अस्यार्यचारुदत्तस्य । वसन्तसेनारूढा पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीयत इति प्रवहणवाहकेन कथितम् । (घ) पुनरपि श्रुतमार्यैः ।

---

**एष इति** ॥ २४ ॥ सावएहिं श्वापदैः ॥ [सावसेसेहिं] सावशेषाभ्याम् ॥

**वीरकः**—जं अज्जो आणवेदि । (इति निष्क्रान्तः । प्रविश्य च ।) गदो म्हि तहिं । दिट्ठं च मए इत्थिआकलेवरं सावएहिं विलुप्पन्तम् । (क)

**श्रेष्ठिकायस्थौ**—कधं तुए जाणिदं इत्थिआकलेवरं त्ति । (ख)

**वीरकः**—सावसेसेहिं केसहत्थपाणिपादेहिं उवलक्खिदं मए ।(ग)

**अधिकरणिकः**—अहो, धिग्वैषम्यं लोकव्यवहारस्य ।

यथा यथेदं निपुणं विचार्यते तथा तथा संकटमेव दृश्यते ।
अहो सुसन्ना व्यवहारनीतयो मतिस्तु गौः पङ्कगतेव सीदति ॥२५॥

**चारुदत्तः**—(स्वगतम् ।)

यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति ।
एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति ॥ २६ ॥

**अधिकरणिकः**—आर्यचारुदत्त, सत्यमभिधीयताम् ।

**चारुदत्तः**—

दुष्टात्मा परगुणमत्सरी मनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः ।
किं यो यद्वदति मृषैव जातिदोषा-
त्तद्ग्राह्यं भवति न तद्विचारणीयम् ॥ २७ ॥

अपि च ।

योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि ।
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि ॥ २८ ॥

**शकारः**—हंहो अधिअलणभोइआ, किं तुम्हे पक्खवीदेण व-

---

(क) यदार्य आज्ञापयति । गतोऽस्मि तत्र । दृष्टं च मया स्त्रीकलेवरं श्वापदैर्विलुप्यमानम् । (ख) कथं त्वया ज्ञातं स्त्रीकलेवरमिति ।
(ग) सावशेषैः केशहस्तपाणिपादैरुपलक्षितं मया ।

---

**यथेति** । 'अहो सुसन्ना व्यवहारनीतयः', इति सामान्यविशेषभावेन विशेषणम् ॥ २५ ॥ **यथेति** । छिद्रेषु व्यसनेषु ॥ २६ ॥ **दुष्टात्मेति** । अह-

वहालं पेक्खध, जेण अज्ज वि एशे हदाशचालुदत्ते आशणे धालीअदि । (क)

**अधिकरणिकः**—भद्र शोधनक, एवं क्रियताम् ।

(शोधनकस्तथा करोति ।)

**चारुदत्तः**—विचार्यताम् । भो अधिकृताः, विचार्यताम् ।
(इत्यासनादवतीर्य भूमावुपविशति ।)

**शकारः**—(स्वगतम् । सहर्षं नर्तित्वा ।) ही अणेण मए कडे पावे अण्णश्श मश्तके निवडिदे । ता जहिं चालुदत्ताके उवविशदि तहिं हग्गे उवविशामि । (तथा कृत्वा ।) चालुदत्ता, पेक्ख पेक्ख मम् । ता भण भण मए मालिदे त्ति । (ख)

**चारुदत्तः**—भो अधिकृताः । (दुष्टात्मा–'(९।२७) इति पूर्वोक्तं पठति । सनिश्वासं स्वगतम् ।)

मैत्रेय भोः किमिदमद्य ममोपघातो
हा ब्राह्मणि द्विजकुले विमले प्रसूता ।
हा रोहसेन हि न पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन नित्यम् ॥ २९ ॥

प्रेषितश्च मया तद्वार्तान्वेषणाय मैत्रेयो वसन्तसेनासकाशं शकटिकानिमित्तं च तस्य प्रदत्तान्यलंकरणानि प्रत्यर्पयितुम् । तत्कथं चिरयते ।

(ततः प्रविशति गृहीताभरणो विदूषकः ।)

**विदूषकः**—पेसिदोह्मि अज्जचारुदत्तेण वसन्तसेणासआसम्, तहिं अलंकरणाइं गेण्हिअ, जधा 'अज्जमित्तेअ, वसन्तसेणाए वच्छो रोहसेणो अत्तणो अलंकारेण अलंकरिअ जणणीसआसं पेसिदो ।

(क) हंहो अधिकरणभोजकाः, किं यूयं पक्षपातेन व्यवहारं पश्यत, येनाद्याप्येष हताशचारुदत्त आसने धार्यते ।

(ख) ही, अनेन मया कृतं पापमन्यस्य मस्तके निपतितम् । तद्यत्र चारुदत्त उपविशति तत्राहमुपविशामि । चारुदत्त, पश्य पश्य माम् । तद्भण भण मया मारितेति ।

र्षिण्या श्लोकः ॥ २७ ॥ **य इति** ॥ २८ ॥ **मैत्रेयेति** ॥ २९ ॥

इमस्स आहरणं दादव्वम्, ण उण गेण्हिदव्वम् । ता समप्पेहि' त्ति । ता जाव वसन्तसेणासआसं ज्जेव गच्छामि । (परिक्रम्यावलोक्य च । आकाशे ।) कधं भावरेभिलो । भो भावरेभिल, किंणिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि । (आकर्ण्य ।) किं भणासि—'पिअवअस्सो चारुदत्तो अधिअरणमण्डवे सद्दाइदो' त्ति । ता ण हु अप्पेण कज्जेण होदव्वम् । (विचिन्त्य ।) ता पच्छा वसन्तसेणासआसं गमिस्सम् । अधिअरणमण्डवं दाव गमिस्सम् । (परिक्रम्यावलोक्य च ।) इदं अधिअरणमण्डवम् । ता जाव पविसामि । (प्रविश्य ।) सुहं अधिअरणभोइआणम् । कहिं मम पिअवअस्सो । (क)

**अधिकरणिकः**—नन्वेष तिष्ठति ।

**विदूषकः**—वअस्स, सोत्थि दे । (ख)

**चारुदत्तः**—भविष्यति ।

**विदूषकः**—अवि क्खेमं दे । (ग)

**चारुदत्तः**—एतदपि भविष्यति ।

**विदूषकः**—भो वअस्स, किंणिमित्तं उव्विग्गो उव्विग्गो विअ-लक्खीअसि । कुदो वा सद्दाइदो । (घ)

**चारुदत्तः**—वयस्य,

---

(क) प्रेषितोऽस्म्यार्यचारुदत्तेन वसन्तसेनासकाशम्, तत्रालंकरणानि गृहीत्वा, यथा—'आर्यमैत्रेय, वसन्तसेनया वत्सो रोहसेन आत्मनोऽलंकारेणालंकृत्य जननीसकाशं प्रेषितः । अस्या आभरणं दातव्यम्, न पुनर्ग्रहीतव्यम् । तत्समर्पय' इति । तद्यावद्वसन्तसेनासकाशमेव गच्छामि । कथं भावरेभिलः । भो भावरेभिल, किंनिमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे । किं भणसि—'प्रियवयस्यश्चारुदत्तोऽधिकरणमण्डप आहूतः' इति । तन्न खल्वल्पेन कार्येण भवितव्यम् । तत्पश्चाद्वसन्तसेनासकाशं गमिष्यामि । अधिकरणमण्डपं तावद्गमिष्यामि । अयमधिकरणमण्डपः । तद्यावत्प्रविशामि । सुखमधिकरणभोजकानाम् । कुत्र मम प्रियवयस्यः ।

(ख) वयस्य, स्वस्ति ते । (ग) अपि क्षेमं ते ।

(घ) भो वयस्य, किंनिमित्तमुद्विग्न उद्विग्न इव लक्ष्यसे । कुतो वाहूतः ।

मया खलु नृशंसेन परलोकमजानता ।
स्त्री रतिर्वाविशेषेण शेषमेषोऽभिधास्यति ॥ ३० ॥

**विदूषकः**—किं किम् । (क)

**चारुदत्तः**—(कर्णे ।) एवमेवम् ।

**विदूषकः**—को एव्वं भणादि । (ख)

**चारुदत्तः**—(संज्ञया शकारं दर्शयति ।) नन्वेष तपस्वी हेतुभूतः कृतान्तो मां व्याहरति ।

**विदूषकः**—(जनान्तिकम् ।) एव्वं कीस ण भणीअदि, गेहं गदे त्ति । (ग)

**चारुदत्तः**—उच्यमानमप्यवस्थादोषान्न गृह्यते ।

**विदूषकः**—भो भो अज्जा, जेण दाव पुरट्ठावणविहाराराम-देउलतडागकूवजूवेहिं अलंकिदा णअरी उज्जइणी, सो अणीसो अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणुचिट्ठदि त्ति । (सक्रोधम् ।) अरे रे काणेलीसुदा राअश्शालसंठाणआ उस्सुङ्खलआ किदजण-दोसभण्डआ बहुसुवण्णमण्डिदमक्कडआ, भण भण मम अग्गदो, जो दाणिं मम पिअवअस्सो कुसुमिदं माधवीलदं पि आकिट्ठिअ कुसुमावचअं ण करेदि कदा वि आकिट्टिदाए पल्लवच्छेदो भोदि त्ति, सो कधं एरिसं अकज्जं उहअलोअविरुद्धं करेदि । चिट्ठ रे कुट्टणिपुत्ता, चिट्ठ । जाव एदिणा तव हिअअकुडिलेण दण्डअट्ठेण मत्थअं दे सदखण्डं करेमि । (घ)

---

(क) किं किम् । (ख) क एवं भणति ।

(ग) एवं किमर्थं न भण्यते, गृहं गतेति ।

(घ) भो भो आर्याः, येन तावत्पुरस्थापनविहारारामदेवालयतडाग-कूपयूपैरलंकृता नगर्युज्जयिनी, सोऽनीशोऽर्थकल्यवर्तकारणादीदृशमका-र्यमनुतिष्ठतीति । अरे रे कुलटापुत्र राजश्यालसंस्थानक उच्छृङ्खलक कृतजनदोषभण्ड बहुसुवर्णमण्डितमर्कटक, भण भण ममाग्रतः, य इदानीं मम प्रियवयस्यः कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं न करोति कदाचिदाकृष्टतया पल्लवच्छेदो भवतीति, स कथमीदृशमकार्यमुभयलोकवि-रुद्धं करोति । तिष्ठ रे कुट्टिनीपुत्र, तिष्ठ । यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि ।

---

**मयेति** ॥ ३० ॥ पुरस्थापनं पुरावस्थितिः । पुरनिर्माणमिति यावत् । कूपयू-

**शकारः**—(सक्रोधम् ।) शुणन्तु शुणन्तु अज्जमिश्शा । चालुदत्तकेण शह मम विवादे ववहाले वा। ता कीश एशे काकपदशीशमश्तका मए शिले शदखण्डे कलेदि । मा दाव । ले दाशीए-पुत्ता दुट्टवडुका । (क)

(विदूषको दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति । शकारः सक्रोधमुत्थाय ताडयति । विदूषकः प्रतीपं ताडयति । अन्योन्यं ताडयतः । विदूषकस्य कक्षदेशादाभरणानि पतन्ति ।)

**शकारः**—(तानि गृहीत्वा दृष्ट्वा ससाध्वसम् ।) पेक्खन्तु पेक्खन्तु अज्जा । एदे क्खु ताए तवश्शिणीए केलका अलंकाला । (चारुदत्तमुद्दिश्य ।) इमश्श अत्थकल्लवत्तश्श कालणादो एशा मालिदा वावादिदा अ। (ख)

(अधिकृताः सर्वेऽधोमुखाः स्थिताः ।)

**चारुदत्तः**—(जनान्तिकम् ।)

अयमेवंविधे काले दृष्टो भूषणविस्तरः ।
अस्माकं भाग्यवैषम्यात्पतितः पातयिष्यति ॥ ३१ ॥

**विदूषकः**—भो, कीस भूदत्थं ण णिवेदीअदि । (ग)

**चारुदत्तः**—वयस्य,

दुर्बलं नृपतेश्चक्षुर्नैतत्तत्त्वं निरीक्षते ।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥ ३२ ॥

**अधिकरणिकः**—कष्टं भोः, कष्टम् ।

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः ।
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥ ३३ ॥

A Royal eye does not observe reality ... Speaks like a base wretch ... to make death shameful.
Mars Jupiter

---

(क) शृण्वन्तु शृण्वन्त्वार्यमिश्राः । चारुदत्तेन सह मम विवादो व्यवहारो वा। तत्किमर्थमेष काकपदशीर्षमस्तको मम शिरः शतखण्डं करोति । मा तावत् । रे दास्याः पुत्र दुष्टबटुक ।

(ख) पश्यन्तु पश्यन्त्वार्याः । एते खलु तस्यास्तपस्विन्या अलंकाराः । अस्यार्थकल्यवर्तस्य कारणादेषा मारिता व्यापादिता च ।

(ग) भोः, किमर्थं भूतार्थो न निवेद्यते ।

---

पेति लोकोक्तिः । कृतजनदोषश्चासौ भण्डश्चेति विशेषणसमासः ॥ मए मम । शिले शिरः ॥ **अयमिति** ॥३१॥ **दुर्बलमिति** ॥३२॥ **अङ्गारकेति** ॥३३॥

**श्रेष्ठिकायस्थौ**—(विलोक्य वसन्तसेनामातरमुद्दिश्य ।) अवहिदा दाव अज्जा एदं सुवण्णभण्डअं अवलोएदु, सो ज्जेव एसो ण वेत्ति । (क)

**वृद्धा**—(अवलोक्य ।) सरिसो एसो, ण उण सो । (ख)

**शकारः**—आं वुड्ढकुट्टणि, अक्खीहिं मन्तिदं वाआए मूकि-दम् । (ग)

**वृद्धा**—हदास, अवेहि । (घ)

**श्रेष्ठिकायस्थौ**—अप्पमत्तं कधेहि, सो ज्जेव एसो ण वेत्ति । (ङ)

**वृद्धा**—अज्ज, सिप्पिकुसलदाए ओबन्धेदि दिट्ठिम् । ण उण सो । (च)

**अधिकरणिकः**—भद्रे, अपि जानास्येतान्याभरणानि ।

**वृद्धा**—णं भणामि, ण हु ण हु अणभिजाणिदो । अह वा कदा वि सिप्पिणा घडिदो भवे । (छ)

**अधिकरणिकः**—पश्य श्रेष्ठिन्,

वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य ।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम् ॥ ३४ ॥

**श्रेष्ठिकायस्थौ**—अज्जचारुदत्तस्स केरकाइं एदाइं । (ज)

**चारुदत्तः**—न खलु न खलु ।

**श्रेष्ठिकायस्थौ**—ता कस्स । (झ)

---

(क) अवहिता तावदार्येदं सुवर्णभाण्डमवलोकयतु, तदेवेदं न वेति ।
(ख) सदृशमेतत्, न पुनस्तत् ।
(ग) आं वृद्धकुट्टनि, अक्षिभ्यां मन्त्रितं वाचा मूकितम् ।
(घ) हताश, अपेहि । (ङ) अप्रमत्तं कथय, तदेवैतन्न वेति ।
(च) आर्य, शिल्पिकुशलतयावबध्नाति दृष्टिम् । न पुनस्तत् ।
(छ) ननु भणामि, न खलु न खल्वनभिज्ञातः । अथवा कदापि शिल्पिना घटितो भवेत् ।
(ज) आर्यचारुदत्तीयान्येतानि । (झ) तदा कस्य ।

---

ओवन्धेइ अवबध्नाति ॥ **वस्त्वन्तराणीति** । कृतहस्ततया शिल्पकौशलेन

**चारुदत्तः**—इहात्रभवत्या दुहितुः ।

**श्रेष्ठिकायस्थौ**—कधं एदाइं ताए विओअं गदाइं । (क)

**चारुदत्तः**—एवं गतानि । आं, इदम् ।

**श्रेष्ठिकायस्थौ**—अज्जचारुदत्त, एत्थ सच्चं वत्तव्वम् । पेक्ख पेक्ख ।

सच्चेण सुहं क्खु लब्भइ सच्चालावे ण होइ पावम् ।
सच्चं त्ति दुवेवि अक्खरा मा सच्चं अलिएण गूहेहि॥३५॥ (ख)

**चारुदत्तः**—आभरणान्याभरणानीति । न जाने, किंत्वस्मद्गृहादानीतानीति जाने ।

**शकारः**—उज्जाणं पवेशिअ पढमं मालेशि । कवडकावडिआए शंपदं णिगूहेशि । (ग)

**अधिकरणिकः**—आर्यचारुदत्त, सत्यमभिधीयताम् ।

इदानीं सुकुमारेऽस्मिन्निःशङ्कं कर्कशाः कशाः ।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः ॥ ३६ ॥

**चारुदत्तः**—

अपापानां कुले जाते मयि पापं न विद्यते ।
यदि संभाव्यते पापमपापेन च किं मया ॥ ३७ ॥

(स्वगतम् ।) न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम् । (प्रकाशम् ।) भोः, किं बहुना ।

---

(क) कथमेतानि तस्या वियोगं गतानि ।

(ख) आर्यचारुदत्त, अत्र सत्यं वक्तव्यम् । पश्य पश्य ।
सत्येन सुखं खलु लभ्यते सत्यालापे न भवति पातकम् ।
सत्यमिति द्वे अप्यक्षरे मा सत्यमलीकेन गूहय ॥

(ग) उद्यानं प्रवेश्य प्रथमं मारयसि । कपटकापटिकतया सांप्रतं निगूहसि ।

---

॥ ३४ ॥ एवं आं इदं एवमिदं स्मर्यते ॥ **सच्चेणेत्यादि** । वैतालीयम् । सत्येन सुखं खलु लभ्यते । सत्यालापे । सत्यमालापयतीति क्विपि सत्यालापः । तत्र न भवति पापकम् । सत्यमिति द्वे [अ]प्यक्षरे इति स्वरूपोक्तिः । 'न भवति पापस्य निमित्तमिति यस्मात्' इति प्राचीनटीका । अलीयेण(?) अलीकं कर्तृ । सत्यापेक्षया बह्वक्षरमपीत्यर्थः । सत्यं पूर्वोक्तस्वरूपत्वाद्द्व्यक्षरमपि कर्मभूतम् । मा निगूहति मा संवृणोति ॥ ३५ ॥ अतिकापटिकतया निगूहसि ॥ **इदानीमिति** । कशा

मया किल नृशंसेन लोकद्वयमजानता ।
स्त्रीरत्नं च विशेषेण शेषमेषोऽभिधास्यति ॥ ३८ ॥

**शकारः**—वावादिदा । अले, तुमं पि भण, मए वावादिदेत्ति । (क)

**चारुदत्तः**—त्वयैवोक्तम् ।

**शकारः**—शुणेध शुणेध भट्टालका, एदेण मालिदा । एदेण ज्जेव शंशए छिण्णे । एदश्श दलिद्दचालुदत्तश्श शालीले दण्डे धालीअदु । (ख)

**अधिकरणिकः**—शोधनक, यथाह राष्ट्रियः । भो राजपुरुषाः, गृह्यतामयं चारुदत्तः ।

(राजपुरुषा गृह्णन्ति ।)

**वृद्धा**—पसीदन्तु पसीदन्तु अज्जमिस्सा । ('जो दाव चोरेहिं अवहिदस्स—' (२१५ पृष्ठे) इत्यादि पूर्वोक्तं पठति ।) ता जदि वावादिदा मम दारिआ, वावादिदा । जीवदु मे दीहाऊ । अण्णं च । अत्थिपच्चत्थिण्णं ववहारो । अहं अत्थिणी । ता मुञ्चध एदम् । (ग)

**शकारः**—अवेहि गब्भदाशि, गच्छ । किं तव एदिणा । (घ)

**अधिकरणिकः**—आर्ये, गम्यताम् । हे राजपुरुषाः, निष्क्रामयतैनाम् ।

**वृद्धा**—हा जाद, हा पुत्तअ । (ङ) (इति रुदती निष्क्रान्ता ।)

---

(क) व्यापादिता । अरे, त्वमपि भण, मया व्यापादितेति ।

(ख) शृणुत शृणुत भट्टारकाः, एतेन मारिता । एतेनैव संशयश्छिन्नः । एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्यताम् ।

(ग) प्रसीदन्तु प्रसीदन्त्वार्यमिश्राः । तद्यदि व्यापादिता मम दारिका, व्यापादिता । जीवतु मे दीर्घायुः । अन्यच्च । अर्थिप्रत्यर्थिनोर्व्यवहारः । अहमर्थिनी । तन्मुञ्चतैनम् ।

(घ) अपेहि गर्भदासि, गच्छ । किं तवैतेन ।

(ङ) हा जात, हा पुत्रक ।

---

अश्वताडिनी ॥ ३६ ॥ **अपापानामिति** ॥ ३७ ॥ **मयेति** । स्त्रीरेव

**शकारः**—(स्वगतम्।) कडं मए एदश्श अत्तणो शलिशम्। शंपदं गच्छामि। (क) (इति निष्क्रान्तः।)

**अधिकरणिकः**—आर्यचारुदत्त, निर्णये वयं प्रमाणम्। शेषे तु राजा। तथापि शोधनक, विज्ञाप्यतां राजा पालकः—

'अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत्।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह॥ ३९॥'

**शोधनकः**—जं अज्जो आणवेदि। (इति निष्क्रम्य पुनः प्रविश्य। सास्रम्।) अज्जा, गदम्हि तहिं। राआ पालओ भणादि—जेण अत्थकल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं ताइं ज्जेव आहरणाइं गले बन्धिअ डिण्डिमं ताडिअ दक्खिणमसाणं णइअ सूले भज्जेध' त्ति। जो को वि अवरो एरिसं अकज्जं अणुचिट्ठदि सो एदिणा सणिआरदण्डेण सासीअदि। (ख)

**चारुदत्तः**—अहो, अविमृश्यकारी राजा पालकः। अथवा।

ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम्॥ ४०॥

अपि च।

ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः।
अपापानां सहस्राणि हन्यन्ते च हतानि च॥ ४१॥

सखे मैत्रेय, गच्छ। मद्वचनादम्बामपश्चिममभिवादयस्व। पुत्रं च मे रोहसेनं परिपालयस्व।

**विदूषकः**—मूले छिण्णे कुदो पादवस्स पालणम्। (ग)

---

(क) कृतं मयैतस्यात्मनः सदृशम्। सांप्रतं गच्छामि।

(ख) यदार्य आज्ञापयति। आर्याः, गतोऽस्मि तत्र। राजा पालको भणति—'येनार्थकल्यवर्तस्य कारणाद्वसन्तसेना व्यापादिता, तं तान्येवाभरणानि गले बद्ध्वा डिण्डिमं ताडयित्वा दक्षिणश्मशानं नीत्वा शूले भङ्क्त' इति। यः कोऽप्यपर ईदृशमकार्यमनुतिष्ठति स एतेन सनिकारदण्डेन शास्यते। (ग) मूले छिन्ने कुतः पादपस्य पालनम्।

---

रत्नम्॥ ३८॥ कडं कृतम्॥ **अयमिति**॥ ३९॥ **ईदृश इति**॥४०॥ **ईदृशैरिति**। द्रुपदादीनां श्वेतकाकीयत इवार्थे च्छः (?)।

**चारुदत्तः**—मा मैवम् ।

नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः ।
मयि यो वै तव स्नेहो रोहसेने स युज्यताम् ॥ ४२ ॥

**विदूषकः**—भो वअस्स, अहं ते पिअवअस्सो भविअ तुए विरहिदाइं पाणाइं धारेमि । (क)

**चारुदत्तः**—रोहसेनमपि तावद्दर्शय ।

**विदूषकः**—एव्वम् । जुज्जदि । (ख)

**अधिकरणिकः**—भद्र शोधनक, अपसार्यतामयं बटुः ।

(शोधनकस्तथा करोति ।)

**अधिकरणिकः**—कः कोऽत्र भोः । चाण्डालानां दीयतामादेशः ।

(इति चारुदत्तं विसृज्य निष्क्रान्ताः सर्वे राजपुरुषाः ।)

**शोधनकः**—इदो आअच्छदु अज्जो । (ग)

**चारुदत्तः**—(सकरुणम् 'मैत्रेय भोः किमिदमद्य' (९।२९) इत्यादि पठति । आकाशे ।)

विषसलिलतुलाग्निप्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य ।
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥ ४३ ॥

अयमागतोऽस्मि ।

(इति निष्क्रान्ताः सर्वे ।)

**इति व्यवहारो नाम नवमोऽङ्कः ।**

---

(क) भो वयस्य, अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान्प्राणान्धारयामि ।

(ख) एवम् । युज्यते । (ग) इत आगच्छत्वार्यः ।

---

उत्पातकल्पैरित्यर्थः ॥ ४१ ॥ **नृणामिति** ॥ ४२ ॥ **विषसलिलेति** । विषादिपरीक्षाप्रार्थितेऽन्विष्टे । विचारे । क्रकचं दातव्यम् । अर्हे तव्यः (?) । यदि मयोक्तं क्रियते तदा क्रकचदानमर्हमेवेति भावः (?) । अथ विचारनिरपेक्षं नृपतिं हृदि स्वीकृत्य वदति ॥ ४३ ॥

इति व्यवहारो नाम नवमोऽङ्कः ।

( ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः ।)

**उभौ**—

तक्किं ण कलअ कालण णववहबन्धणअणे णिउणा ।
अचिलेण शीशछेअणशूलालोवेशु कुशलम्ह ॥ १ ॥

ओशलध अज्जा, ओशलध । एशे अज्जचालुदत्ते
दिण्णकलवीलदामे गहिदे अम्हेहिं वज्झपुलिसेहिं ।
दीवे व्व मन्दणेहे थोअं थोअं खअं जादि ॥ २ ॥ (क)

**चारुदत्तः**—(सविषादम् ।)

नयनसलिलसिक्तं पांशुरुक्षीकृताङ्गं
पितृवनसुमनोभिर्वेष्टितं मे शरीरम् ।
विरसमिह रटन्तो रक्तगन्धानुलिप्तं
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥ ३ ॥

**चाण्डालौ**—ओशलध अज्जा, ओशलध ।

किं पेक्खध छिज्जन्तं शप्पुलिशं कालपलशुधालाहिं ।
शुअणशउणाधिवाशं शज्जणपुलिशद्दुमं एदम् ॥ ४ ॥

आअच्छ ले चालुदत्ता, आअच्छ । (ख)

---

(क) तत्किं न कलय कारणं नववधबन्धनयने निपुणौ ।
अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्वः ॥

अपसरतार्याः अपसरत । एष आर्यचारुदत्तः
दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् ।
दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ॥

(ख) अपसरतार्याः, अपसरत ।
किं पश्यत छिद्यमानं सत्पुरुषं कालपरशुधाराभिः ।
सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥

आगच्छ रे चारुदत्त, आगच्छ ।

---

**तक्किमिति** ॥ १ ॥ **दिण्णकलवीलेत्यादि** । गाथा । दत्तकरवीरमालो गृहीत आवाभ्यां वध्यपुरुषाभ्याम् । दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ॥ २ ॥ **नयनेति** । पितृवनं श्मशानम् । तर्कयन्ति उत्प्रेक्षन्ते ॥ ३ ॥ **किं पक्खधेति** । गाथा । किं प्रेक्षध्वं छेद्यमानं सत्पुरुषं कालपरशुधाराभिः । सुज-

**चारुदत्तः**—पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः, यदहमीदृशीं दशामनुप्राप्तः ।

सर्वगात्रेषु विन्यस्तै रक्तचन्दनहस्तकैः ।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥ ५ ॥

(अग्रतो निरूप्य ।) अहो, तारतम्यं नराणाम् । (सकरुणम् ।)

अमी हि दृष्ट्वा मदुपेतमेतन्मर्त्यं धिगस्त्वित्युपजातवाष्पाः ।
अशक्नुवन्तः परिरक्षितुं मां स्वर्गं लभस्वेति वदन्ति पौराः ॥ ६ ॥

**चाण्डालौ**—ओशलध अज्जा, ओशलध । किं पेक्खध ।

इन्दे प्पवाहिअन्ते गोप्पशवे संकमं च तालाणम् ।
शुपुलिशपाणविपत्ती चत्तालि इमे ण दट्टव्वा ॥ ७ ॥ (क)

**एकः**—हण्डे आहीन्ता, पेक्ख पेक्ख ।

णअलीपधाणभूदे वज्झीअन्ते कदन्तअण्णाए ।
किं लुअदि अन्तलिक्खे आदु अणब्भे पडदि वज्जे ॥ ८ ॥ (ख)

**द्वितीयः**—अले गोहा,

ण अ लुअदि अन्तलिक्के णेअ अणब्भे पडदि वज्जे ।
महिलाशमूहमेहे निवडदि णअणम्बु धाराहिं ॥ ९ ॥

---

(क) अपसरतार्याः, अपसरत । किं पश्यत ।
इन्द्रः प्रवाह्यमाणो गोप्रसवः संक्रमश्च ताराणाम् ।
सुपुरुषप्राणविपत्तिश्चत्वार इमे न द्रष्टव्याः ॥

(ख) अरे आहीन्त, पश्य पश्य ।
नगरीप्रधानभूते वध्यमाने कृतान्ताज्ञया ।
किं रोदित्यन्तरिक्षमथवानभ्रे पतति वज्रम् ॥

---

नशकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥ ४ ॥ **सर्वेति** । पिष्टचूर्णं श्यामतण्डुलचूर्णम् । पशुर्देवतार्थं छागादिः ॥५॥ **अमी इति** । मदुपेतं मदर्पितं यथा स्यादेवम् । उद्गतबाष्पाः । मदिति पञ्चम्येकवचनान्तम् । मदुपगतमीदृशमवस्थान्तरं दृष्ट्वेति वार्थः ॥ ६ ॥ **इन्द्रेत्यादि** । गाथा । इन्द्रः प्रवास्यमानो यद्वा प्रवाह्यमानो विवर्धमानः । गोप्रसवो निपतनं च ताराणाम् । सत्पुरुषस्य प्राणविपत्तिर्नाशः । चत्वार इमे न द्रष्टव्याः ॥ ७ ॥ हण्डे इति नीचसंबोधने । **णअली इत्यादि** । गाथा । नगरीप्रधानभूते वध्यमाने कृतान्ताज्ञया । किं रोदित्यन्तरिक्षमुतानभ्रे पतति वज्रम् ॥ नगरीप्रधानवधो वज्र इवेत्युत्प्रेक्षा ॥ ८ ॥ **ण [अ] लुअदीत्यादि** । गाथा । न च रोदित्यन्तरिक्षं नैवानभ्रं च पतति वज्रम् । स्त्रीसमूहमेघा-

अवि अ ।

वज्झम्मि णीअमाणे जणश्श शव्वश्श लोदमाणश्श ।
णअणशलिलेहिं शित्ते लच्छादो ण उण्णमइ लेणू ॥ १० ॥ (क)

**चारुदत्तः**—(निरूप्य सकरुणम् ।)

एताः पुनर्हर्म्यगताः स्त्रियो मां वातायनार्धेन विनिःसृतास्याः ।
हा चारुदत्तेत्यभिभाषमाणा बाष्पं प्रणालीभिरिवोत्सृजन्ति ॥ ११ ॥

**चाण्डालौ**—आअच्छ ले चालुदत्ता आअच्छ । इमं घोषणट्ठाणम् । आहणेध डिण्डिमम् । घोशेध घोशणम् । (ख)

**उभौ**—शुणाध अज्जा, शुणाध । एशे शत्थवाहविणअदत्तश्श णत्थिके शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम । एदिणा किल अकज्जकालिणा गणिआ वशन्तशेणा अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फकलण्डअजिण्णुज्जाणं पवेशिअ बाहुपाशबल्लक्कालेण मालिदे त्ति एशे शलोत्ते गहिदे, शअं अ पडिवण्णे । तदो लण्णा पालएण अम्हे आणत्ता एदं मालेदुम् । जदि अवले ईदिशं उभअलोअविलुद्धं अकज्जं कलेदि तं पि लाआ पालए एव्वं ज्जेव शाशदि । (ग)

---

(क) अरे गोह,

न च रोदित्यन्तरिक्षं नैवानभ्रे पतति वज्रम् ।
महिलासमूहमेघान्निपतति नयनाम्बु धाराभिः ॥

अपि च ।

वध्ये नीयमाने जनस्य सर्वस्य रुदतः ।
नयनसलिलैः सिक्तो रथ्यातो नोन्नमति रेणुः ॥

(ख) आगच्छ रे चारुदत्त, आगच्छ । इदं घोषणस्थानम् । आहत डिण्डिमम् । घोषयत घोषणाम् ।

(ग) शृणुतार्याः, शृणुत । एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम । एतेन किलाकार्यकारिणा गणिका वस-

---

न्निपतति । नयनाम्बु कर्तृ । धाराभिः ॥ ९ ॥ **वज्झम्मीत्यादि** । आर्या । वध्ये नीयमाने जनस्य सर्वस्य रुदतः । नयनसलिलैः सिक्ते सति रथ्यातो नोन्नमति रेणुः ॥ गोमिन् प्राहे स्वामिनः (?) ॥ १० ॥ **एता इति** ॥ ११ ॥

**चारुदत्तः**—(सनिर्वेदं स्वगतम् ।)

मखशतपरिपूतं गोत्रमुद्भासितं मे
सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम मरणदशायां वर्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ १२ ॥

(उद्वीज्य कर्णौ पिधाय ।) हा प्रिये वसन्तसेने,

शशिविमलमयूखशुभ्रदन्ति सुरुचिरविद्रुमसन्निभाधरौष्ठि ।
तव वदनभवामृतं निपीय कथमवशो ह्ययशोविषं पिबामि ॥ १३ ॥

**उभौ**—ओशलध अज्जा ओशलध ।

एशे गुणलअणणिही शज्जणदुक्खाण उत्तलणशेदू ।
अशुवण्णं मण्डणअं अवणीअदि अज्ज णअलीदो ॥ १४ ॥

अण्णं च ।

शव्वे क्खु होइ लोए लोए शुहशंठिदाण तत्तिल्लः ।
विणिवडिदाण णलाणं पिअकाली दुल्लहो होदि ॥ १५ ॥ (क)

**चारुदत्तः**—(सर्वतोऽवलोक्य ।)

अमी हि वस्त्रान्तनिरुद्धवक्त्राः प्रयान्ति मे दूरतरं वयस्याः ।
परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद्विषमस्थितस्य ॥ १६ ॥

---

न्तसेनार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति एष सलोप्त्रो गृहीतः, स्वयं च प्रतिपन्नः । ततो राज्ञा पालकेन वयमाज्ञप्ता एतं मारयितुम् । यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति ।

(क) अपसरतार्याः, अपसरत ।

एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः ।
असुवर्णं मण्डनकमपनीयतेऽद्य नगरीतः ॥

अन्यच्च ।

सर्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः ।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥

---

शलोत्ते सलोप्त्रः ॥ **मखेति** ॥ १२ ॥ उद्वीज्य उद्वेगं कृत्वा । **शशीति** ॥ १३ ॥ **एश इत्यादि** । गाथाद्वयम् । एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः । असुवर्णं मण्डनमपनीयतेऽद्य नगरीतः ॥१४॥ सर्वः खलु भवति

**चाण्डालौ**—ओशालणं किदम् । विवित्तं लाअमग्गम् । ता आणेध एदं दिण्णवज्झचिण्हम् । (क)

(चारुदत्तो निःश्वस्य 'मैत्रेय भोः किमिदमद्य' (९।२९) इत्यादि पठति ।)

(नेपथ्ये ।)

हा ताद, हा पिअवअस्स । (ख)

One of the Chandals.

**चारुदत्तः**—(आकर्ण्य सकरुणम् ।) भोः स्वजातिमहत्तर, इच्छाम्यहं भवतः सकाशात्प्रतिग्रहं कर्तुम् ।

to receive a favour

**चाण्डालौ**—किं अम्हाणं हत्थादो पडिग्गहं कलेशि । (ग)

**चारुदत्तः**—शान्तं पापम् । नापरीक्ष्यकारी दुराचारः पालक इव चाण्डालः । तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये ।

**चाण्डालौ**—एव्वं कलीअदु । (घ)

(नेपथ्ये ।)

हा ताद, हा आवुक । (ङ)

(चारुदत्तः श्रुत्वा सकरुणम् 'भोः स्वजातिमहत्तर' (२३१ पृष्ठे) इत्यादि पठति ।)

**चाण्डालौ**—अले पउला, खणं अन्तलं देध । एशे अज्जचालुदत्ते पुत्तमुहं पेक्खदु । (नेपथ्याभिमुखम् ।) अज्ज, इदो इदो । आअच्छ ले दालआ, आअच्छ । (च)

(ततः प्रविशति दारकमादाय विदूषकः ।)

---

(क) अपसारणं कृतम् । विविक्तो राजमार्गः । तदानयतैनं दत्तवध्यचिह्नम् ।

(ख) हा तात, हा प्रियवयस्य ।

(ग) किमस्माकं हस्तात्प्रतिग्रहं करोषि ।

(घ) एवं क्रियताम् । (ङ) हा तात, हा पितः ।

(च) हे पौराः, क्षणमन्तरं दत्त । एष आर्यचारुदत्तः पुत्रमुखं पश्यतु । आर्य, इत इतः । आगच्छ रे दारक, आगच्छ ।

---

लोकः लोकस्य सुखसंस्थितस्य कार्ये । तत्तिलः चिन्तापरः । उपयुक्त इत्यर्थः । विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥ १५ ॥ **अमी इति** ॥ १६ ॥

**विदूषकः**—तुवरदु तुवरदु भद्दमुहो । पिदा दे मारिदुं णीअदि । (क)

**दारकः**—हा ताद, हा आवुक । (ख)

**विदूषकः**—हा पिअवअस्स, कहिं मए तुमं पेक्खिदव्वो । (ग)

**चारुदत्तः**—(पुत्रं मित्रं च वीक्ष्य ।) हा पुत्र, हा मैत्रेय । (सकरुणम् ।) भोः, कष्टम् ।

चिरं खलु भविष्यामि परलोके पिपासितः ।
अत्यल्पमिदमस्माकं निवापोदकभोजनम् ॥ १७ ॥

किं पुत्राय प्रयच्छामि । (आत्मानमवलोक्य । यज्ञोपवीतं दृष्ट्वा ।) आं, इदं तावदस्ति मम च ।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम् ।
देवतानां पितॄणां च भागो येन प्रदीयते ॥ १८ ॥

(इति यज्ञोपवीतं ददाति ।)

**चाण्डालः**—आअच्छ ले चालुदत्ता, आअच्छ । (घ)

**द्वितीयः**—अले, अज्जचालुदत्तं णिलुववदेण णामेण आलेवेशि । अले, पेक्ख ।

अब्भुदए अवशाणे तहे अ लत्तिंदिवं अहदमग्गा ।
उद्दामे व्व किशोली णिअदी क्खु पडिच्छिदुं जादि ॥१९॥

अण्णं च ।

---

(क) त्वरतां त्वरतां भद्रमुखः । पिता ते मारयितुं नीयते ।
(ख) हा तात, हा पितः ।
(ग) हा प्रियवयस्य, कुत्र मया त्वं द्रष्टव्यः ।
(घ) आगच्छ रे चारुदत्त, आगच्छ ।

---

हत्यादो हस्तात् ॥ हा आवुक पितः॥ **चिरमिति** ॥१७॥ **अमौक्तिकमिति**॥१८॥ निरुपपदेन आर्य इत्यादिविशेषणशून्येन । **अब्भुदए इत्यादि** । गाथा । अभ्युदये चावसाने च तथैव रात्रिंदिवमहतमार्गा । अव्याहतप्रसिद्धा इत्यर्थः । उद्दामेव किशोरी नियतिर्दे(दैं)वं खलु प्रत्येषितुं याति ॥१९॥ **शुष्केत्यादि** । गाथा । अत्र द्वितीयखण्डचतुर्थपञ्चमगाणौ पञ्चममात्रौ(?) शुष्का अपि प्रदेशा अङ्गानि । शे अस्य । किं विनमितमस्तकेन अवनतशिरसा किं कर्तव्यम् । अस्य स्त्री [ह] णस्य लज्जया-

सुक्खा वि पदेशा शे किं विणमिअमत्थएण काअव्वम् ।
लाहुगहिदे वि चन्दे ण वन्दणीए जणपदश्श ॥ २० ॥ (क)

**दारकः**—अरे रे चाण्डाला, कहिं मे आवुकं णेध । (ख)

**चारुदत्तः**—वत्स,

अंसेन बिभ्रत्करवीरमालां स्कन्धेन शूलं हृदयेन शोकम् ।
आघातमद्याहमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः ॥ २१ ॥

**चाण्डालः**—दालआ,

ण हु अम्हे चाण्डाला चाण्डालकुलम्मि जादपुव्वा वि ।
जे अहिभवन्ति शाहुं ते पावा ते अ चाण्डाला ॥ २२ ॥ (ग)

**दारकः**—ता कीस मारेध आवुकम् । (घ)

**चाण्डालः**—दीहाओ, अत्त लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे । (ङ)

---

(क) अरे, आर्यचारुदत्तं निरुपपदेन नाम्नालपसि । अरे, पश्य ।
अभ्युदयेऽवसाने तथैव रात्रिंदिवमहतमार्गा ।
उद्दामेव किशोरी नियतिः खलु प्रत्येषितुं याति ॥
अन्यच्च ।
शुष्का अपि प्रदेशा अस्य किं विनमितमस्तकेन कर्तव्यम् ।
राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ॥

(ख) अरे रे चाण्डालाः, कुत्र मम पितरं नयत ।　　(ग) दारक,
न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि ।
येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥

(घ) तत्किमर्थं मारयत पितरम् ।

(ङ) दीर्घायुः, अत्र राजनियोगः खल्वपराध्यति, न खलु वयम् ।

---

नतशिरसोऽपि न कुत्सेत्यर्थः । कुत एवमित्यत आह—राहुगृहीत इव चन्द्रो वन्दनीयो जनपदस्य । किंशब्द आवर्त्योभयोरर्थयोर्योज्य इत्याहुः ॥२०॥ **अंसेनेति** । आघातं अधिकरणवधस्थानम् । वालकम् (?) 'स(श)मिता यज्ञे' इति पाणिनेः सूत्रम् । शमितरि भवं शामित्रम् । यज्ञे पशुघातस्थानम् । आलब्धोऽभिमन्त्रितः । मारित इत्येके ॥ २१ ॥ **ण हु अम्हे इत्यादि** । गाथा । 'न [खलु] वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि । येऽभिभवन्ति साधुं ते पापास्ते

**दारकः**—वावादेध मम् । मुञ्चध आवुकम् । (क)

**चाण्डालः**—दीहाओ, एवं भणन्ते चिलं मे जीव । (ख)

**चारुदत्तः**—(सास्रं पुत्रं कण्ठे गृहीत्वा ।)

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः ।
अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ २३ ॥

('अंसेन बिभ्रत्–' (१०।२१) इत्यादि पुनः पठति । अवलोक्य स्वगतम् । 'अमी हि वस्त्रान्तनिरुद्धवक्त्राः' (१०।१६) इत्यादि पुनः पठति ।

**विदूषकः**—भो भद्दमुहा, मुञ्चध पिअवअस्सं चारुदत्तम् । मं वावादेध । (ग)

**चारुदत्तः**—शान्तं पापम् । (दृष्ट्वा स्वगतम् ।) अद्यावगच्छामि । ('समसंस्थित–' (१०।१६) इत्यादि पठति । प्रकाशम् । 'एताः पुनर्हर्म्यगताः स्त्रियो माम्' (१०।११) इत्यादि पुनः पठति ।)

**चाण्डालः**—ओशलध अज्जा, ओशलध ।

किं पेक्खध शप्पुलिशं अजशवशेण प्पणट्ठजीवाशम् ।
कूवे खण्डिदपाशं कञ्चणकलशं व्वि डुब्बन्तम् ॥२४॥ (घ)

(चारुदत्तः सकरुणम् 'शशिविमलमयूख–' (१०।१३) इत्यादि पठति ।)

**अपरः**—अले, पुणोवि घोशेहि । (ङ)

(चाण्डालस्तथा करोति ।)

---

(क) व्यापादयत माम् । मुञ्चत पितरम् ।

(ख) दीर्घायुः, एवं भणंश्चिरं मे जीव ।

(ग) भो भद्रमुखाः, मुञ्चत प्रियवयस्यं चारुदत्तम् । मां व्यापादयत ।

(घ) अपसरतार्याः, अपसरत ।

किं पश्यत सत्पुरुषमयशोवशेन प्रनष्टजीवाशम् ।
कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥

(ङ) अरे, पुनरपि घोषय ।

---

च चाण्डालाः ॥ २२ ॥ अमी हि त्वा देवा दावामर्धमद्यावगच्छामीत्यादि सर्वः स्वाधीन इत्यर्थः (?) **इदमिति** ॥ २३ ॥ **किं पेक्खधेति** । गाथा । किं प्रेक्षध्वं सत्पुरुषमयशोवशेन नष्टजीवनम् । कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥२४॥ कृष्यन्तं क्षिप्यमान(ण)म् । 'जीवाशं' 'जीवप्रत्याशं' इत्यपि पाठा-

**चारुदत्तः**—

प्राप्तोऽहं व्यसनकृशां दशामनार्यां
यत्रेदं फलमपि जीवितावसानम्।
एषा च व्यथयति घोषणा मनो मे
श्रोतव्यं यदिदमसौ मया हतेति ॥ २५ ॥

(ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः।)

**स्थावरकः**—(घोषणामाकर्ण्य सवैक्लव्यम्।) कधं अपावे चालुदत्ते वावादीअदि। हग्गे णिअलेण शामिणा बन्धिदे। भोदु। आक्कन्दामि। शुणाध अज्जा, शुणाध। अत्थि दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलण्डअजिण्णुज्जाणं वसन्तशेणा णीदा। तदो मम शामिणा मं ण कामेशित्ति कदुअ बाहुपाशबलक्कालेण मालिदा, ण उण एदिणा अज्जेण। कधम्। विदूलदाए ण को वि शुणादि। ता किं कलेमि। अत्ताणअं पाडेमि। (विचिन्त्य।) जइ एव्वं कलेमि, तदा अज्जचालुदत्ते ण वावादीअदि। भोदु। इमादो पाशादबालग्गपदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि। वलं हग्गे उवलदे, ण उण एशे कुलपुत्तविहगाणं वाशपादवे अज्जचालुदत्ते। एव्वं जइ विवज्जामि लद्धे मए पललोए। (इत्यात्मानं पातयित्वा।) ही ही। ण उवलदम्हि। भग्गे मे दण्डणिअले। ता चाण्डालघोशं शमण्णेशामि। (दृष्ट्वोपसृत्य।) हंहो चाण्डाला, अन्तलं अन्तलम्। (क)

---

(क) कथमपापश्चारुदत्तो व्यापाद्यते। अहं निगडेन स्वामिना बद्धः। भवतु। आक्रन्दामि। शृणुतार्याः, शृणुत। अस्तीदानीं मया पापेन प्रवहणपरिवर्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता। ततो मम स्वामिना मां न कामयस इति कृत्वा बाहुपाशबलात्कारेण मारिता, न पुनरेतेनार्येण। कथम्। विदूरतया न कोऽपि शृणोति। तत्किं करोमि। आत्मानं पातयामि। यद्येवं करोमि, तदार्यचारुदत्तो न व्यापाद्यते। भवतु। अस्याः प्रासादबालाग्रप्रतोलिकात एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि। वरमहमुपरतः, न पुनरेष कुलपुत्रविहगानां वासपादप आर्यचारु-

---

न्तरे। इदमपि यत्र फलमयशः ॥ **प्राप्त इति** ॥ २५ ॥ आक्रन्दामि विरौमि।

**चाण्डालौ**—अले, के अन्तलं मग्गेदि । (क)

(चेटः 'शुणाध' (२३५ पृष्ठे) इति पूर्वोक्तं पठति ।)

**चारुदत्तः**—अये,

कोऽयमेवंविधे काले कालपाशस्थिते मयि ।
अनावृष्टिहते सस्ये द्रोणमेघ इवोदितः ॥ २६ ॥

भोः, श्रुतं भवद्भिः ।

न भीतो मरणादस्मि केवलं दूषितं यशः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥ २७ ॥

अन्यच्च ।

तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना ।
शरेणेव विषाक्तेन दूषितेनापि दूषितः ॥ २८ ॥

**चाण्डालौ**—थावलअ, अवि शच्चं भणाशि । (ख)

**चेटः**—शच्चम् । हग्गे वि मा कश्श वि कधइश्शशि त्ति पाशादबालग्गपदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते । (ग)

(प्रविश्य ।)

**शकारः**—(सहर्षम् ।)

मंशेण तिक्खामिलकेण भत्ते शाकेण शूपेण शमच्छकेण ।
भुत्तं मए अत्तणअश्श गेहे शालिश्शकूलेण गुलोदणेण ॥ २९ ॥

---

दत्तः । एवं यदि विपद्ये लब्धो मया परलोकः । आश्चर्यम् । नोपरतोऽस्मि । भग्नो मे दण्डनिगडः । तच्चाण्डालघोषं समन्विष्यामि । हंहो चाण्डालाः; अन्तरमन्तरम् ।

(क) अरे, कोऽन्तरं याचते । (ख) स्थावरक, अपि सत्यं भणसि ।

(ग) सत्यम् । अहमपि मा कस्यापि कथयिष्यसीति प्रासादबालाग्रप्रतोलिकायां दण्डनिगडेन बद्ध्वा निक्षिप्तः ।

---

बालग्गपदोलिआए बालाग्रप्रतोलीतः । प्रासादभागादित्यर्थः ॥ **कोऽयमिति** ॥२६॥ **न भीत इति** ॥२७॥ **तेनेति** ॥२८॥ **मंशेणेत्यादि** । उपजातिच्छन्दः। मांसेन तिक्खामिलकेण तिक्ताम्लेन तप्तशाकेन सूपेन समत्स्यकेन । भुक्तं मयात्मनो गृहे शालेर्भक्तेन गुडोदनेन ॥ २९ ॥ भिन्नकांस्यवत्खङ्खणाए कटुखराया विकृतध्वन्याश्चाण्डालवाचः स्वरसंयोगः । यथा चैष उत्खालित उद्गतो वध्यडि-

(कर्णं दत्त्वा ।) भिण्णकंशखङ्खणाए चाण्डालवाआए शलशंजोए । जधा अ एशे उक्खालिदे वज्झडिण्डिमशद्दे पडहाणं अ शुणीअदि, तधा तक्केमि, दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति । ता पेक्खिश्शम् । शत्तुविणाशे णाम मम महन्ते हलक्कश्श पलिदोशे होदि । शुदं अ मए, जे वि किल शत्तुं वावादअन्तं पेक्खदि, तश्श अण्णश्शिं जम्मन्तले अक्खिलोगे ण होदि । मए क्खु विशगण्ठिगब्भपविट्टेण विअ कीडएण किं पि अन्तलं मग्गमाणेण उप्पादिदे ताह दलिद्दचारुदत्ताह विणाशे । शंपदं अत्तणकेलिकाए पाशादबालग्गपदोलिकाए अहिलुहिअ अत्तणो पलक्कमं पेक्खामि । (तथा कृत्वा दृष्ट्वा च ।) ही ही, एदाह दलिद्दचालुदत्ताह वज्झं णीअमाणाह एवड्डे जणशंमद्दे, जं वेलं अम्हालिशे पवले वलमणुश्शे वज्झं णीअदि तं वेलं कीदिशे भवे । (निरीक्ष्य ।) कधम् । एशे शे णवबलद्दके विअ मण्डिदे दक्खिणं दिशं णीअदि । अध किंणिमित्तं ममकेलिकाए पाशादवालग्गपदोलिकाए शमीवे घोशणा णिवड्डिदा, णिवालिदा अ । (विलोक्य ।) कधम्, थावलके चेडे वि णत्थि इध । मा णाम तेण इदो गदुअ मन्तभेदे कडे भविश्शदि । ता जाव णं अण्णेशामि । (क) (इत्यवतीर्योपसर्पति )

---

(क) मांसेन तिक्ताम्लेन भक्तं शाकेन सूपेन समत्स्यकेन ।
भुक्तं मयात्मनो गेहे शालीयकूरेण गुडौदनेन ॥ Boiled Rice

भिन्नकांस्यवत्खङ्खणायाश्चाण्डालवाचायाः स्वरसंयोगः । यथा चैष उद्गीतो वध्यडिण्डिमशब्दः पटहानां च श्रूयते, तथा तर्कयामि, दरिद्रचारुदत्तको वध्यस्थानं नीयत इति । तत्प्रेक्षिष्ये । शत्रुविनाशो नाम मम महान्हृदयस्य परितोषो भवति । श्रुतं च मया, योऽपि किल शत्रुं व्यापाद्यमानं पश्यति, तस्यान्यस्मिञ्जन्मान्तरेऽक्षिरोगो न भवति । मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन किमप्यन्तरं मृगयमाणेनोत्पादितस्तस्य दरिद्रचारुदत्तस्य

---

ण्डिमशब्दः श्रूयते पटहानां च शब्दस्तथा तर्कये । यः शत्रुं व्यापाद्यमानं प्रेक्षते तस्याक्षिणी शीतलायेते । विषकण्डिकामध्यप्रविष्टेन च कीटकेन । ही विस्मये । कथमित्यर्थः । एवड्डे एतावान् महान् । यस्यां वेलायां अस्मादृशो महान्वरमनुष्यो वध्यं वधस्थानं नीयते तस्यां वेलायां कीदृग्भवेत् । णवबलद्दके विअ नव-

**चेटः**—(दृष्ट्वा।) भट्टालका, एशे शे आगडे। (क)

**चाण्डालौ**—

ओशलध देध मग्गं दालं ढक्केध होध तुण्हीआ।

अविणअतिक्खविशाणे दुट्ठबइल्ले इदो एदि ॥ ३० ॥ (ख)

**शकारः**—अले अले, अन्तलं अन्तलं देध। (उपसृत्य।) पुश्तका थावलका चेडा, एहि। गच्छम्ह। (ग)

**चेटः**—ही ही अणज्ज, वशन्तशेणिअं मालिअ ण पलितुट्टे शि। शंपदं पणइजणकप्पपादवं अज्जचालुदत्तं मालइदुं ववशिदे शि। (घ)

**शकारः**—ण हि लअणकुम्भशलिशे हग्गे इत्थिअं वावादेमि। (ङ)

**सर्वे**—अहो, तुए मारिदा। ण अज्जचारुदत्तेण। (च)

---

विनाशः। सांप्रतमात्मीयायां प्रासादबालाग्रप्रतोलिकायामधिरुह्यात्मनः पराक्रमं पश्यामि। ही ही, एतस्य दरिद्रचारुदत्तस्य वध्यं नीयमानस्यैतावाञ्जनसंमर्दः, यस्यां वेलायामस्मादृशः प्रवरो वरमानुषो वध्यं नीयते तस्यां वेलायां कीदृशो भवेत्। कथम्। एष स नवबलीवर्द इव मण्डितो दक्षिणां दिशं नीयते। अथ किंनिमित्तं मदीयायाः प्रासादबालाग्रप्रतोलिकायाः समीपे घोषणा निपतिता, निवारिता च। कथम्, स्थावरकश्चेटोऽपि नास्तीह। मा नाम तेनेतो गत्वा मन्त्रभेदः कृतो भविष्यति। तद्यावदेनमन्विष्यामि।

(क) भट्टारकाः, एष स आगतः।

(ख) अपसरत दत्त मार्गं द्वारं पिधत्त भवत तूष्णीकाः।

अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति ॥

(ग) अरे अरे, अन्तरमन्तरं दत्त। पुत्रक स्थावरक चेटक, एहि। गच्छावः।

(घ) ही ही अनार्य, वसन्तसेनां मारयित्वा न परितुष्टोऽसि सांप्रतं प्रणयिजनकल्पपादपमार्यचारुदत्तं मारयितुं व्यवसितोऽसि।

(ङ) न हि रत्नकुम्भसदृशोऽहं स्त्रियं व्यापादयामि।

(च) अहो, त्वया मारिता। नार्यचारुदत्तेन।

---

वृषभ इव मण्डितः। वृषभशब्दः संभवन्नपि शकारभाषात्वात्त्यक्तः। कडे भवीअदि कृतो भविष्यति॥ **ओशलधेति**। गाथा। उत्सर्पत ददत मार्गं द्वारं पि-

**शकारः**—के एव्वं भणादि । (क)

**सर्वे**—(चेटमुद्दिश्य ।) णं एसो साहू । (ख)

**शकारः**—(अपवार्य सभयम्) अविद मादिके अविद मादिके, कधं थावलके चेडे शुश्टु ण मए शंजदे । एशे क्खु मम अकज्जश्श शक्खी । (विचिन्त्य ।) एव्वं दाव कलइश्शम् । (प्रकाशम् ।) अलिअं भश्टालका । हंहो, एशे चेडे शुवण्णचोलिआए मए गहिदे पिश्टिदे मालिदे बद्धे अ । ता किदवेले एशे जं भणादि किं शच्चम् । (अपवारितकेन चेटस्य कटकं प्रयच्छति । स्वैरकम् ।) पुश्तका थावलका चेडा, एदं गेण्हिअ अण्णधा भणाहि । (ग)

**चेटः**—(गृहीत्वा ।) पेक्खध पेक्खध भट्टालका । हंहो, शुवण्णेण मं पलोभेदि । (घ)

**शकारः**—(कटकमाच्छिद्य ।) एशे शे शुवण्णके, जश्श कालणादो मए बद्धे । (सक्रोधम् ।) हंहो चाण्डाला, मए क्खु एशे शुवण्णभण्डाले णिउत्ते शुवण्णं चोलअन्ते मालिदे पिश्टदे । ता जदि ण पत्तिआअध ता पिश्टिं दाव पेक्खध । (ङ)

**चाण्डालौ**—(दृष्ट्वा ।) शोहणं भणादि । वितत्ते चेडे किं ण प्पलवदि । (च)

---

(क) क एवं भणति । (ख) नन्वेष साधुः ।

(ग) हन्त, कथं स्थावरकश्चेटः सुष्ठु न मया संयतः । एष खलु ममाकार्यस्य साक्षी । एवं तावत्करिष्यामि । अलीकं भट्टारकाः । अहो, एष चेटः सुवर्णचोरिकया मया गृहीतस्ताडितो मारितो बद्धश्च । तत्कृतवैर एव यद्भणति किं सत्यम् । पुत्रक स्थावरक चेट, एतद्गृहीत्वान्यथा भण ।

(घ) पश्यत पश्यत भट्टारकाः । अहो, सुवर्णेन मां प्रलोभयति ।

(ङ) एतत्तत्सुवर्णकम्, यस्य कारणान्मया बद्धः । हंहो चाण्डालाः, मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन्मारितस्ताडितः । तद्यदि न प्रत्ययध्वं तदा पृष्ठं तावत्पश्यत ।

(च) शोभनं भणति । वितप्तश्चेटः किं न प्रलपति ।

---

दधत भवत तूष्णीकाः मौनिनः । अविनयतीक्ष्णविषाणो दुष्टवृषभ इत एति ॥ ३० ॥ पुश्तका पुत्रक ॥ न हि रत्नकुम्भसदृशोऽहं स्त्रियं मारयामि ॥ एष खलु

**चेटः**—हीमादिके, ईदिशे दाशभावे, जं शच्चं कंपि ण पत्ति-आअदि। (सकरुणम्।) अज्जचालुदत्त, एत्तिके मे विहवे। (क)
(इति पादयोः पतति।)

**चारुदत्तः**—(सकरुणम्।)

उत्तिष्ठ भोः पतितसाधुजनानुकम्पि-
न्निष्कारणोपगतबान्धव धर्मशील।
यत्नः कृतोऽपि सुमहान्मम मोक्षणाय
दैवं न संवदति किं न कृतं त्वयाद्य॥ ३१॥

**चाण्डालौ**—भट्टके, पिट्टिअ एदं चेडं णिक्खालेहि। (ख)

**शकारः**—णिक्कम ले। (इति निष्कामयति।) अले चाण्डाला, किं विलम्बेध। मालेध एदम्। (ग)

**चाण्डालौ**—जदि तुवलशि ता शअं ज्जेव मालेहि। (घ)

**रोहसेनः**—अले चाण्डाला, मं मारेध। मुञ्चध आवुकम्। (ङ)

**शकारः**—शपुत्तं ज्जेव एदं मालेध। (च)

**चारुदत्तः**—सर्वमस्य मूर्खस्य संभाव्यते। तद्गच्छ पुत्र, मातुः समीपम्।

**रोहसेनः**—किं मए गदेण कादव्वम्। (छ)

**चारुदत्तः**—

आश्रमं वत्स गन्तव्यं गृहीत्वाचैव मातरम्।
मा पुत्र पितृदोषेण त्वमप्येवं गमिष्यसि॥ ३२॥

---

(क) हन्त, ईदृशो दासभावः, यत्सत्यं कमपि न प्रत्यापयति। आर्यचारुदत्त, एतावान्मे विभवः।

(ख) भट्टक, ताडयित्वैतं चेटं निष्कासय।

(ग) निष्काम रे। अरे अरे चाण्डालाः, किं विलम्बध्वम्। मारयतैनम्।

(घ) यदि त्वरयसे तदा स्वयमेव मारय।

(ङ) अरे चाण्डालाः, मां मारयत। मुञ्चत पितरम्।

(च) सपुत्रमेवैतं मारयत। (छ) किं मया गतेन कर्तव्यम्।

---

ममाकार्यसाक्षी। किदवेले कृतवैरः॥ विहवे सामर्थ्यम्॥ **उत्तिष्ठेति**॥ ३१॥

तद्वयस्य, गृहीत्वैनं व्रज ।

**विदूषकः**—भो वअस्स, एव्वं तुए जाणिदम्, तुए विणा अहं पाणाइं धारेमि त्ति । (क)

**चारुदत्तः**—वयस्य, स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्यागः ।

**विदूषकः**—(स्वगतम् ।) जुत्तं णेदम् । तधा वि ण सक्कुणोमि पिअवअस्सविरहिदो पाणाइं धारेदुं त्ति । ता बम्हणीए दारअं समप्पिअ पाणपरिच्चाएण अत्तणो पिअवअस्सं अणुगमिस्सम् । (प्रकाशम् ।) भो वअस्स, पराणेमि एदं लहुम् । (ख) (इति सकण्ठग्रहं पादयोः पतति ।)

(दारकोपि रुदन्पतति ।)

**शकारः**—अले, णं भणामि शपुत्ताकं चालुदत्ताकं वावादेध त्ति । (ग)

(चारुदत्तो भयं नाटयति ।)

**चाण्डालौ**—णहि अम्हाणं ईदिशी लाआण्णत्ती, जधा शपुत्तं चालुदत्तं वावादेध त्ति । ता णिक्कम ले दालआ, णिक्कम । (इति निष्कामयतः ।) इमं तइअं घोशणट्ठाणम् । ताडेध डिण्डिमम् । (घ) (पुनर्घोषयतः ।)

---

(क) भो वयस्य, एवं त्वया ज्ञातम्, त्वया विनाहं प्राणान्धारयामीति ।

(ख) युक्तं न्विदम् । तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणान्धर्तुमिति । तद्ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि । भो वयस्य, परानयाम्येतं लघु ।

(ग) अरे, ननु भणामि सपुत्रकं चारुदत्तं व्यापादयतेति ।

(घ) न ह्यस्माकमीदृशी राजाज्ञप्तिः, यथा सपुत्रं चारुदत्तं व्यापादयतेति । तन्निष्क्राम रे दारक, निष्क्राम । इदं तृतीयं घोषणास्थानम् । ताडयेत डिण्डिमम् ।

---

तुवलशि त्वरसे ॥ **आश्रममिति** ॥ ३२ ॥ किं ओहशशीत्यादि । गाथा । किमवहससि हे ज्ञक (?) पुरुषं दृष्ट्वा दैवपर्यस्तम् । विदितं न त्वमत्पी (त्वी?) वत हे दुर्जन कृतान्तदंष्ट्रापुमारोहपि ॥ (?) पराणेमि परानयामि व्यावर्तयामि ॥ एत्ताए

**शकारः**—(स्वगतम् ।) कधं एशे ण पत्तिआअन्ति पौला । (प्रकाशम् ।) हंहो चालुदत्ता बडुका, ण पत्तिआअदि एशे पौलजणे । ता अत्तणकेलिकाए जीहाए भणाहि मए वशन्तशेणा मालिदेत्ति । (क)

(चारुदत्तस्तूष्णीमास्ते ।)

**शकारः**—अले चण्डालगोहे, ण भणादि चालुदत्तबडुके । ता भणावेध इमिणा जज्जलवंशखण्डेण शङ्खलेण तालिअ तालिअ । (ख)

**चाण्डालः**—(प्रहारमुद्यम्य ।) भो चालुदत्त, भणाहि । (ग)

**चारुदत्तः**—(सकरुणम् ।)

प्राप्यैतद्व्यसनमहार्णवप्रपातं
न त्रासो न च मनसोऽस्ति मे विषादः ।
एको मां दहति जनापवादवह्नि-
र्वक्तव्यं यदिह मया हता प्रियेति ॥ ३३ ॥

(शकारः पुनस्तथैव ।)

**चारुदत्तः**—भो भोः पौराः । ('मया खलु नृशंसेन' (९।३०,३८) इत्यादि पुनः पठति ।)

**शकारः**—वावादिदा । (घ)

**चारुदत्तः**—एवमस्तु ।

**प्रथमचाण्डालः**—अले, तव अत्त वज्झपालिआ । (ङ)

**द्वितीयचाण्डालः**—अले, तव । (च)

**प्रथमः**—अले, लेक्खअं कलेम्ह । (इति बहुविधं लेखकं कृत्वा ।)

---

(क) कथमेते न प्रत्ययन्ते पौराः । अरे चारुदत्त बटुक, न प्रत्ययते एष पौरजनः । तदात्मीयया जिह्वया भण मया वसन्तसेना मारितेति ।

(ख) अरे चाण्डालमनुष्य, न भणति चारुदत्तबटुकः । तद्भणयतानेन जर्जरवंशखण्डेण शङ्खलेन ताडयित्वा ताडयित्वा ।

(ग) भोश्चारुदत्त, भण । (घ) व्यापादिता ।

(ङ) अरे, तवात्र वध्यपालिका । (च) अरे, तव ।

---

एतावता । एवमेवेत्यर्थः । इदानीमित्येके ॥ सङ्खलेन वध्यपटहवादनदण्डेन । तालिअ ताडयित्वा ॥ **प्राप्येति** ॥ ३३ ॥ वज्झपालिआ वधपर्यायः ॥ अरे, तव ॥

अले, जदि ममकेलिका वज्झपालिआ, ता चिट्ठदु दाव मुहुत्तअम् । (क)

**द्वितीयः**—किंणिमित्तम् । (ख)

**प्रथमः**—अले, भणिदो म्हि पिदुणा शग्गं गच्छन्तेण, जधा—पुत्त वीरअ, जइ तुह वज्झपालिआ होदि, मा शहशा वावादअशि वज्झम् । (ग)

**द्वितीयः**—अले, किंणिमित्तम् । (घ)

**प्रथमः**—कदावि कोवि साहू अत्थं दइअ वज्झं मोआवेदि । कदावि लण्णो पुत्ते भोदि, तेण वद्धावेण शव्ववज्झाणं मोक्खे होदि । कदावि हत्थी बन्धं खण्डेदि, तेण शंभमेण वज्झे मुक्के होदि । कदावि लाअपलिवत्ते होदि, तेण शव्ववज्झाणं मोक्खे होदि । (ङ)

**शकारः**—किं किं लाअपलिवत्ते होदि । (च)

**चाण्डालः**—अले, वज्झपालिआए लेक्खअं कलेम्ह । (छ)

---

(क) अरे, लेखं कुर्मः । अरे, यदि मदीया वध्यपालिका, तदा तिष्ठतु तावन्मुहूर्तकम् ।

(ख) किंनिमित्तम् ।

(ग) अरे, भणितोऽस्मि पित्रा स्वर्गं गच्छता, यथा—पुत्र वीरक, यदि तव वध्यपालिका भवति, मा सहसा व्यापादयसि वध्यम् ।

(घ) अरे, किंनिमित्तम् ।

(ङ) कदापि कोऽपि साधुरर्थं दत्त्वा वध्यं मोचयति । कदापि राज्ञः पुत्रो भवति, तेन वृद्धिमहोत्सवेन सर्ववध्यानां मोक्षो भवति । कदापि हस्ती बन्धं खण्डयति, तेन संभ्रमेण वध्यो मुक्तो भवति । कदापि राजपरिवर्तो भवति, तेन सर्ववध्यानां मोक्षो भवति ।

(च) किं किं राजपरिवर्तो भवति ।

(छ) अरे, वध्यपालिकाया लेखं कुर्मः ।

---

वीरक इति चाण्डालनाम ॥ बन्धं खण्डेदि बन्धमाच्छिद्य प्रसरति ॥ चारुदत्ताकं अरे मारयितुं तव मया समर्पितः । त्वं मम कर्तव्यमित्यर्थः (?)॥ वयं चण्डालाः ।

**शकारः**—अले, शिग्घं मालेध चालुदत्ताकम् । **(क)** (इत्युक्त्वा चेटं गृहीत्वैकान्ते स्थितः ।)

**चाण्डालः**—अज्जचालुदत्त, लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे चाण्डाला । ता शुमलेहि जं शुमलिव्वम् । **(ख)**

**चारुदत्तः**—

प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात्कथंचित् ।
सुरपतिभवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥ ३४ ॥

भोः, क तावन्मया गन्तव्यम् ।

**चाण्डालः**—(अग्रतो दर्शयित्वा ।) अले, एदं दीशदि दक्खिण-मशाणम्, जं पेक्खिअ वज्झा झत्ति पाणाइं मुञ्चन्ति । पेक्ख पेक्ख ।

अद्धं कलेवलं पडिवुत्तं कड्ढन्ति दीहगोमाआ ।
अद्धं पि शूललग्गं वेशं विअ अट्टहाशश्श ॥ ३५ ॥ **(ग)**

**चारुदत्तः**—हा, हतोऽस्मि मन्दभाग्यः । (इति सावेगमुपविशति ।)

**शकारः**—ण दाव गमिश्शम् । चालुदत्ताकं वावादअन्तं दाव पेक्खामि । (परिक्रम्य दृष्ट्वा ।) कधं उवविश्टे । **(घ)**

---

(क) अरे, शीघ्रं मारयत चारुदत्तम् ।

(ख) आर्यचारुदत्त, राजनियोगः खल्वपराध्यति, न खलु वयं चाण्डालाः । तत्स्मर यत्स्मर्तव्यम् ।

(ग) अरे एतद्दृश्यते दक्षिणश्मशानम्, यत्प्रेक्ष्य वध्या झटिति प्राणान्मुञ्चन्ति । पश्य पश्य ।

अर्धं कलेवरं प्रतिवृत्तं कर्षन्ति दीर्घगोमायवः ।
अर्धमपि शूललग्नं वेश इवाट्टहासस्य ॥

(घ) न तावद्गमिष्यामि । चारुदत्तकं व्यापाद्यमानं तावत्पश्यामि । कथमुपविष्टः ।

---

नैवं कृतेऽस्माकं दोष इति भावः । विज्ञप्ये विज्ञापयामि । (?) शुमलिदव्वं स्मर्तव्यम् । **प्रभवतीति** । प्रबलपुरुषा नयनिर्णेतारः । तेषां वाक्यैर्भाग्यदोषाद्दूषितस्य यदि मे धर्मः प्रभवति तदा सैव वसन्तसेनैव स्वस्वभावेनात्मरूपतया व्यपनयतु ॥ ३४ ॥ गन्तव्यम् । तत्रैव मया मर्तव्यमित्यर्थः ॥ **अर्धमिति** ।

**चाण्डालः**—चारुदत्ता, किं भीदेशि । (क)

**चारुदत्तः**—(सहसोत्थाय ।) मूर्ख । ('न भीतो मरणादस्मि केवलं दूषितं यशः' ( १०।२७ ) इत्यादि पुनः पठति ।)

**चाण्डालः**—अज्जचालुदत्त, गअणदले पडिवशन्ता चन्दशुज्जा वि विपत्तिं लहन्ति । किं उण जणा मलणभीलुआ माणवा वा । लोए कोवि उट्ठिदो पडदि, कोवि पडिदोवि उट्ठेदि । उट्ठन्तपडन्ताह वशणपाडिआ शवश्श उण अत्थि । एदाइं हिअए कदुअ संधालेहि अत्ताणअम् । (द्वितीयचाण्डालं प्रति ।) एदं चउट्टं घोशणट्ठाणम् । ता उग्घोशम्ह । (ख)

(पुनस्तथैवोद्घोषयतः ।)

**चारुदत्तः**—हा प्रिये वसन्तसेने । ('शशिविमलमयूख' (१०।१२) इत्यादि पुनः पठति ।)

(ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च ।)

**भिक्षुः**—हीमाणहे, अट्ठाणपलिश्शन्तं शमश्शाशिअ वशन्तशेणिअं णअन्ते अणुग्गहिदम्हि पव्वज्जाए । उवाशिके, कहिं तुमं णइश्शम् । (ग)

**वसन्तसेना**—अज्जचारुदत्तस्स ज्जेव गेहम् । तस्स दंसणेण मिअलाञ्छणस्स विअ कुमुदिणिं आणन्देहि मम् । (घ)

---

(क) चारुदत्त, किं भीतोऽसि ।

(ख) आर्यचारुदत्त, गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते । किं पुनर्जना मरणभीरुका मानवा वा । लोके कोऽप्युत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते । उत्तिष्ठत्पततो वसनपातिका शवस्य पुनरस्ति । एतानि हृदये कृत्वा संधारयात्मानम् । एतच्चतुर्थं घोषणास्थानम् । तदुद्घोषयावः ।

(ग) आश्चर्यम् अस्थानपरिश्रान्तां समाश्वास्य वसन्तसेनिकां नयन्ननुगृहीतोऽस्मि प्रव्रज्यया । उपासिके, कुत्र त्वां नेष्यामि ।

(घ) आर्यचारुदत्तस्यैव गेहम् । तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीमानन्दय माम् ।

---

॥ ३५ ॥ अट्ठाणं बुद्धस्थानम् । जीर्णस्थानरूपमेव (?) । उपासिके ॥

**भिक्षुः**—(स्वगतम् ।) कदलेण मग्गेण पविशामि । (विचिन्त्य ।) लाअमग्गेण ज्जेव पविशामि । उवाशिके, एहि । इमं लाअमग्गम् । (आकर्ण्य ।) किं णु क्खु एशे लाअमग्गे महन्ते कलअले शुणीअदि । (क)

**वसन्तसेना**—(अग्रतो निरूप्य ।) कधं पुरदो महाजणसमूहो । अज्ज, जाणाहि दाव किं णेदं त्ति । विसमभरक्कन्ता विअ वसुंधरा एअवासोण्णदा उज्जइणी वट्टदि । (ख)

**चाण्डालः**—इमं अ पच्छिमं घोशणट्ठाणम् । ता तालेध डिण्डिमम् । उग्घोशेध घोशणम् । (तथा कृत्वा ।) भो चालुदत्त, पडिवालेहि । मा भाआहि । लहुं ज्जेव मालीअशि । (ग)

**चारुदत्तः**—भगवत्यो देवताः ।

**भिक्षुः**—(श्रुत्वा ससंभ्रमम् ।) उवाशिके, तुमं किल चालुदत्तेण मालिदाशि त्ति चालुदत्तो मालिदुं णीअदि । (घ)

**वसन्तसेना**—(ससंभ्रमम् ।) हद्धी हद्धी, कधं मम मन्दभाइणीए किदे अज्जचालुदत्तो वावादीअदि । भो, तुरिदं तुरिदं ओदेसेहि मग्गम् । (ङ)

---

(क) कतरेण मार्गेण प्रविशामि । राजमार्गेणैव प्रविशामि । उपासिके, एहि । अयं राजमार्गः । किं नु खल्वेष राजमार्गे महान्कलकलः श्रूयते ।

(ख) कथं पुरतो महाज्ञनसमूहः । आर्य, जानीहि तावत्किं न्विदमिति । विषमभरक्रान्तेव वसुंधरा एकवासोन्नतोज्जयिनी वर्तते ।

(ग) इदं च पश्चिमं घोषणास्थानम् । तत्ताडयत डिण्डिमम् । उद्घोषयत घोषणाम् । भोश्चारुदत्त, प्रतिपालय । मा भैः । शीघ्रमेव मार्यसे ।

(घ) उपासिके, त्वं किल चारुदत्तेन मारितासीति चारुदत्तो मारयितुं नीयते ।

(ङ) हा धिक् हा धिक्, कथं मम मन्दभागिन्याः कृत आर्यचारुदत्तो व्यापाद्यते । भोः, त्वरितं त्वरितमादिश मार्गम् ।

---

पडिवालेहि प्रतिपालय । क्षणं तिष्ठतीति ( तिष्ठेति ) मारणव्यापारपरोक्तिरियम् ॥ **आअट्टिए इति** । उद्गीतिः । आकर्षितः सरोषम् । मुष्टौ त्सरौ । मुष्टिना गृही-

**भिक्षुः**—तुवलदु तुवलदु बुद्धोवाशिका अज्जचालुदत्तं जीअन्तं शमश्शाशिदुम्। अज्जा, अन्तलं अन्तलं देध। (क)

**वसन्तसेना**—अन्तरं अन्तरम्। (ख)

**चाण्डालः**—अज्जचालुदत्त, शामिणिओओ अवलज्झदि। ता शुमलेहि जं शुमलिदव्वम्। (ग)

**चारुदत्तः**—किंबहुना। ('प्रभवति–'(१०।३४) इत्यादि श्लोकं पठति।)

**चाण्डालः**—(खड्गमाकृष्य।) अज्जचालुदत्त, उत्ताणे भविअ समं चिट्ठ। एक्कप्पहालेण मालिअ तुमं शग्गं णेम्ह। (घ)

(चारुदत्तस्तथा तिष्ठति।)

**चाण्डालः**—(प्रहर्तुमीहते। खड्गपतनं हस्तादभिनयन्।) ही, कधम्।

आअट्टिदे शलोशं मुट्टीए मुट्टिणा गहीदे वि।
धलणीएँ कीश पडिदे दालुणके अशणिशंणिहे खग्गे॥ ३६॥

जधा एदं संवुत्तम्, तधा तक्केमि ण विवज्जदि अज्जचालुदत्ते त्ति। भअवदि शज्झवाशिणि, पशीद पशीद। अवि णाम चालुदत्तश्श मोक्खे भवे, तदो अणुगहिदं तुए चाण्डालउलं भवे। (ङ)

---

(क) त्वरतां त्वरतां बुद्धोपासिकार्यचारुदत्तं जीवन्तं समाश्वासयितुम्। आर्याः, अन्तरमन्तरं दत्त। (ख) अन्तरमन्तरम्।

(ग) आर्यचारुदत्त, स्वामिनियोगोऽपराध्यति। तत्स्मर यत्स्मर्तव्यम्।

(घ) आर्यचारुदत्त, उत्तानो भूत्वा समं तिष्ठ। एकप्रहारेण मारयित्वा त्वां स्वर्गं नयामः।

(ङ) ही कथम्।

आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोऽपि।
धरण्यां किमर्थं पतितो दारुणकोऽशनिसंनिभः खड्गः॥

यथैतत्संवृत्तम्, तथा तर्कयामि न विपद्यत आर्यचारुदत्त इति। भगवति सह्यवासिनि, प्रसीद प्रसीद। अपि नाम चारुदत्तस्य मोक्षो भवेत्, तदानुगृहीतं त्वया चाण्डालकुलं भवेत्।

---

तोऽपि। धरण्यां किमिति निपतितो दारुणकोऽशनिसंनिभः खड्गः॥ ३६॥ सह्यवासिनि। सह्यः पर्वतविशेषः। तत्रस्थां दुर्गां स्वकुलदेवतां संबोधयति॥

**अपरः**—जधाणत्तं अणुचिट्ठम्ह । (क)

**प्रथमः**—भोदु । एव्वं कलेम्ह । (ख)

(इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः ।)

(चारुदत्तः 'प्रभवति' ( १०।३४) इत्यादि पुनः पठति ।)

**भिक्षुर्वसन्तसेना च**—(दृष्ट्वा ।) अज्जा, मा दाव मा दाव । अज्जा, एसा अहं मन्दभाइणी, जाए कारणादो एसो वावादीअदि । (ग)

**चाण्डालः**—(दृष्ट्वा ।)

का उण तुलिदं एशा अंशपडन्तेण चिउलभालेण ।
मा मेत्ति वाहलन्ती उट्ठिदहत्था इदो एदि ॥ ३७ ॥ (घ)

**वसन्तसेना**—अज्जचारुदत्त, किं णेदम् । (ङ) (इत्युरसि पतति ।)

**भिक्षुः**—अज्जचालुदत्त, किं णेदम् । (च) (इति पादयोः पतति ।)

**चाण्डालः**—(सभयमपसृत्य ।) कधम्, वशन्तशेणा । णं क्खु अम्हेहिं शाहू ण वावादिदे । (छ)

**भिक्षुः**—(उत्थाय ।) अले, जीवदि चालुदत्ते । (ज)

**चाण्डालः**—जीवदि वश्शशदम् । (झ)

**वसन्तसेना**—(सहर्षम् ।) पच्चुज्जीविदम्हि । (ञ)

---

(क) यथाज्ञप्तमनुतिष्ठावः । (ख) भवतु । एवं कुर्वः ।

(ग) आर्याः, मा तावन्मा तावत् । आर्याः, एषाहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते ।

(घ) का पुनस्त्वरितमेषांसपतता चिकुरभारेण ।
मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥

(ङ) आर्यचारुदत्त, किं न्विदम् । (च) आर्यचारुदत्त, किं न्विदम् ।

(छ) कथम्, वसन्तसेना । ननु खल्वस्माभिः साधुर्न व्यापादितः ।

(ज) अरे, जीवति चारुदत्तः । (झ) जीवति वर्षशतम् ।

(ञ) प्रत्युज्जीवितास्मि ।

---

**का उणेति** । गाथा । का पुनस्त्वरितमंसे पतता चिकुरभारेण । मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥ 'उच्छिअअ(ह)त्था' इति पाठे उच्छ्रितह-

**चाण्डालः**—ता जाव एदं वुत्तं राइण्णो जण्णवाडगदश्श णिवेदेम्ह । (क)

(इति निष्क्रामतः ।)

**शकारः**—(वसन्तसेनां दृष्ट्वा सत्रासम् ।) हीमादिके । केण गब्भदाशी जीवाविदा । उक्कन्ताइं मे पाणाइं । भोदु । पलाइश्शम् । (ख) (इति पलायते ।)

**चाण्डालः**—(उपसृत्य ।) अले, णं अम्हाणं ईदिशी लाआणत्ती—जेण शा वावादिदा, तं मालेध त्ति । ता लट्ठिअशालअं ज्जेव अण्णेशम्ह । (ग)

( इति निष्क्रान्तौ । )

**चारुदत्तः**—(सविस्मयम् ।)

केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि ।
अनावृष्टिहते सस्ये द्रोणवृष्टिरिवागता ॥ ३८ ॥

( अवलोक्य च ।)

वसन्तसेना किमियं द्वितीया समागता सैव दिवः किमित्थम् ।
भ्रान्तं मनः पश्यति वा ममैनां वसन्तसेना न मृताथ सैव ॥३९॥

अथवा ।

किं नु स्वर्गात्पुनः प्राप्ता मम जीवातुकाम्यया ।
तस्या रूपानुरूपेण किमुतान्येयमागता ॥ ४० ॥

**वसन्तसेना**—(सास्रमुत्थाय पादयोर्निपत्य ।) अज्जचालुदत्त, सा ज्जेव अहं पावा, जाए कारणादो इअं तुए असरिसी अवत्था पाविदा । (घ)

---

(क) तद्यावदेतद्वृत्तं राज्ञो यज्ञवाटगतस्य निवेदयावः ।

(ख) आश्चर्यम् । केन गर्भदासी जीवनं प्रापिता । उत्क्रान्ता मे प्राणाः । भवतु । पलायिष्ये ।

(ग) अरे, नन्वस्माकमीदृशी राजाज्ञप्तिः—येन सा व्यापादिता, तं मारयतेति । तद्राष्ट्रियश्यालमेवान्विष्यावः ।

(घ) आर्यचारुदत्त, सैवाहं पापा, यस्याः कारणादियं त्वयासदृश्यवस्था प्राप्ता ।

---

स्त्वर्थः ॥ ३७ ॥ **केयमिति** ॥ ३८ ॥ **वसन्तसेनेति** ॥३९॥ **किं न्विति**

(नेपथ्ये ।)

अच्चरिअं अच्चरिअम् । जीवदि वसन्तसेना । (क) (इति सर्वे पठन्ति ।)

**चारुदत्तः**—(आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्षगद्गदाक्षरम् ।) प्रिये, वसन्तसेना त्वम् ।

**वसन्तसेना**—सा ज्जेवाहं मन्दभाआ । (ख)

**चारुदत्तः**—(निरूप्य सहर्षम् ।) कथं वसन्तसेनैव । (सानन्दम् ।)

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता ॥ ४१ ॥

प्रिये वसन्तसेने,

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे ।
अहो प्रभावः प्रियसंगमस्य मृतोऽपि को नाम पुनर्ध्रियेत ॥४२॥

अपि च । प्रिये, पश्य ।

रक्तं तदेव वरवस्त्रमियं च माला
कान्तागमेन हि वरस्य यथा विभाति ।
एते च वध्यपटहध्वनयस्तथैव
जाता विवाहपटहध्वनिभिः समानाः ॥ ४३ ॥

**वसन्तसेना**—अदिदक्खिणदाए किं णेदं ववसिदं अज्जेण । (ग)

**चारुदत्तः**—प्रिये, त्वं किल मया हतेति

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।
नरके पतता तेन मनागस्मि निपातितः ॥ ४४ ॥

**वसन्तसेना**(कर्णौ पिधाय ।) सन्तं पावम् । तेण म्हि राअसालेण वावादिदा । (घ)

**चारुदत्तः**—(भिक्षुं दृष्ट्वा ।) अयमपि कः ।

---

(क) आश्चर्यमाश्चर्यम् । जीवति वसन्तसेना ।
(ख) सैवाहं मन्दभाग्या ।
(ग) अतिदक्षिणतया किं न्विदं व्यवसितमार्येण ।
(घ) शान्तं पापम् । तेनास्मि राजश्यालेन व्यापादिता ।

---

॥ ४० ॥ **कुत इति** । विद्या इतरविविक्तात्मज्ञानम् ॥ ४१ ॥ **त्वदर्थमिति** ॥ ४२ ॥ **रक्तमिति** । वरस्य जामातुरिव ॥ ४३ ॥ **पूर्वेति** ॥ ४४ ॥

**वसन्तसेना**—तेण अणज्जेण वावादिदा । एदिणा अज्जेण जीवाविदम्हि । (क)

**चारुदत्तः**—कस्त्वमकारणबन्धुः ।

**भिक्षुः**—ण पच्चभिजाणादि मं अज्जो । अहं शे अज्जश्श चलणशंवाहचिन्तए शंवाहके णाम । जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श केलके त्ति अलंकालपणणिक्कीदे म्हि । तेण अ जूदणिव्वेदेण शक्कशमणके शंवुत्ते म्हि । एशावि अज्जा पवहणविपज्जाशेण पुप्फकलण्डकजिण्णुज्जाणं गदा । तेण अ अणज्जेण ण मं बहु मण्णेशि त्ति बाहुपाशबलक्कालेण मालिदा । मए दिट्ठा । (ख)

( नेपथ्ये कलकलः ।)

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः ।
तदनु जयति कृत्स्नां शुभ्रकैलासकेतुं
विनिहतवरवैरी चार्यको गां विशालाम् ॥ ४५ ॥

(प्रविश्य सहसा)

**शर्विलकः**—

हत्वा तं कुनृपमहं हि पालकं भो-
स्तद्राज्ये द्रुतमभिषिच्य चार्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येऽहं व्यसनगतं च चारुदत्तम् ॥ ४६ ॥

---

(क) तेनानार्येण व्यापादिता । एतेनार्येण जीवं प्रापितास्मि ।

(ख) न प्रत्यभिजानाति मामार्यः । अहं स आर्यस्य चरणसंवाहचिन्तकः संवाहको नाम । द्यूतकरैर्गृहीत एतयोपासिकयार्यस्यात्मीय इत्यलंकारपणनिष्क्रीतोऽस्मि । तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि । एषाप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यानं गता । तेन चानार्येण न मां बहु मन्यस इति बाहुपाशबलात्कारेण मारिता । मया दृष्टा ।

---

केणापि । न एतद्व्यतिरिक्तेनान्येनेत्यर्थः । न प्रत्यभिजानाति । निर्वेदः शान्तिः वैषयिकेच्छानिवृत्तिः ॥ किमेतत्किमेतदिति शत्रूणां क्रूरः कलकलः ॥ **जयतीति ।** जयति सर्वोत्कर्षेण वर्धताम् ( वर्तते ) । तदनु जयति आत्मसात्करोति ॥ ४५ ॥ **हत्वेति ।** शेषभूतां पुष्पदामायमानाम् । गुणभूतामिति केचित् ॥ ४६ ॥

हत्वा रिपुं तं बलमन्त्रिहीनं पौरान्समाश्वास्य पुनः प्रकर्षात् ।
प्राप्तं समग्रं वसुधाधिराज्यं राज्यं बलारेरिव शत्रुराज्यम् ॥४७॥

(अग्रतो निरूप्य ।) भवतु । अत्र तेन भवितव्यम्, यत्रायं जनपदसमवायः । अपि नामायमारम्भः क्षितिपतेरार्यकस्यार्यचारुदत्तस्य जीवितेन सफलः स्यात् । (त्वरिततरमुपसृत्य ।) अपयात जाल्माः । (दृष्ट्वा । सहर्षम् ।) अपि ध्रियते चारुदत्तः सह वसन्तसेनया । संपूर्णाः खल्वस्मत्स्वामिनो मनोरथाः ।

दिष्ट्या भो व्यसनमहार्णवादपारा-
दुत्तीर्णं गुणधृतया सुशीलवत्या ।
नावेव प्रियतमया चिरान्निरीक्ष्ये
ज्योत्स्नाढ्यं शशिनमिवोपरागमुक्तम् ॥ ४८ ॥

तत्कृतमहापातकः कथमिवैनमुपसर्पामि । (अथवा ।) सर्वत्रार्जवं शोभते । (प्रकाशमुपसृत्य बद्धाञ्जलिः ।) आर्यचारुदत्त ।

**चारुदत्तः**—ननु को भवान् ।

**शर्विलकः**—

येन ते भवनं भित्त्वा न्यासापहरणं कृतम् ।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥ ४९ ॥

**चारुदत्तः**—सखे, मैवम् । त्वयासौ प्रणयः कृतः । (इति कण्ठे गृह्णाति ।)

**शर्विलकः**—अन्यच्च ।

आर्यकेणार्यवृत्तेन कुलं मानं च रक्षता ।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हतः ॥ ५० ॥

**चारुदत्तः**—किम् ।

**शर्विलकः**—

त्वद्यानं यः समारुह्य यतस्त्वां शरणं पुरा ।
पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः ॥ ५१ ॥

**हत्वेति** ॥ ४७ ॥ **दिष्ट्येति** ॥ ४८ ॥ **येनेति** ॥ ४९ ॥ **आर्यकेणेति** । यज्ञवाटो यज्ञस्थानम् । एतच्चापरिच्छिन्नजनसंमर्देन प्रमादस्थानम् । तेन सर्वो-

**चारुदत्तः**—शर्विलक, योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्यकनामा त्वया मोचितः ।

**शर्विलकः**—यथाह तत्रभवान् ।

**चारुदत्तः**—प्रियं नः प्रियम् ।

**शर्विलकः**—प्रतिष्ठितमात्रेण तव सुहृदार्यकेणोज्जयिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टम् । तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः । (परिवृत्य ।) अरे रे, आनीयतामयं पापो राष्ट्रियशठः ।

(नेपथ्ये ।)

यथाज्ञापयति शर्विलकः ।

**शर्विलकः**—आर्य, नन्वयमार्यको राजा विज्ञापयति—इदं मया युष्मद्गुणोपार्जितं राज्यम् । तदुपयुज्यताम् ।

**चारुदत्तः**—अस्मद्गुणोपार्जितं राज्यम् ।

(नेपथ्ये ।)

अरे रे राष्ट्रियश्यालक, एह्येहि । स्वस्याविनयस्य फलमनुभव ।

(ततः प्रविशति पुरुषैरधिष्ठितः पश्चाद्बाहुबद्धः शकारः ।)

**शकारः**—हीमादिके,

एव्वं दूलमदिक्कन्ते उद्दामे विअ गद्दहे ।
आणीदे क्खु हगे बद्धे हुडे अण्णे व्व दुक्कले ॥ ५२ ॥

(दिशोऽवलोक्य ।) शमन्तदो उवट्ठिदे एशे लश्टिअबन्धे । ता कं दाणिं अशलणे शलणं वजामि (विचिन्त्य ।) भोदु । तं ज्जेव अब्भुववण्णशलणवच्छलं गच्छामि । (इत्युपसृत्य ।) अज्जचालुदत्त, पलित्ताआहि पलित्ताआहि । (क) (इति पादयोः पतति ।)

---

(क) आश्चर्यम् ।

एवं दूरमतिक्रान्त उद्दाम इव गर्दभः ।
आनीतः खल्वहं बद्धः कुक्कुरोऽन्य इव दुष्करः ॥

समन्तत उपस्थित एष राष्ट्रियबन्धुः । तत्कमिदानीमशरणः शरणं व्रजामि । भवतु । तमेवाभ्युपपन्नशरणवत्सलं गच्छामि । आर्यचारुदत्त, परित्रायस्व परित्रायस्व ।

---

दार-
त्कटवध इति सूचयितुम् ॥ ५० ॥ त्वद्यानमिति ॥ ५१ ॥ एव्वमित्विशति ।

(नेपथ्ये !)

अज्जचालुदत्त, मुञ्च मुञ्च । वावादेम्ह एदम् । (क)

**शकारः**—(चारुदत्तं प्रति ।) भो अशलणशलणे, पलित्ताआहि । (ख)

**चारुदत्तः**—(सानुकम्पम् ।) अहह, अभयमभयं शरणागतस्य ।

**शर्विलकः**—(सावेगम् ।) आः, अपनीयतामयं चारुदत्तपार्श्वात् । (चारुदत्तं प्रति ।) ननूच्यतां किमस्य पापस्यानुष्ठीयतामिति ।

आकर्षन्तु सुबद्ध्वैनं श्वभिः संखाद्यतामथ ।
शूले वा तिष्ठतामेष पाट्यतां क्रकचेन वा ॥ ५३ ॥

**चारुदत्तः**—किमहं यद्ब्रवीमि तत्क्रियते ।

**शर्विलकः**—कोऽत्र संदेहः ।

**शकारः**—भश्टालआ चालुदत्त, शलणागदे म्हि । ता पलित्ताआहि पलित्ताआहि । जं तुए शलिशं तं कलेहि । पुणो ण ईदिशं कलिश्शम् । (ग)

(नेपथ्ये ।)

पौराः वावादेध । किंणिमित्तं पादकी जीवावीअदि । (घ)

(वसन्तसेना वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति ।)

**शकारः**—गब्भदाशीधीए, पशीद, पशीद । ण उण मालइश्शम् । ता पलित्ताआहि । (ङ)

**शर्विलकः**—अरे रे, अपनयत । आर्यचारुदत्त, आज्ञाप्यताम्—किमस्य पापस्यानुष्ठीयताम् ।

---

(क) आर्यचारुदत्त, मुञ्च मुञ्च । व्यापादयामैतम् ।

(ख) भो अशरणशरण, परित्रायस्व ।

(ग) भट्टारक चारुदत्त, शरणागतोऽस्मि । तत्परित्रायस्व परित्रायस्व । यत्तव सदृशं तत्कुरु । पुनर्नेदृशं करिष्यामि ।

(घ) पौराः, व्यापादयत । किंनिमित्तं पातकी जीव्यते ।

(ङ) गर्भदासीपुत्रि, प्रसीद प्रसीद । न पुनर्मारयिष्यामि । तत्परित्रायस्व ।

**चारुदत्तः**—किमहं यद्ब्रवीमि तत्क्रियते ।

**शर्विलकः**—कोऽत्र संदेहः ।

**चारुदत्तः**—सत्यम् ।

**शर्विलकः**—सत्यम् ।

**चारुदत्तः**—यद्येवं शीघ्रमयम्—

**शर्विलकः**—किं हन्यताम् ।

**चारुदत्तः**—नहि नहि । मुच्यताम् ।

**शर्विलकः**—किमर्थम् ।

**चारुदत्तः**—

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः

**शर्विलकः**—एवम् । तर्हि श्वभिः खाद्यताम् ।

**चारुदत्तः**—नहि ।

उपकारहतस्तु कर्तव्यः ॥ ५४ ॥

**शर्विलकः**—अहो, आश्चर्यम् । किं करोमि । वदत्वार्यः ।

**चारुदत्तः**—तन्मुच्यताम् ।

**शर्विलकः**—मुक्तो भवतु ।

**शकारः**—हीमादिके । पच्चुज्जीविदे म्हि । (क) (इति पुरुषैः सह निष्क्रान्तः ।)

(नेपथ्ये कलकलः ।)

(पुनर्नेपथ्ये ।)

एसा अज्जचालुदत्तस्स वहुआ अज्जा धूदा पदे वसणञ्चले विलग्गन्तं दारअं आक्खिवन्ती वाप्फभरिदणअणेहिं जणेहिं णिवारिज्जमाणा पज्जलिदे पावए पविसदि । (ख)

**शर्विलकः**—(आकर्ण्य नेपथ्याभिमुखमवलोक्य ।)कथं चन्दनकः । चन्दनक, किमेतत् ।

---

(क) आश्चर्यम् । प्रत्युज्जीवितोऽस्मि ।

(ख) एषार्यचारुदत्तस्य वधूरार्या धूता पदे वसनाञ्चले विलगन्तम् दारकमाक्षिपन्ती बाष्पभरितनयनैर्जनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति ।

**चन्दनकः**—(प्रविश्य ।) किं ण पेक्खदि अज्जो । महाराअप्पासादं दक्खिणेण महन्तो जणसंमद्दो वट्टदि । ('एसा' (२५५ पृष्ठे)इत्यादि पुनः पठति ।) कधिदं अ मए तीए, जधा—'अज्जे, मा साहसं करेहि । जीवदि अज्जचारुदत्तो' त्ति । परंतु दुक्खवावुडदाए को सुणेदि, को पत्तिआएदि । (क)

**चारुदत्तः**—(सोद्वेगम् ।) हा प्रिये, जीवत्यपि मयि किमेतद्व्यवसितम् । (ऊर्ध्वमवलोक्य दीर्घं निश्वस्य च ।)

न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते यदपि ।
उचितं तथापि परलोकसुखं न पतिव्रते तव विहाय पतिम् ॥५५॥

(इति मोहमुपगतः ।)

**शर्विलकः**—अहो प्रमादः ।

त्वरया सर्पणं तत्र मोहमार्योऽत्र चागतः ।
हा धिक्प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥ ५६ ॥

**वसन्तसेना**—समस्ससिदु अज्जो । तत्त गदुअ जीवावेदु अज्जाम् । अण्णधा अधीरत्तणेण अणत्थो संभावीअदि । (ख)

**चारुदत्तः**—(समाश्वस्य सहसोत्थाय ।) हा प्रिये, क्वासि । देहि मे प्रतिवचनम् ।

**चन्दनकः**—इदो इदो अज्जो । (ग)

(इति सर्वे परिक्रामन्ति ।)

(ततः प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन्विदूषकेणानुगम्यमानो रोहसेनो रदनिका च ।)

**धूता**—(सास्रम् ।) जाद, मुञ्चेहि मम् । मा विग्घं करेहि । भी-

---

(क) किं न पश्यत्यार्यः । महाराजप्रासादं दक्षिणेन महाञ्जनसंमर्दो वर्तते । कथितं च मया तस्यै, यथा—'आर्ये, मा साहसं कुरुष्व । जीवत्यार्यचारुदत्तः' इति । परंतु दुःखव्यापृततया कः शृणोति, कः प्रत्ययते ।
(ख) समाश्वसित्वार्यः । तत्र गत्वा जीवयत्वार्याम् । अन्यथाधीरत्वेनानर्थः संभाव्यते । (ग) इत इत आर्यः ।

---

**आकर्षन्न्विति** ॥ ५३ ॥ **शत्रुरिति** ॥ ५४ ॥ **न महीति** ॥ ५५ ॥

आमि अज्जउत्तस्स अमङ्गलाकण्णणदो । (क) (इत्युत्थायाञ्चलमाकृष्य पावकाभिमुखं परिक्रामति ।)

**रोहसेनः**—माद अज्जए, पडिवालेहि मम् । तुए विणा ण सक्कुणोमि जीविदं धारेदुम् । (ख) (इति त्वरितमुपसृत्य पुनरञ्चलं गृह्णाति ।)

**विदूषकः**—भोदीए दाव वम्हणीए भिण्णत्तणेण चिदाधिरोहणं पावं उदाहरन्ति रिसीओ ।(ग)

**धूता**—वरं पावाचरणे । ण उण अज्जउत्तस्स अमङ्गलाकण्णणम् । (घ)

**शर्विलकः**—(पुरोऽवलोक्य ।) आसन्नहुतवहार्या । तत्त्वर्यतां त्वर्यताम् ।

(चारुदत्तस्त्वरितं परिक्रामति ।)

**धूता**—रअणिए, अवलम्ब दारअम्, जाव अहं समीहिदं करेमि । (ङ)

**चेटी**—(सकरुणम् ।) अहं पि जधोवदेसिणिम्हि भट्टिणीए । (च)

**धूता**—(विदूषकमवलोक्य ।) अज्जो दाव अवलम्बेदु । (छ)

**विदूषकः**—(सावेगम् ।) समीहिदसिद्धिए पउत्तेण बम्हणो अग्गदो कादव्वो । अदो भोदीए अहं अग्गणी होमि । (ज)

**धूता**—कधं पच्चादिट्ठम्हि दुवेहिं । (बालकमालिङ्ग्य ।) जाद, तुमं ज्जेव पज्जवट्ठावेहि अत्ताणं अम्हाणं तिलोदअदाणाअ ।

---

(क) जात, मुञ्च माम् । मा विघ्नं कुरुष्व । बिभेम्यार्यपुत्रस्यामङ्गलाकर्णनात् ।

(ख) मातरार्ये, प्रतिपालय माम् । त्वया विना न शक्नोमि जीवितं धर्तुम् ।

(ग) भवत्यास्तावद्ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः ।

(घ) वरं पापाचरणम् । न पुनरार्यपुत्रस्यामङ्गलाकर्णनम् ।

(ङ) रदनिके, अवलम्बस्व दारकम् । यावदहं समीहितं करोमि ।

(च) अहमपि यथोपदेशिन्यस्मि भट्टिन्याः ।

(छ) आर्यस्तावदवलम्बताम् ।

(ज) समीहितसिद्धयै प्रवृत्तेन ब्राह्मणोऽग्रे कर्तव्यः । अतो भवत्या अहमग्रणीर्भवामि ।

---

त्वरयेति ॥ ५६ ॥ पुस्तकान्तरपाठदर्शनव्याख्या—**अहमेवेति** । पर्यवस्था-

अदिक्कन्ते किं मणोरहेहिं । (सनिःश्वासम् ।) ण क्खु अज्जउत्तो तुमं पज्जवट्ठाविस्सदि । (क)

**चारुदत्तः**—(आकर्ण्य सहसोपसृत्य ।) अहमेव पर्यवस्थापयामि बालिशम् । (इति बालकं बाहुभ्यामुत्थाप्य वक्षसालिङ्गति ।)

**धूता**—(विलोक्य ।) अम्महे । अज्जउत्तस्स ज्जेव सरसंजोओ । (पुनर्निपुणं निरूप्य सहर्षम् ।) दिट्ठिआ अज्जउत्तो ज्जेव एसो । पिअं मे पिअम् । (ख)

**बालकः**—(विलोक्य सहर्षम् ।) अम्मो । आवुको मं परिस्सजदि । (धूतां प्रति ।) अज्जए, वड्ढीअसि । आवुको ज्जेव मं पज्जवट्ठावेदि।(ग) (इति प्रत्यालिङ्गति ।)

**चारुदत्तः**—(धूतां प्रति ।)

हा प्रेयसि प्रेयसि विद्यमाने कोऽयं कठोरो व्यवसाय आसीत् ।
अम्भोजिनीलोचनमुद्रणं किं भानावनस्तंगमिते करोति ॥ ५७ ॥

**धूता**—अज्जउत्त, अदो ज्जेव सा अचेतणेत्ति चुम्बीअदि । (घ)

**विदूषकः**—(दृष्ट्वा सहर्षम् ।) ही ही भो, एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि । अहो सदीए पहावो, जदो जलणप्पवेशव्ववसाएण ज्जेव पिअसमागमं पाविदा । (चारुदत्तं प्रति ।) जेदु जेदु पिअवअस्सो । (ङ)

---

(क) कथं प्रत्यादिष्टास्मि द्वाभ्याम् । जात, त्वमेव पर्यवस्थापयात्मानमस्माकं तिलोदकदानाय । अतिक्रान्ते किं मनोरथैः । न खल्वार्यपुत्रस्त्वां पर्यवस्थापयिष्यति ।

(ख) आश्चर्यम् । आर्यपुत्रस्यैव स्वरसंयोगः । दिष्ट्यार्यपुत्र एवैषः । प्रियं मे प्रियम् ।

(ग) आश्चर्यम् । पिता मां परिष्वजति । आर्ये, वर्धसे । तात एव मां पर्यवस्थापयति । (घ) आर्यपुत्र, अतएव साऽचेतनेति चुम्ब्यते ।

(ङ) आश्चर्यं भोः, एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते । अहो सत्याः प्रभावः, यतो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता । जयतु जयतु प्रियवयस्यः ।

---

पनमाचार इति कृत्वा स्वयमेव क्षमोऽहमिति भावः ॥ **हा प्रेयसीति** ॥ ५७ ॥

**चारुदत्तः**—एहि मैत्रेय । (इत्यालिङ्गति ।)

**चेटी**—अहो संविधाणअम् । अज्ज, वन्दामि । (क) (इति चारुदत्तस्य पादयोः पतति ।)

**चारुदत्तः**—(पृष्ठे करं दत्त्वा ।) रदनिके, उत्तिष्ठ । (इत्युत्थापयति ।)

**धूता**—(वसन्तसेनां दृष्ट्वा ।) दिट्ठिआ कुसलिणी बहिणिआ । (ख)

**वसन्तसेना**—अहुणा कुसलिणी संवुत्तम्हि । (ग)

(इत्यन्योन्यमालिङ्गतः ।)

**शर्विलकः**—दिष्ट्या जीवितसुहृद्वर्ग आर्यः ।

**चारुदत्तः**—युष्मत्प्रसादेन ।

**शर्विलकः**—आर्ये वसन्तसेने, परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति ।

**वसन्तसेना**—अज्ज, कदत्थम्हि । (घ)

**शर्विलकः**—(वसन्तसेनामवगुण्ठ्य चारुदत्तं प्रति ।) आर्य, किमस्य भिक्षोः क्रियताम् ।

**चारुदत्तः**—भिक्षो, किं तव बहुमतम् ।

**भिक्षुः**—इमं ईदिशं अणिच्चत्तणं पेक्खिअ दिउणतले मे पव्वज्जाए बहुमाणे संवुत्ते । (ङ)

**चारुदत्तः**—सखे, दृढोऽस्य निश्चयः । तत्पृथिव्यां सर्वविहारेषु कुलपतिरयं क्रियताम् ।

**शर्विलकः**—यथाहार्यः ।

**भिक्षुः**—पिअं णो पिअम् । (च)

**वसन्तसेना**—संपदं जीवाविदम्हि । (छ)

**शर्विलकः**—स्थावरकस्य किं क्रियताम् ।

**चारुदत्तः**—सुवृत्त, अदासो भवतु । ते चाण्डालाः सर्वचा-

(क) अहो संविधानकम् । आर्य, वन्दे । (ख) दिष्ट्या कुशलिनी भगिनी ।
(ग) अधुना कुशलिनी संवृत्तास्मि । (घ) आर्य, कृतार्थास्मि ।
(ङ) इदमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणतरो मम प्रव्रज्यायां बहुमानः संवृत्तः ।
(च) प्रियं नः प्रियम् । (छ) सांप्रतं जीवापि ... 

ण्डालानामधिपतयो भवन्तु । चन्दनकः पृथिवीदण्डपालको भवतु । तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वमासीत्, वर्तमाने तथैवास्यास्तु ।

**शर्विलकः**—एवं यथाहार्यः । परमेनं मुञ्च मुञ्च । व्यापादयामि ।

**चारुदत्तः**—अभयं शरणागतस्य । ('शत्रुः कृतापराधः' (१०।५४) इत्यादि पठति ।)

**शर्विलकः**—तदुच्यतां किं ते भूयः प्रियं करोमिं ।

**चारुदत्तः**—अतःपरमपि प्रियमस्ति ।

लब्धा चारित्रशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः
　प्रोत्खातारातिमूलः प्रियसुहृदचलामार्यकः शास्ति राजा ।
प्राप्ता भूयः प्रियेयं प्रियसुहृदि भवान्संगतो मे वयस्यो
　लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम् ॥ ५८ ॥

कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
　कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
　न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥ ५९ ॥

तथापीदमस्तु भरतवाक्यम्—

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसंपन्नसस्या
　पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः ।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
　श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः ॥६०॥

(इति निष्क्रान्ताः सर्वे ।)

## संहारो नाम दशमोऽङ्कः ।

---

## समाप्तोऽयं ग्रन्थः ।

---

दिउणतले द्विगुणतरः ॥ **लब्धेति** । अचलां पृथ्वीम् ॥ ५८ ॥ **कांश्चिदिति** ॥ ५९ ॥ **क्षीरिण्य इति** ॥ ६० ॥

मृच्छकटिकविवृतिरियं गणपतिचित्तान्तपारपर्यन्ता ।
पृथ्वीधरकृतिरुपनयतु संतोषं कृतिसमुद्रे ॥

पनमा... शतं कृत्वा　　इति दशमोऽङ्कः ॥

# मृच्छकटिकस्थश्लोकानां सूची ।

# NOTES
## ON MṚICHCHHAKAṬIKA.

## Act I.

P. 1. L. 4–7 ( Verse 1 ). May S'ambhu's profound meditation concentrated upon Brahman because of the absorption caused by empty vision, protect you (the audience)—of S'ambhu whose knees are concealed under the cover of the serpent doubled in squatting posture, whose senses are restrained as the knowledge (of all external objects) is removed by the restraint of inner vital airs and who sees the Âtman, detached from all material instruments in himself by his eye of wisdom.'—[पर्यङ्क &c.] पर्यङ्कः पर्यस्तिका (आसनविशेषः) । 'पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च' इति मेदिनी । तस्य यो ग्रन्थिः रचनं तस्य बन्धेन द्विगुणितो द्विरावृतो यो भुजगस्तस्य य आश्लेषः संबन्धस्तेन संवीतौ आवृतौ जानू यस्य. ( Whose knees are covered or hidden on account of the close contact of the snake doubled in the squatting posture. ) पर्यङ्क. A particular kind of posture practised by the ascetics in meditation, sitting on the hams. It is the same as Vîrâsana which is thus defined by Vasiṣṭha :—'एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् । इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥' Cf. 'पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम्' Kumârasambhava III. 45. and Mallinâtha thereon.—[अन्तःप्राणावरोध &c.] अन्तः शरीरमध्ये प्राणानां शरीरस्थपञ्चवायूनां अवरोधेन व्युपरतानि निवृत्तानि सकल(बाह्य)ज्ञानानि अतएव रुद्धानि व्यावृत्तानि इन्द्रियाणि यस्य सः. (Whose senses are obstructed as the knowledge of external objects is removed completely by the stoppage of internal vital airs.)—[व्यपगतकरणं.] करणं (त्रयोदशविधम्—चक्षुरादीनि एकादशेन्द्रियाणि बुद्धिरहंकारश्च) तद् व्यपगतं यस्मात् तम् । निरिन्द्रियमित्यर्थः. (Destitute of organs of sense.) For करण Cf. 'वपुषा करणोज्झितेन सा' &c. Raghuvams'a VII. 38. 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः.—[शून्येक्षण &c.] शून्यं प्रपञ्चाभावः तस्य यदीक्षणं दर्शनं तेन घटितो यो लयः चित्तैकाग्रता, तत्प्रवणताविशेषो वा, तेन ब्रह्मणि लग्नः समासक्तः समाधिर्ध्यानं कर्तृ. (The profound meditation concentrated upon Brahman by the absorption caused by the sight of emptiness.)—The metre of the verse is स्रग्धरा, which is thus defined:— 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्.'

P. 2. L. 2–3 ( Verse 2 ). May the dark cloud like throat of Mahâdeva, whereon the creeper-like arm of Gaurî, ( Pârvatî ) shines like the streak of lightening, protect you ( the audience).—नीलकण्ठ. Mahâdeva, so called because of his dark–blue throat which was the result of the deadly poison, produced at the churning of

the ocean and swallowed by him.—अत्र रूपकानुप्राणितोपमालंकारः. The metre is अनुष्टुप्.

P. 2. L. 4. [नान्द्यन्ते.] नान्दी. (नन्दन्ति देवा अत्र, नन्द् + घञ् पृषोदरादित्वात् वृद्धिः + ङीप्). The term is particularly applied to the benedictory verse or verses recited as a sort of prologue at the beginning of a drama; benediction. Bharata thus defines it:—'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी । पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥' This Nândî consists of eight feet. The words नान्द्यन्ते, सूत्रधारः should precede the benediction, but put after it, indicate that the drama proper begins henceforth. Cf. Vis'vanâtha:—'अत एव प्राक्तनपुस्तकेषु नान्द्यन्ते सूत्रधार इत्यनन्तरमेव वेदान्तेष्वित्यादि श्लोकलिखनं दृश्यते' &c.

P. 2. L. 5. [सूत्रधारः.] Chief actor, the director of stage business. 'नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥'.—[परिषत् &c.] परिषदां सभ्यानां कुतूहलं नाट्यदर्शने औत्कण्ठ्यं तस्य विमर्दो नाशः (समयातिपातात्) तत्कारिणा. (Enough of this exertion which obstructs (*lit.* is the destroyer of) the curiosity of the audience.)

P. 2. L. 6. [मृच्छकटिकम्.] (चारुदत्तसुतरोहसेनक्रीडनार्थं) मृदा निर्मितं शकटमत्रास्तीति मृच्छकटिकम्. ('अत इनिठनौ' Pâṇ. 5, 2. 115) a Toy-cart. For the name *vide* p. 138:—

'रदनिका—एहि वच्छ, सअडिआए कीलम्ह ।

दारकः—रदणिए, किं मम एदाए मट्टिआसअडिआए । तं जेव सोवण्णसअडिअं देहि ।' &c.

P. 2. L. 7. [प्रकरणम्.] A species of Rûpaka or drama. Vis'vanâtha:—'भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ॥ सापायधर्मकामार्थपरो धीरप्रशान्तकः । नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ॥ तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः । कितवद्यूतकारादिविटचेटकसंकुलः ॥'. (In Prakaraṇa, the event should be a pure fiction drawn from real life and S'ṛingâra, the permanent sentiment. The hero may be a Brâhmaṇa, or a minister, or a merchant, and should be brave and calm, and longing for worldly enjoyments; the heroine may be a girl of high family or a courtesan. Because of the threefold heroes and heroines it is of three kinds.)

P. 2. L. 8–9. (Verse 3). There was a celebrated poet, whose gait was that of the King of elephants, whose eyes resembled those of the Chakora bird (perdix rufa), whose face was like the full moon, who had a beautiful body, was best of the twice born, possessed unfathomable courage and had the appellation of S'ûdraka.—[द्विजमुख्यतमः] द्विजेषु श्रेष्ठः, क्षत्रियजातिपुंगव इत्यर्थः.—Metre औपच्छन्दसिकः—'पर्यन्ते यौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्.'

P. 2. L. 11–12 and P. 3 L. 1–2 (Verse 4). S'ûdraka learnt the Ṛik and Sâmavedas, mathematics, fine arts, the management of

elephants, obtained, through the kindness of S'iva, eyes free from darkness ( ignorance ), beheld his son seated on the throne, performed the horse-sacrifice with highest pomp and splendour, attained the age of hundred years and ten days and ( at last ) entered the fire (*i.e.* terminated his life).—[वैशिकीं कलाम्.] वेशसंबन्धिनीं कलां नृत्यगीतादिकम्. Arts practised by harlots, or elegant arts.—[हस्तिशिक्षा.] The training or science of elephants. ( The Indians were remarkably efficient in this art even in Alexander's time.) The suicide of S'arabhanga (Râmâyaṇa, Araṇyakâṇda) might be compared. The announcement of his own death is ascribed to the author's prophetic foresight, the result of astrological computation. Cf. Prithvîdhara :—जातकादिगणितद्वारा ज्ञात्वा &c. But it seems that these verses are from another pen.—The metre is स्रग्धरा.

P. 3. L. 4–5 (Verse 5). The King S'ûdraka was passionately devoted to warfare, was void of sloth, best of those conversant with the Vedas and devout. He always longed for pugilistic encounter with the enemies' elephants.—[ककुदम्.] वरः, श्रेष्ठः. Foremost. 'ककुदं श्रेष्ठे वृषांशे च' इत्यमरः, ककुत् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राड्ध्वजे वरे' इति मेदिनी.—[परवारण &c.] (1) परवारणैः शत्रुहस्तिभिः सह बाहुभ्यां युद्धे लुब्धः लोलुपः. Fond of fighting hand to hand with the elephants of his foes. (2) परवारणाभ्यां शत्रुविमर्दकाभ्यां बाहुभ्यां युद्धे लुब्धः ( बाहुयुद्धविशारदः ) &c. Longing for the fight with arms, the repulsers of foes. (3) परे शत्रव एव वारणाः तैः. Desirous of pugilistic contest with elephants in the form of his foes.—Metre औपच्छन्दसिकम्.

P. 3. L. 7–8 (Verse 6). In the city of Avantî there was a young but exceedingly indigent leader of the Brâhmaṇas. His name was Chârudatta. A courtesan, Vasantasenâ by name and charming like the Vernal beauty, was enamoured of him because of his many excellences.—[द्विजसार्थवाहः.] द्विजेषु श्रेष्ठः वाणिज्यव्यवसायी *i. e.* captain of the caravan of Brâhmaṇas *i. e.* he was the hereditary headman of the Brâhmaṇas and merchant by occupation.—The metre is उपेन्द्रवज्राः—'उपेन्द्रवज्रा प्रथमे लघौ सा.' And the rhetorical figure उत्प्रेक्षा.

P. 3. L. 9–10 ( Verse 7). King S'ûdraka composed this drama based upon their happy sexual enjoyment. In it he exhibited the efficacy of righteous conduct, villainy of law, the temperament of the wicked, and inevitableness of fate.—[व्यवहारदुष्टता] refers to the villainy of administration of justice noticeable in the trial of Chârudatta.—[खलस्वभाव] alludes to the infamy of the royal brother-in-law.—The metre is वंशस्थविलम्ः—'वदन्ति वंशस्थविलं जतौ जरौ.'

P. 3. L. 12. [कुशीलवाः.] Actors. 'नटाश्चारणाश्च कुशीलवाः' अमरः.

P. 3. L. 13–14 (Verse 8). Deserted is the house of the sonless; time is desolate for one who has no faithful friend; quarters are

lonely for a fool; all is desolate to the poor.—[चिरशून्यम्.] चिरं दीर्घः कालः शून्यं अभिमतकार्यरहितम् *i. e.* 'time is blank,' an instance of Karmadhâraya Comp. Or it may be taken as an attribute to गृहम्, then it would mean the 'house of the friendless.' चिराय शून्यं is 'blank for a very long time.' Cf. Hitopades'a and Panchatantra :—'अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च । मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥'. Also Cf. वृद्धचाणक्य IV. 15. The stanza occurs in the Subhâshitaratna-bhâṇḍâgâra. The metre is Âryâ :—'यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्या ॥'.

P. 3. L. 15. [अनेन चिरसंगीतो &c.] Because of this singing for a long time in the hot season, my eyes, whose pupils are moving like the seed of the lotus, parched on account of the scorching rays of the Sun, emit, with hunger, khat-khat noise (*i. e.* ache).

P. 3. L. 17. [खटखटाय्] to crackle or hiss; an onomatopoetic term. Prithvîdhara connects the expression संगीतोपासनेन चक्षुषी खट-खटायेते with the nonsensical talk of S'akâra.—[अस्ति किंचित् प्रातराशो नः वा इति.] If there be anything for breakfast.

P. 3. L. 18. [कार्यवशात्] प्रयोजनवशात्, बोध्यायाः स्त्रियो झटिति ज्ञानं यथा स्यादित्यर्थः. So that my wife may comprehend me easily. Cf. 'कार्य-तश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः'—[प्रयोगवशात्] सुखप्रयोगयोग्यत्वात् *i. e.* as it is easy for use being free from difficult words.

P. 3. L. 19. [अविद् अविद्] इति निर्वेदे विस्मये वा. 'अदृष्टाश्रुतसंप्राप्तावविदा-विदभोःपदम्' इति.—[सुक्खपोक्खर &c.] My limbs are shrivelled like dry lotus-stalks.

P. 4. L. 2. [उववादिदम्.] Prepared.

P. 4. L. 4. [हीमाणहे.] An indeclinable, indicative of amazement. 'Hey-day!'

P. 4. L. 5. [संविहाणअम्.] समुद्योगः or आयोजनम्. (संविधीयते इति संविधा-नकम्. Arranging or disposing).—[आआमितण्डुल &c.] The street is full of long currents of rice-water.

P. 4. L. 6. [कसणसारा.] Spotted black and white, chiefly black.—[किदविसेसआ.] Having a frontal mark. विशेषक=drawing lines of painting on the face and person with coloured unguents and cosmetics. Cf. 'प्रत्याख्यातविशेषकं' &c. Mâlavikâgnimitra III. 5.

P. 4. L. 7. [सिणिद्धगन्धेण.] By the savoury smells.

P. 4. L. 8. [णिहाणं.] Hoarded treasure.—[आदु अहं जेव &c.] Or perhaps, I, being exceedingly hungry, take the world as consisting of food alone.

P. 4. L. 10. [पाणाधिअं &c.] I am dying of hunger.—प्राणात्ययम्. प्राणानामत्ययो विनाशोऽत्रेति क्रियाविशेषणम्.

P. 4. L. 11. [एक्का वण्णअं पीसेदि.] One grinds perfumes. (वर्ण—ण्वुल). Cf. 'अये, तत्किमिदमस्मद्गृहे महोत्सव इव दृश्यते। स्वस्वकर्मण्यधिकतरमभियुक्तः परिजनः। तथाहि।

वहति जलमियं पिनष्टि गन्धा-
नियमियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदमियं च पातकाले
मुहुरनुयाति कलेन हुंकृतेन ॥

भवतु। कुटुम्बिनीमाहूय पृच्छामि।'

Mudrârâkshasa P. 18. B. S. S.

P. 4. L. 12. [परमत्थं.] यथार्थवृत्तान्तम्. Reality.

P. 5. L. 3. [को णिओओ &c.] What are your behests. Cf. Mudrâ. P. 19.

P. 5. L. 9. [रसाअणं] *n.* Life-prolonging medicine, elixir of life. (It follows the gender of the word to which it refers.) Here it may be taken as an equivalent to 'delicious.' रसस्य अयनम्, सरसमिति यावत्.—[एव्वं दे &c.] So may all the deities fulfil your desires.

P. 6. L. 3. [आसा छिजिस्सदि &c.] refers to Vasantasenâ's crushing &c.

P. 6. L. 4. [वरण्डलम्बुओ.] A ball on a turret-top. वरण्ड (वृ+अण्डच्). The word is of doubtful meaning: it seems to mean an overhanging or projecting wall which if raised high is sure to topple down, so in the case of Sûtradhâra whose expectations were raised very high only to be cruelly disappointed.—Âpte. पृथ्वीधरः—वरण्डो दीर्घकाष्ठं तस्य लम्बुकः प्रान्तनिबद्धो मृत्तिकास्थूणः &c.—वरण्डः. Long stick. लम्बुकः. Column of clay, fastened to one end of it, which when raised falls down by its own weight. A particular mechanism in vogue in villages and used for taking out buckets of water from wells. Its Panjâbi name is ढिङ्गली.

P. 6. L. 9. [उवहार.] Offering.

P. 6. L. 10. [उववासो.] व्रतम्. Fast.

P. 6. L. 12. [अहिरूअवदी] अभिरूपः रमणीयः पतिर्येन प्राप्यते or यस्य फलं मनोहरपतिलाभः. [The giver of] desirable husband. 'प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः भेद्यलिङ्गा अमी' अमरः.

P. 8. L. 11. [वावुडो] कार्यान्तरासक्तः. Particularly engaged.

P. 8. L. 13. [संपण्णं] निष्पन्नम्. Prepared or ready.—[णीसवत्तं.] निःशत्रुकम्. Without a rival.

P. 9. L. 2. [पच्चादिट्ठो] निराकृतः. Discarded. Cf. S'âkuntala V. 31, 'कामं प्रत्यादिष्टां स्मरामि परिग्रहं मुनेस्तनयां' or 'प्रत्यादेशपरुषे भर्तरि' &c. Ibid. p. 211.

P. 9. L. 6. [आमुख] or प्रस्तावना (Prologue or prelude) is thus defined by Vis'vanâtha:—'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥'. It is an introductory dialogue between the manager and one of the actors or actresses. It is of five kinds: —'उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा । प्रवर्तकावगलिते पञ्च प्रस्तावनाभिदाः॥.'

P. 9. L. 7. [प्रावारहस्तः.] प्रावारः हस्ते यस्य. 'गड्वादेः सप्तम्यन्तं परम्' इति हस्तपदस्य परभावः. Maitreya enters the court with a mantle.—"The scene is supposed to represent a street on one side, and on the other the first court of Chârudatta's house; the outside of the house is also seen in the part next the street." प्रावारः. उत्तरीयवस्त्रम्. An upper garment, or a cloak. Cf. 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं च' इत्यमरः.

P. 9. L. 9. [पच्छिदव्वाइं.]=समीहितव्यानि. Desirable. Another reading is भक्खिदव्वाइं=भक्षितव्यानि.—[तुलीअसि.]=लघूकरोपि.

P. 9. L. 11. [उग्गार] Exudation.

P. 9. L. 12. [मल्लक] Cup. Another reading is गल्लक (गल्लर्क?). A cup of comfits and of colours respectively; with Vidûshaka and painter.

P. 10. L. 1. [रोमन्थाअमाणो] Pres. Part. Ruminating or chewing the cud. Cf. S'âkuntala II. छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु. (रोमन्थ —रोमं मथ्नाति—मंथ अण् पृषो० गलोपः.)

P. 10. L. 7. [गिहदेवदा.] A tutelary deity.

P. 11. L. 1–4. (Verse 9). The offerings at my threshold were formerly eaten by the geese and multitude of cranes at once. Now the collection of seeds chewed by the mouth of the insects falls on those very thresholds which are overgrown with grass.—देहली. 'गृहावग्रहणी देहल्यङ्गनम्' अमरः.—सारस. Indian crane. Ardea sibirica.—[विलुप्तपूर्वः] पूर्वं विलुप्तः.—[विरूढ०] विरूढा उपचितास्तृणाङ्कुरा यासु.—[बीजाञ्जलिः] Cavity of hands full of seeds, a scant tribute.—Metre वसन्ततिलकम्. —'ज्ञेयं वसन्ततिलकं तभजा जगौ गः.' Rhetorical Fig. पर्याय. The verse occurs in the Vâmanâlankâra Sûtravṛitti p. 60.

P. 11. L. 8. [सर्वकालमित्रं.] Friend in all seasons, a true friend equal in prosperity and adversity.

P. 11. L. 17–18. (Verse 10). Happiness, following miseries, looks pleasant like the sight of the lamp amidst dense darkness. But the man who falls from affluence to penury is really dead and exists only being supported by body. *I. E.* Virtually he is non-existent but looks otherwise being covered with body or form just like a water-skin. The stanza occurs in the सुभाषितरत्नभाण्डागार.—Metre वंशस्थविलम्.

P. 12. L. 2-3 ( Verse 11 ). From the ( two ) poverty and death I select the latter and not the former. Death is suffering of short-duration; penury an endless affliction. Cf. Hitopades'a:— वरं वनं व्याघ्रगजेन्द्रसेवितं &c. This verse occurs in the सुभाषितरत्नभाण्डागार and also in the Hitopades'a but in this form:—दारिद्र्यान्मरणाद्वापि दारिद्र्यमवरं स्मृतम् । अल्पक्लेशेन मरणं दारिद्र्यमतिदुःसहम् ॥.' P. 14.—Metre is आर्या.

P. 12. L. 4. पणइजण &c. Whose riches is only transferred to friends and deserving poor.

P. 12. L. 5. सुरजणपीदसेसस्स. That has been drunk by the deities. Cf. the Vâyupurâṇa:—'On the full moon, the gods adore the planet for one night and from the first day, all of them, together with the pitṛis and ṛishis, drink one kalâ or digit daily until the ambrosia is exhausted.' Also cf. Nirûkta (B. I. Edition) p. 59 vol. III.

P. 12. L. 8-11. (Verse 12.) I do not grieve for wealth. This alone afflicts me that the guests abandon my house because of its being penniless, just as the wandering black bees reject the elephantine temples at the end of the (intoxicating) season as the thick line of rut thereon has been parched up.—[संशुष्कसान्द्रमदलेखम् ] संशुष्काः सान्द्राः निविडाः मदलेखाः मदक्षरणरेखाः यस्मिन् तम्. On which the streak of ichor is dried up.—[ कालात्यये ]. मदक्षरणसमयावसाने. At the time when rut does not come out of the temples.—The rhe torical figure is उपमा and metre वसन्ततिलकम्.

P. 12. L. 12. [ भो वअस्स &c. ] O friend, these sons of slaves, the riches, like the morning meals, remain there where nobody eats them, just as cow-herds, afraid of gad-fly, dwell in a forest.— Maitreya means to say that the person, who is niggardly, is affluent. He compares wealth to morning meal which will remain as it is unless it is eaten away. So riches.—[अत्थकल्लवत्ता] कल्यं प्रत्यूषः तत्र वर्तन्ते अर्थाश्च ते कल्यवर्ताः, अर्थकल्यवर्ताः अर्थरूपप्रातराशाः.

P. 12. L. 13. [ वरडा. ] 'गन्धोली वरटा द्वयोः' अमरः. ( वृ + अटन्. शकादिभ्योऽटन्). A wasp or a variety of it.—[दारआ.] Boy (दृ + ण्वुल्) and breakfast in the form of wealth.

P. 12. L. 16-17 and P. 13. L. 1-2. (Verse 13). Truly I have no anxiety, caused by the destruction of wealth; indeed riches come and depart as the luck is good or bad, (*lit.* according to the succession of fate). This really burns me that persons loosen their friendship with one (*i. e.* me) whose purse is exhausted. [ नष्टधन० ] नष्टं धनं यस्य तादृश आश्रय आलयो यस्य निर्धनस्येत्यर्थः. *i. e.* of the indigent. —Metre Vasantatilaka. Rhetorical Figure विरोधाभास.

P. 13. L. 4-7. (Verse 14.) Man gets shame ( embarrassment ) from penury, overcome with shame he is deprived of dignity, devoid

of it he is subject to disgrace which gives him disgust, disgusted he obtains anxiety, overwhelmed with sorrow he is abandoned by intellect, destitute of intellect he perishes at last. Oh! indigence is the source of all misfortunes. Cf. 'बुद्धिनाशात् प्रणश्यति.'—The Verse occurs in the Hitopades'a, and the सुभाषितरत्नभाण्डागार.—Metre शार्दूलविक्रीडितम्:—'मः सो जः सजसा दिनेशऋतुभिः शार्दूलविक्रीडितम्.' Rhetorical Figure कारणमाला.

P. 13. L. 11-14 (Verse 15). Poverty is the abode of anxiety, utter disgrace, another enmity, the (cause of) scorn of the companions, producer of dislike of the general public and kinsmen; begets desire for going to the wood, and brings disgrace from the wife. It is a dormant fire of sorrow. It does not burn but is constantly tormenting.— [परपरिभवः]. (1) परः अधिकः परिभवः *i. e.* utmost dishonour. Or (2) परस्य परिभवोऽर्थात् परकर्तृकपरिभवः *i. e.* disgrace wrought by others.—[स्वजन०.] स्वजनाः बन्धवः. ('बन्धुस्वस्वजनाः समाः' इत्यमरः.) जनाः अपरे लोकाश्च तेषां विद्वेषस्य करणं कृतिः. सर्वे दरिद्रं द्विषन्ति. All hate the indigent.—The verse is cited in the Subhâshitaratnabhâṇḍâgâra. Cf. 'वरं वनं व्याघ्रगजेन्द्रसेवितम्' &c.—Metre शिखरिणीः—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी.' Rhetorical Figure कारकदीपक and मालारूपक.

P. 13. L. 16. [मातृभ्यः] (मान् पूजायाम् तृच् नलोपः Uṇ. 2-94) Divine mothers.—Mâtṛi is an epithet of divine mothers said to attend on S'iva, but usually on Skanda. They are usually regarded to be eight:—'ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा । कौमारी चैव चामुण्डा चर्चिकेत्यष्टमातरः ॥.' Some say they are only seven:—'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । माहेन्द्री चैव वाराही चामुण्डा सप्त मातरः ॥,' while others count them as sixteen.

P. 14. L. 6-7 (Verse 16). The gods, adored through asceticism, mind, hymns, and oblations, are always pleased towards devotees. Away with criticism!—Metre अनुष्टुप्.

P. 14. L. 12. [विडा.] Vis'vanâtha thus defines विटः—'संभोगहीनसंपद् विटस्तु धूर्तः कलैकदेशज्ञः । वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥'. Viṭa (gen. paramour, sensualist) in dramas is the companion of a prince, dissipated young man or of a courtezan. He is expert in singing, music and poetry, a parasite, on familiar terms with his associate. He is verbose, sweet and esteemed in assembly.—[चेडा.] A servant. As no character is to enter without previous intimation the approaching entrance of Vasantasenâ and her pursuers is skilfully announced here through Maitreya's speech. Cf. 'नासूचितस्य प्रवेशः'.

P. 15. L. 2. [नेपथ्ये.] Behind the scenes.

P. 15. L. 4. [शकारः.] Defn. 'मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः । सोऽयमनूढा भ्राता राज्ञः श्यालः शकार इत्युक्तः ॥' Sâhityadarpaṇa 3. 80. S'akâra is the brother of a King's concubine, the brother-in-law of the king. He is a mixture of pride, folly and vanity, of low family and raised to power by reason of his relation to the King. In this play he plays a prominent part. He is here represented as vain, light, frivolous and constantly referring to his high connection, extremely cruel, a blockhead and destitute of what is called virtue. He is called S'akâra because he uses S'akârî dialect. Cf. 'शकारभाषाप्रायत्वात् शकारो राष्ट्रियः स्मृतः.' The Viṭa, Cheṭa &c. are the companions of Sṛingâra. Cf. Sâhityadarpaṇa:—'शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः । भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाशुद्धाः ॥'.

P. 15. L. 6–9 (Verse 17). Why do you run like a female deer, terrified because of the pursuit of the hunter and tossing around. You whose delicacy is removed in fear, who ply your feet, expert in dancing ( to and fro ) and whose eye is troubled, tremulous and contracted towards the corners.—[ परिवर्तितसौकुमार्या. ] परिवर्तितं द्रुततरगमनाय परित्यक्तं सौकुमार्यं यया सा. Who has given up her tenderness for quick motion.—[नृत्य.] नृत्यप्रयोगे विशदौ पटू. Nimble in dancing. —[उद्विग्न॰.] उद्विग्नं व्याकुलं चञ्चलं च यथा तथा कटाक्षे नेत्रप्रान्ते विसृष्टा दत्ता प्रेरिता दृष्टिर्यया सा. Who has contracted her eyes at the ends and is casting tremulous glances fearfully around (so as to see the pursuers).— Metre वसन्ततिलक. Figure उपमा.

P. 15. L. 11–14 (Verse 18). Why do you go, run, ply and stumble. Young lady! be pleased, you will not die, stop please, poor creature! my heart is really burning with love like a piece of meat on the blazing coals.—[याशि &c.] Tautological expression characteristic with the S'akâra. Cf. 'अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धं च शकारवचनं विदुः ॥'. His speech is full of [ श s'] which replaces ष and स (Cf. षसोः शः). Hence the name.—[वाशू.] बाले. 'बाला स्याद्वासूः' इत्यमरः.—[हडके.] Sanskrit हृदय is हडक्क in Prâkrit. ड and ल are interchangeable, one क् is dropped for the sake of the metre. Cf. Persian 'Halaq.' Metre—Vasantatilaka.

P. 15. L. 6 and P. 16 L. 1. (Verse 19). You, O my elder sister, fly in terror, like a pea-hen in summer with a tail in full feather; my master is leaping about like a cock in a thicket.—[ अन्तिका ] or अत्तिका. Elder sister. Another translation is अन्तिकात् मम, from me.—Metre उपजातिः—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम ॥.'

P. 16 L. 3–6 (Verse 20). Why do you run away trembling like the young plantain, wearing the red garment whose skirt is shaken by the wind, throwing multitude of buds of red lotuses and thus resembling the bed (*lit.* cave) of red arsenic shattered

by the axe.—[पवन०.] पवनेन लोला चञ्चला दशा अञ्चलभागो यस्य तम्. Whose edge is tremulous.—[टङ्कः.] 'प्रस्तरविदारणसाधनास्त्रविशेषः, 'टङ्कः पाषाणदारणः' अमरः. (टंक् + अच्) A stone-cutter's chisel.—[मनःशिल.] Red arsenic. It is generally feminine (मनःशिला). Here it is masculine. 'मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका । नैपाली कुनटी गोला' अमर.—Metre वसन्ततिलक. Figure मालोपमा.

P. 16. L. 8–11 (Verse 21). You increase my love (*i. e.* inflame a passion in me); take away sleep when I am in bedstead in the night, (*i. e.* deprive me of rest) [but] now fly in terror stumbling at every step. You have fallen into my hands as Kuntî fell into those of Râvaṇa.—मदनं, अनङ्गं, मन्मथम्—tautology. (पुनरुक्तम्).—[भअभीदा.] Senseless (अपार्थम्).—[ लावणश्शेव कुन्ती. ] Comparison is broken here (हतोपमम्). By every sentence of संस्थानक his ignorance is remarkably evinced. Similarly his pretensions. Kuntî had nothing to do with Râvaṇa, the Lord of Lankâ. It was Sîtâ who fell into his hands. Cf. 'आगमलिङ्गविहीनं देशकलान्यायविपरीतम् । व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥.'—Metre मालिनी.

P. 17. L. 2–5 ( Verse 22 ). Why do you outstrip me and run like the female serpent overwhelmed with fear for Garuḍa—O you of a beautiful form, I can, when running fastly and impetuously, stop the very wind, but to restrain you I make no effort.—[पदैर्मम &c.] *Lit.* excelling my feet with yours, *i. e.* outrunning me.—[विशेषयन्ती.] अतिक्रामन्ती. मत्तोऽपि द्रुततरं गच्छन्ती.—[पतगेन्द्र.] The lord of birds–Garuḍa–the vehicle of Vishnu.—[प्रविसृतः] प्रचलितः.—[ पवनं न रुन्ध्याम् ? ]=वातं न निरुणध्मि अपि तु रुणध्म्येव. A clearer reading is 'पवनं निरुन्ध्याम्.'—रुन्ध्यां. 1st, sing. precative ( लिङ् ) of रुध् 'to obstruct, impede.'—Metre वसन्ततिलकम्.

P. 17. L. 7–10 ( Verse 23 ). She is the passifier of carnal appetite of the pilferers, fish-eater, figurante, of depressed–nose, destroyer of family, untamable, casket of love, prostitute, depository of beautiful ornaments, harlot, and concubine. I have addressed her by these ten names still she does not love me.—[ णाणकमूशि० ] नाणकं बहुमूल्यं रत्नविशेषं मुष्णाति इति नाणकमोषी तस्करः. तस्य कामकशिका कामनाशिनी. Who fulfils the thieves' desire for sexual intercourse. Bad characters like these only resort to them. Cf. Sâhityadarpaṇa. 'तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥.' According to Prithvîdhara:–नाणं शिवाङ्कं टङ्कादिवित्तं तस्य मोषणशीलः कामो यस्य तस्य कशिका चर्मकाष्ठिका &c. *i. e.* the taper lash of filcher of coins.—नाणकं. A coin; anything stamped with an impression. Cf. Yâjnavalkya 2, 240.—[ णिण्णाशा. ] निम्ननासा. Having depressed nose; or प्रशस्तनासाशून्या. Destitute of beautiful nose. —[ कुलणाशिका. ] वेश्यासक्तपुरुषाणां पत्नीषु प्रेमराहित्यात् अजातपुत्रत्वात् कुलध्वंसः. Generally the sensualists, lewd and ardently attached to prostitutes

die issueless.—[शुवेशणिलआ.] शोभनानां वेशानामलंकाराणां निलय आश्रयो यस्यां सा. Who is the receptacle of good ornaments.—Metre शार्दूलविक्रीडितम्. Samsthânaka addressed Vasantasenâ by so many appellations to secure her grace. So does a person who longs for the favour of a god. 'यदि देवताया अष्टौ दश द्वादशनामानि पठ्यन्ते तदा सा प्रसन्ना भवति, नेयं तथा.' Cf. the repetition of 12 names of Gaṇeṣa at the commencement of any undertaking.

P. 18. L. 2–3 (Verse 24). Why do you fly us, you are oppressed with terror, and your cheeks are rubbed by the tossing earrings, you thus resemble the lute shaken by the nails of the voluptuaries, and a crane, afraid of thunder of the clouds.—[ प्रचलित० ] प्रचलिताभ्यां कुण्डलाभ्यां गण्डयोर्घृष्टं पार्श्वं यस्या सा:. She is compared to a lute because of the twinkling produced by the pendants tossing against her cheeks.—[ घट्टिता. ] संचालिता. Played upon.—Rhetorical figure मालोपमा. Metre पुष्पिताग्राः—'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा.'

P. 18. L. 5–8 ( Verse 25 ). Why do you ply like Draupadî afraid of Râma, emitting jingle mixed with twinkling of manifold ornaments. Here I forcibly seize you at once as Hanumân did Subhadrâ, the sister of Vis'vâvasu.—Metre Vasanta-tilaka.—द्रौपदी—&c. हनुमान् &c. Nonsensical similies. Neither Draupadî the wife of the Pâṇḍavas, had anything to do with Râma, the hero of the Râmâyaṇa, nor Hanumân with Subhadrâ who in turn was not the sister of Vis'vâvasu but of Kṛishṇa and was carried off by Arjuna.—विश्वावसु. A demi-god, सिद्धराजविशेषः.

P. 18. L. 10–11 (Verse 26). O Vasantasenâ, sport with him who is beloved of the King, and eat flesh and fish. The dogs do not prey upon carrion as they get fish and flesh.—[ एदेहिं० ] अस्य गृहे एतावन्ति प्रचुराणि मत्स्यमांसानि सन्ति यत् शुनां मृतदेहेषु प्रवृत्तिरेव न भवति. His house abounds with flesh and fish so much so that dogs live upon them and not for carrion.—Metre is मात्रासमकम्.

P. 19. L. 2–5 ( Verse 27 ). What for do you walk in terror and amazement like guardian goddess of the city, you who wear girdle placed on your slender waist, charming and sparkling because of its starlike gems, and have countenance ( pale ) like the rubbed powder of red-arsenic.—[ताराविचित्र०.] ताराभिः मुक्ताभिः विचित्रं रुचिरं मनोहरं च रशनाकलापं मेखलाभूषणम्.—[ निर्मथित०.] निर्मथिता विलेपिता चूर्णमनःशिला यत्र तादृशेन वक्त्रेण उपलक्षिता. Marked by the face, having a paint of red-arsenic, or निर्मथितचूर्णमनःशिलातुल्येन. Which is pale like powdered red-arsenic.—Metre वसन्ततिलकम्. Figure उपमा.

P. 19. L. 7–8 (Verse 28). You run hastily and impetuously and are hotly pursued by us as is the female jackal by hounds in a forest, you carrying off my heart and its pericardium.—[ शवे-

इणं ]=(1) सवेष्टनं. The heart and its envelopes, and the Prâkrit शवेण्टणं=सवृन्तम्=समूलबन्धम्.

P. 20 L. 4–5 [ वसन्तशेणिए &c. ]. O Vasantasenâ, call bud and blossom and cuckoo or all spring together. The servants of the heroine are, in connexion with her name, called पल्लव a shoot, माधविका a creeper. Hence the mistake of S'akâra.

P. 20. L. 7–8 ( Verse 29 ). What can Bhîmasena do for you? or the son of Jamadagni ( Paras'urâma ) or the son of Kuntî? or Râvaṇa himself. Taking the hair in my hands I shall act like Duhs'âsana.—[दुश्शाशण०] alludes to the dragging of Draupadî by the hair. Metre इन्द्रवज्रा.

P. 20. L. 10–13 ( Verse 30 ). Sharp is the sword and caressed the forehead. Should I cut off the head or kill ( you ). Enough of this running of yours; one who is about to die does not survive. मुमूर्षुः—Desiderative adj. of the root मृ, to perish; moribund.—[कप्पेम] I cut. Cf. Punjâbi कप्पना. Metre—वंशस्थेन्द्रवज्रोपेन्द्रवज्रादिभिर्द्वादशैकादशवर्णैर्विजात्युपजातिः ॥

P. 21. L. 5–6. [इमादो०] Do you seek my ornaments.

P. 21. L. 7. [शान्तम्.] Interjection of repugnance or disgust. Samsthânaka assumes it to be श्रान्तं (fatigued) which also becomes s'ânta in Prâkrit.

P. 21. L. 16. [शवामि भावश्श०] An affronting adjuration.

P. 22. L. 1. [पश्चाणुपश्चिआए.] Following or keeping close to one's heels.

P. 22. L. 1. [आहिण्डन्ते]=आहिण्डमानः—Roaming about.

P. 22. L. 4. [ वेशवासविरुद्धं. ] Out of or against the character of harlots.

P. 22. L. 6–9 (Verse 31). Please see that brothel is the free resort of youth; also remember that a courtesan is like a creeper growing by a road. You have a person which is an article for sale to be taken away by wealth; therefore, O good one! welcome equally the amiable and the disgusting. वेशः (विश् + घञ्) + वासः—Residence of harlots. Metre—मालिनी—'ननमयययुतेयं मालिनी भोगिलोकैः.' Rhetorical figure—दीपक.

P. 22. L. 11–14 (Verse 32). The wise Brahman and the idiotic outcast bathe in a tank alike. A crow also bends the blooming creeper which is already bent by a peacock. S'ûdras (lit. others) cross (the rivers) by the same boat which conveys the Brahmans, the Kshatriyas and the Vais'yas. You are a courtesan and so like a tank, a creeper, and a boat welcome [ *i. e.* succumb to ] all alike. —[नाम्यति]=नमयति—bends down. नमनं नामः—नामं करोति–णिङ् ततः क्विप्, ततश्च यत्वे कृते नाम्यतीति रूपसिद्धिः अथवा गुणमकृत्वा नामं करोतीत्यर्थे यणादेशे

